उत्तरोत्तरातिरिक्तया सत्तया पूर्वपूर्वसत्तायां तत्प्रतीतिव्यवहाराद्युपपादने चानवस्था कथङ्कारं वारयितुं शक्या ? । यदि च स्वरूपसत्त्वमादायैव सत्तायां सत्प्रतीतिर्न तु तदर्थमपरापरसत्ताऽन्वेषणं तदा प्रथमयाऽपि सत्तयाऽतिरिक्तयाऽलं स्वरूपसत्तया यथा तत्र सत्प्रतीतिस्तथैव द्रव्यादिष्वपि सा भविष्यति । न चैवं स्वरूपसत्त्वानामननुगतत्वादनुगतप्रतीतिर्नैतावतोपपादिता स्यादिति वाच्यम्, भवतामप्यतिरिक्तसत्ताऽभ्युपगमेऽपि तस्यां पुनरतिरिक्तसत्तानभ्युपगमेन तत्प्रतीतेरुपपादनस्याशक्यत्वात् । न च न्यायनये सत्तैकैव, सा द्रव्यगुणकर्मसु समवायेन वर्तमाना सत्प्रतीतिजननी, सामान्यविशेषसमवायेषु च स्वसमवायिसमवेतत्वसम्बन्धेन तथा, अभावश्च सप्तमः पदार्थः सन्निति प्रतीतिविषयो भवत्येव नेति न तदर्थं तस्य सम्बन्धान्तरान्वेषणम्, अत एव समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्नसत्तानिष्ठप्रतियोगिताकाभाव एवाभावत्वमामनन्ति नैयायिका इति वाच्यम्, समानाकारकप्रतीतेस्सम्बन्धभेदमुपादायोपपादनस्य स्वशिष्यगोष्ठीष्वेव मानार्हत्वात् । प्रकारभेदे यथा प्रतीतेरननुगतत्वं तथा सम्बन्धभेदेऽपीति तदनाकलनमपि तत्रैव शोभत इति वाच्यम् । एवं सत्यर्थक्रियाकारित्वलक्षणसत्त्वस्य सौगतानुमतस्य दोषगणास्पृष्टस्य सत्प्रतीतिनियामकत्वसम्भवे तदतिरिक्तसत्त्वनिर्वचनस्य तथाप्यायासमात्रत्वात् । न चैवम्भूतं सत्त्वं प्रतिक्षणमर्थक्रियाकारित्वे सत्येव वस्तुनि घटते, अर्थक्रियाकारिता च सतामेव भवितुमर्हति, अन्यथा शशशृङ्गादीनामपि सा स्यादिति तेऽपि सन्तः प्रसज्येरन्निति वाच्यम्, तत्तत्कार्यम्प्रति तत्तत्कुर्वद्रूपत्वेनैव कारणत्वेन शशशृङ्गादितः कस्यापि कार्यस्यानुदयेन तत्र कुर्वद्रूपत्वस्य किञ्चित्कार्यनिरूपितस्याभावेन ततोऽर्थक्रियाया अभावे तेषां सत्त्वापत्तेरलभ्यत्वात् । न चैवं सत्यर्थक्रियाकारित्वलक्षणं सत्त्वं कार्येऽनुपयुक्तमेवापतितं तत्र कुर्वद्रूपत्वस्यैव प्रयोजकत्वकक्षीकरणात्, केवलं सत्सदिति प्रतीत्यनुरोधेनैव तदभ्युपेयम्, सत्सदिति प्रतीतिश्च सविकल्पकरूपा न सौगतदर्शने प्रामाण्यमाकलयति, तन्मते निर्विकल्पकस्यैव प्रमाणतया कक्षीकारात् । सा च प्रतीतिः तत्कुर्वद्रूपाद्विकल्पान्तरादित एवेति विकल्पे निर्विषयतयाऽभ्युपगते विषयस्याहेतुत्वेन सत्त्वस्य कस्यचिदनभ्युपगमेऽपि सन् सन्निति प्रतीत्युपपत्तौ न तदर्थं सत्ताकल्पना ज्यायसी । किञ्चार्थक्रियाकारित्वलक्षणसत्त्वमपि किञ्चिदर्थक्रियाकारि न वा ?, अन्त्ये न तस्य सत्त्वमिति असता तेन कथमन्यस्य सत्त्वं ?, स्वयमसतोऽन्यस्य सत्करणे प्रावीण्यासम्भवात्, अन्यथा शशशृङ्गादिनाऽपि सत्त्वोपपत्तावर्थक्रियाकारित्वलक्षणसत्त्वाभ्युपगमेनाप्यलम् । आद्ये अर्थक्रियाकारित्वेऽप्यर्थक्रियाकारित्वमापतितम्, तच्चात्माश्रयभयादन्यदेवास्थेयम्, तस्यापि च सत्त्वोपपत्तयेऽर्थक्रियाकारित्वमप्यभ्युपेयमेवं तस्यापीति दुर्निवारोऽनवस्थासमवतारः । किञ्च प्रतिव्यक्ति अर्थक्रिया भिन्नेति तन्निरूपितमर्थक्रियाकारित्वमपि नानास्वरूपमिति कथन्तस्यानुगतसत्सदितिप्रतीतिनियामकत्वम् । अननुगतस्याप्यनुगतप्रतीतिनियामकत्वे स्वरूपसतां वस्तूनामेव तदस्त्वित्यलमर्थक्रियाकारित्वलक्षणसत्त्वकल्पनया । परिभाषा तु न वस्तुस्वरूपप्ररूपणे फलवती । किञ्चैतन्मतस्यैकान्तक्षणभङ्गाभ्युपगमसमुत्थस्य नार्थक्रियासिद्धिस्थानत्वम् । न हि स्वरूपतो व्यापारतो वा कार्यक्षणाननुयायिनो निरन्वयध्वस्तस्यार्थक्रिया घटत इति वाच्यम्, एवमपि कपिलदर्शनावदातमेकान्तकान्तं सत्त्वरजस्तमोगुणमयत्वमेव सत्त्वमुररीक्रियताम्, तदपि मतं द्रव्यार्थिकनयमूलकत्वाद् भवतां कथञ्चिदनुमतमेवेति तत एव निरूपितस्वरूपे तस्मिन्निरूपणान्तरप्रयास आयासमात्रफलक एवेति । तस्य चानुगतत्वं तत्त्वकौमुद्यां वाचस्पतिमिश्रेण स्पष्टमभ्यधायि, तद्यथा—"एकैव स्त्री रूपयौवनकुलशीलसम्पन्ना स्वामिनं सुखाकरोति, तत्कस्य हेतोः ? तम्प्रति तस्याः सत्त्वगुणसमुद्भवात्, सैव सपत्नीर्दुःखाकरोति ताः प्रति तस्या रजोगुणसमुद्भवात्, सैव तामलभमानं जनान्तरं मोहयति तम्प्रति तस्यास्तमोगुणसमुद्भवात्" इत्यादिग्रन्थेन । तथा च स्त्रीदृष्टान्तेन सर्वस्य वस्तुनस्त्रिगुणप्रभवत्वेन कार्यकारणयोस्तादात्म्यात्त्रिगुणमयत्वमिति तदेव सत्त्वमिति । न चैवन्तन्मते जीवानां चैतन्यमात्रस्वरूपाणां कूटस्थनित्यानां कार्यकारणभावकथाविमुखानां त्रिगुणमयत्वरूपसत्त्वाभावान्न सदिति प्रतीतिविषयत्वं स्यादिति तेषामन्यदेव सत्त्वं वाच्यमित्यनेनुगमस्तत्रापि दुरुद्धर एवेति वाच्यम्, जडमात्रे त्रिगुणमयत्वं सत्त्वं जीवानाञ्च चैतन्यमयत्वं सत्त्वमिति सत्त्वद्वयकल्पनया सामञ्जस्यात् । न च एकस्या एवाबलायाः स्वामिगतरत्यादिस्वगतसौन्दर्यादिगुणसहकार्य्युपष्टम्भेन स्वामिगतसुखजनकत्वं सपत्नीगतद्वेषादिस्वगततत्प्रतिकूलाचरणादिसौन्दर्यादिसहकारिसम्बलनेन सपत्नीगतदुःखजनकत्वं नरान्तरगतस्वकामुकत्वस्वगततदस्वीकारादिबोधकाचरणशीलत्वादिगुणसहकारेण तद्गतमोहजनकत्वमित्येवं सत्त्वादिगुणास्वीकारेऽप्युपपत्तौ न सत्त्वादिगुणमयत्वं कस्यापि स्वीकार्यं, नापि प्रकृत्यादिप्रक्रियायां प्रमाणं, कार्यकारणतादात्म्यवादश्च तेषां सत्कार्यवादसमाश्रयेण, सत्कार्यवादे चोत्पादविनाशौ आविर्भावतिरोभावावेव, सत्कार्यवादश्च कापिलानां जीवनभूत एव तमन्तरेण कार्यकारणयोस्तादात्म्यस्योपपादयितुमशक्यत्वात् । कार्यकारणयोस्तादात्म्यादेव च कूटस्थचैतन्यपुरुषस्य न किमपि कार्यम्प्रति कर्तृत्वं यतस्तथा सति कार्यतादात्म्यमापन्नस्य तस्य कार्यनाशे सति नाशस्स्यात्, सत्कार्यवादश्च "असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्" इतीश्वरकृष्णकारिकयोपपादितोऽस्ति । तथा चोत्पत्तिकारणतयाऽभिमतस्याविर्भाव

एव व्यापार', विनाशकारणतयाऽभिमतस्य च तिरोभाव एव व्यापारः । तत्राविर्भावोऽपि सत्स्वरूप एव तैरुपगन्तव्योऽन्यथाऽसत्कार्यवादस्तत्र प्रविशन् तद्दृष्टान्तेनान्यत्रापि प्रविशन्न निरोद्धुं शक्येत । एवञ्च तत्र कारकव्यापारवैफल्यप्रसङ्गमीत्याऽऽविर्भावस्याप्याविर्भावस्तस्याप्याविर्भाव इति नीत्या एकाऽनवस्था, एवं तिरोभावस्याप्याविर्भावो वाच्योऽन्यथा तस्मिन्नपि सति कारकव्यापारवैफल्यं स्यात्, सोऽपि सन्नेवेति तत्रापि कारकवैफल्यमनुषज्येतेति तस्याप्याविर्भाव इति रीत्या द्वितीयाऽनवस्था, एवं यस्य तिरोभावस्तस्यैवाविर्भावो वाच्योऽन्यथाऽऽविर्भूतस्याविर्भाववैयर्थ्यमित्याविर्भावस्याविर्भावान्यथानुपपत्त्या तिरोभावो वाच्यस्तस्य चोपमर्दमन्तरेणाविर्भावस्याविर्भावासम्भवात्तिरोभावस्यापि तिरोभावो वाच्य एवन्तस्यापीत्येवन्तत्राप्यनवस्थेत्यनेकानवस्थादुस्थत्वादविचारितरमणीयमेव तन्मतमिति तदभ्युपगता सत्ता न सत्प्रतीतिमाधातुं प्रत्यलेति वाच्यम् । एवं सत्युत्तरमीमांसामीमांसामांसला निर्वचनीयतावादिवेदान्त्यभ्युपगता सत्तैव प्रातीतिकव्यावहारिकपारमार्थिकरूपेण त्रिधा भिद्यमाना सत्प्रतीतिमाधातुं प्रत्यला पुरस्क्रियताम् । वेदान्तमतस्यापि च शुद्धद्रव्यार्थिकनयभेदपरसङ्ग्रहनयप्रसूतत्वेन भवदभ्युपगतत्वमेव, तस्य व्यवस्था चैवम्—यत्र भवद्भिर्विपरीतख्यातिरभ्युपेयते तत्र वेदान्तिनाऽनिर्वचनीयख्यातिराश्रिता, शुक्तिकायां रजतभ्रमे टङ्कशालास्थितरजतगतव्यावहारिकरजतत्वस्य न भानं तत्कारणस्य तेन सममिन्द्रियसन्निकर्षस्याभावात्, किन्तु शुक्तिरजतमेव तदानीं प्रतीतिसमकालीनमनिर्वचनीयं चाकचिक्यादिदोषसहकृताविद्यामहिम्नोत्पन्नं सदवभासते तस्य प्रातीतिकसत्त्वम्, उत्तरकाले नेदं रजतमिति व्यावहारिकप्रमाणज्ञानेन तस्य बाधात् प्रातीतिकस्य ब्रह्मज्ञानेतरज्ञानबाध्यत्वात्, घटपटादीनां च व्यावहारिकसत्त्वं तेषां व्यवहारकाले बाधाभावात्, किन्तु निर्विकल्पकब्रह्मज्ञानेन 'तत्त्वमसि' इति महावाक्यसमुत्थब्रह्मसाक्षात्काररूपेण तेषां बाधः, अतो ब्रह्मज्ञानातिरिक्तज्ञानाबाध्यत्वमेव तेषां व्यावहारिकसत्त्वम्, ब्रह्मणश्च त्रिकालाबाध्यत्वरूपं पारमार्थिकसत्त्वमिति प्रातीतिकव्यावहारिकयोर्बाध्यत्वेऽपि नासत्त्वं किन्तु सत्त्वासत्त्वाभ्यां विचारासहत्वलक्षणमनिर्वचनीयत्वमेव, तत्र सत्त्वं त्रिकालाबाध्यत्वम्, असत्त्वञ्च न तद्विरहः किन्तु चिद्भिन्नत्वे सति क्वचिदप्युपाधावप्रतीयमानत्वम्, तच्च शशशृङ्गादीनामेव, ते च न क्वचिदप्यधिकरणे प्रतीयन्ते, प्रातीतिकं च शुक्तिरूप्यादि शुक्त्यवच्छिन्नचैतन्ये कल्पितं तत्र प्रतीयते, व्यावहारिकाश्च घटादयो शुद्धचैतन्ये कल्पितास्तत्र प्रतीयन्त एव । यद्यपि ब्रह्मापि न क्वचिदप्युपाधौ प्रतीयते तथापि न तस्य चिद्भिन्नत्वमिति नासत्त्वप्रसङ्गः, इत्थञ्चासद्विविक्तत्वलक्षणं सत्त्वमेव त्रितयानुगतं सत्प्रतीतिनियामकमिति नाननुगमोऽपि, मायावादे चास्मिन् परापादितानि दूषणानि भूषणान्येव, अत एव तद्वादिनो वादजल्पौ विहाय कथाया वितण्डामेवाश्रयन्ति । तेषां स्वपक्षस्थापनप्रयासाभावेन परपक्षखण्डनत एव स्वाभीष्टसिद्धेः, अत एव खण्डनखण्डखाद्ये—

"नात्यापत्त्या प्रमामात्रात्ते तेऽर्थाः स्वीक्रियोचिताः । तद्धियस्तदुरीकारे स्वाश्रयं कश्चिकितस्तु ॥ १ ॥
अथान्यः स विशेषश्चेत्तद्धीत्वं कश्चिदिष्यते । दत्त साकारवादाय विष्टर' स्पष्टमेव हि ॥ २ ॥
अर्थाद्युत्थाश्रवो धर्मा नानुमात्वादयो यथा । तद्धीत्वमपि तद्वत्स्यादित्यर्थोऽनर्थमाविशेत् ॥ ३ ॥
सोऽपि वा धीविशेषः किं स्वीकार्यस्तद्धियं विना । एवं च सोऽपि सोऽपीति नान्तः सोपानधावने ॥ ४ ॥
समस्तलोकशास्त्रैक्यमत्यमाश्रित्य नृत्यतो । का तदस्तु गतिस्तत्तद्वस्तुधीव्यवहारयो' ॥ ५ ॥
उपपादयितुं तैस्तैर्मतैरशकनीययोः । अनिर्वक्तव्यतावादपादसेवा गतिस्तयोः ॥ ६ ॥"

इति खण्डनडिण्डिमः । न चैतन्मतस्य विवर्त्तवादप्रधानत्वेन ब्रह्मैव जगद्रूपेणावभासत इत्यत्रैव पर्यवसानम् । यद्यपि मायावादरूपतया मायापरिणामत्वमपि जगतस्तथापि विवर्त्तवादोपष्टम्भकतयैव मायापरिणामत्वस्वीकारः, विवर्त्तो नाम अधिष्ठानविषमसत्ताककार्यापत्ति', परिणामो नाम कारणसमसत्ताककार्यापत्तिरित्यनयोर्भेद । विवर्त्तवादे च ब्रह्मसत्तातिरिक्तसत्ताकत्वाभाव एव जगति, ब्रह्मसत्ता च ब्रह्मरूपैव, शुद्धचैतन्यस्वरूपस्य ब्रह्मणो निर्धर्मकत्वेन तत्रातिरिक्तधर्मरूपसत्ताया अभावात् । इत्थञ्च त्रिप्रकारसत्ताविभजनं मूढप्रतिबोधनार्थमेव, वस्तुतो ब्रह्मैव सच्चिदानन्दस्वरूपमिति जगतोऽनिर्वचनीयत्वे तदन्तःप्रविष्टा सत्तापि नास्तीति न तन्मतावलम्बनं जैनानां ज्याय इति वाच्यम् । एवं सति तत्तन्नयमये भगवत्प्रवचने तत्तन्नयप्रसूततत्तत्तैर्थिकविचारस्य सत्तास्वरूपाकलने कुण्ठतामेवोररीकुर्वतस्स्वप्रकृतिभूतनयस्यापि तत्र कुण्ठीभवनमेवोपपादयतस्तत्समष्टिरूपस्य प्रमाणस्वरूपतां प्राप्तस्य भगवदास्यनिर्गतस्याद्वादस्यापि तथैव पर्यवसानं नयतो का नाम कथन्ता स्यात्? "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायेन दूरतः परिहरणीय एव सत्ताविचार', अविचारितरमणीयैव सा प्रतिपाद्यपुरुषव्युत्पत्त्याधानायाखण्डोपाधिरूपतामाकलयन्ती तत एव सत्प्रतीतिमपि प्रमाऽप्रमासाधारणी व्यवहारप्रवर्तनाय सम्पादयिष्यतीति । तथापि परस्परोपमर्दोपमर्दकस्वरूपाणां भेदाभेदनित्यानित्यसदसदाद्यनन्तस्वरूपवस्त्ववगाहनविमुखानां दुर्णयानां दूरतः प्रामाण्यचर्चा, नयत्वमपि वस्त्वंशावगाहित्वाभावान्नास्त्येव । नहि भेदैकान्तोऽभेदैकान्तो नित्यैकान्तोऽनित्यैकान्तो वा सदाद्येकान्तो वा जगति समस्ति यो वस्त्वंशतां

॥ श्रीमदुमास्वातिवाचकप्रवरविरचितं स्वोपज्ञभाष्यम् ॥

**अत्राह–धर्मादीनि सन्तीति कथं गृह्यत इति? ।**

॥ श्रीसिद्धसेनगणिवरविरचिता टीका ॥

**अत्राहे**त्यादिसम्बन्धग्रन्थः । धर्मादीनां द्रव्याणां यथासम्भवं गतिस्थित्युपग्रहादि लक्षणमुक्तं वैशेषिकम्, अधुनाऽन्तरङ्गव्यापिलक्षणजिज्ञासया सन्दिहानः प्रश्नयति–**धर्मादीनि सन्तीति कथं गृह्यत इति** । अस्ति चात्र सन्देहबीजम्–किं विकारग्रन्थिरहितं सत्तामात्रमेते धर्मादयः, आहोस्विद् विकारमात्रमुत्पादविनाशलक्षणमथोभयम् ? इत्येवमनेकप्रकारसम्भवे सन्देहः, **कथं**–केन प्रकारेण, **धर्मादीनि सन्ति**–विद्यन्त इति । **इति**शब्दो हेतौ । येन हेतुना सत्त्वमेषां निश्चीयते तद्विषयत्वमितिकरणस्य । वाक्यपर्यन्तवर्ती **इति**शब्दः प्रष्टव्यार्थेयत्ताख्यापनार्थः । **गृह्यत** इति ग्राह्यम्, निश्चेयमित्यर्थः । किं तदस्तित्वमेषामिति । अथवा धर्मादीनि सन्तीत्यस्तित्वमेव सन्दिग्धे परः ॥ ननु च येषां

---

परिकलयेत् । यस्तु समस्ति स्वस्वनिमित्तापेक्षया भेदादिरभेदाद्यप्रतिपन्थी स यद्यपि न वस्तुभूतो घटादिवस्तुकार्यस्यानुगतव्यावृत्तबुद्ध्यादेरेकेन भेदादिनाऽभेदादिनाऽसम्भवात्, तथापि यत्किञ्चिद्वस्तु कार्यैकदेशकारित्वाद्वस्त्वंशो भवत्येव, परं स न न्यायादिदर्शनानां विषयः, तेषामेकान्तत्वकलङ्कभाजां यथावद्वस्त्वंशावगाहित्वाभावात् । तथा च वस्तुतदंशोपदर्शनपराङ्मुखेषु तेषु सदसद्विवेचकत्वमेव नास्ति, कुतः सत्तानिरूपकत्वं स्वयमसतां, सत्ताप्ररूपकत्वं द्रव्यार्थिकपर्यायार्थिकनययोस्तु परस्परप्रतिक्षेपौदासीन्येन प्रवृत्तयोस्स्वस्वनिमित्तापेक्षया वस्त्वंशाभेदादिविषयकत्वव्यवस्थितौ तत्साहाय्यसम्पदजय्यपरिहृतविरोधस्याद्वादप्रमाणराजविषयत्वं वस्तूनां निर्वहति, वस्तुता च नान्तरेण सत्तां कस्यापीति सत्ता भवति निरूपणार्हा स्याद्वादिनामिति धर्मादीनि वस्तून्यधिकृत्य तां निरूपयितुं भाष्यकारः पृच्छति—

**अत्राहेति,** लक्षणाधीना लक्ष्यव्यवस्थितिरिति व्यवहारप्रयोजनकमितरभेदानुमितिप्रयोजनकं तल्लक्षणमेवाभिधानीयं तदेव च सुपरीक्षितं तन्निरूपणपर्यवसायीत्यभिप्रायवान् समाधत्ते–**अत्रोच्यत इति** । उक्तप्रयोजनकं लक्षणं नासाधारणस्वरूपं विरहय्यान्यदतो विशेषस्वरूपावगमाय पृच्छति–**किञ्चेति,** "उप्पेइ वा विगमेइ वा धुव्वेइ वा" इति महावीरास्यनिर्गतसकलवस्तुव्यापिभेदाभेदादिसकलधर्मव्यवस्थानिर्वाहकत्रिपदीपवित्रितमेव सत्त्वस्य स्वरूपलक्षणम्भवितुमर्हति नापरतैर्थिकप्ररूपितमित्याशयेनोत्तरयति–**अत्रोच्यत इति** ।

टीकायां **वैशेषिक**मित्यस्यासाधारणमित्यर्थः, गतिस्थित्यादिकञ्च लक्षणं परमुखनिरीक्षकत्वाद्बहिरङ्गं बोध्यम् । **अन्तरङ्गेति,** यद्यपि धर्मादीनां स्वतोऽवस्थितस्वरूपाणामुत्पादव्ययौ परापेक्षावेवेति वक्ष्यमाणसत्त्वस्वरूपमपि परापेक्षत्वाद्बहिरङ्गम्, तथापि वस्तु प्रतिक्षणं स्वपर्यायात्मना परिणमदेवावतिष्ठते इति परगत्याद्युपष्टम्भकः कश्चित्स्वपरिणामो भवत्येव धर्मादीनां स्वस्वरूपानुप्रविष्ट इत्यभिप्रायेणैवमुक्तिः । यद्यपि सामान्यतः सत्त्वस्वरूपमुत्पादादिकं धर्मस्येवाधर्मादेरपीत्यतिव्याप्तिकवलितं तथापि सत्स्वरूपतया लक्षणीये धर्मे तदीयोत्पादादिकमेव तल्लक्षणमिति व्यापित्वेऽपि सामान्यतो विशेषापेक्षायां नातिप्रसञ्जकत्वमिति बोध्यम् । **सन्दिहान इति**–अत्राचार्यस्यावधृतसत्त्वस्वरूपस्य सन्देह आहार्यरूपो बोध्यः, तस्य निश्चयाप्रतिबध्यत्वेन निश्चयानन्तरमपि सम्भवो न विरुध्यते । **विकारग्रन्थि**पदेनोत्पादव्ययौ बोध्यौ । **सत्तामात्रं** सकलवस्तुव्यापी ध्रौव्यांशः । **उभयम्**, उत्पादव्ययौ ध्रौव्यं च । **तद्विषयत्वमितिकरणस्येति,** वस्तुस्वरूपनिरूपणे त्रिविधा ह्याकाङ्क्षा प्रश्नापरपर्याया प्रयोजिका भवति, निरूपणीयस्वरूपस्य निरूपणहेतोः तत्प्रकारापरपर्यायेतिकर्तव्यतायाश्च, यथा–किं ज्ञेयमित्याकाङ्क्षा वह्न्यादिस्वरूपविषयिणी, केनेत्याकाङ्क्षा धूमादिलिङ्गविषयिणी, कथमित्याकाङ्क्षा परामर्शादितत्सहकारिसम्पत्तिविषयिणी, त्रिविधाप्याकाङ्क्षा स्वरूपविशेषकरणविशेषतद्व्यापारादिप्रकारविशेषोपदर्शनेनोपशाम्यति । तथा प्रकृतेऽपि किं निरूपणीयं केन निरूपणीयं कथं निरूपणीयमित्येवमाकाङ्क्षात्रयमुपतिष्ठते, तत्र प्रथमा **धर्मादीनि सन्ति** इत्यंशेन, करणवाचिना **चेति**शब्देन द्वितीया, प्रकारवाचिना च **कथमिति**शब्देन तृतीयोपस्थाप्यते, अतो द्वितीयाकाङ्क्षाविषयख्यापनमेव **इति**करणस्य प्रयोजनमिति भावः । **प्रष्टव्यार्थेयत्ताख्यापनार्थ इति** । धर्मादीनां सत्त्वे ग्राह्ये किं करणं कश्च तत्प्रकार इत्येतन्मात्रमेव पृच्छाविषय इत्यर्थः । स्वरूपाभिन्नलक्षणतः स्वरूपे ग्राह्ये स्वरूपमेव विषयविधया करणं तत्प्रकारोऽपि च ज्ञायमानस्वरूपतामुपादाय स्वरूपमेवेत्यतः प्रकृतप्रश्नस्य पर्यवसितरूपमाह–**किं तदस्तित्वमेषामिति,** प्रश्नस्य संशयमूलकत्वात्कारणकार्य-

[भाष्यम्–] **अत्रोच्यते-लक्षणतः । किञ्च सतो लक्षणमिति? । अत्रोच्यते—**

गत्याद्युपकारेणानुमितमस्तित्वं प्राक् ते प्रसिद्धसत्ताका एव, कुतः सन्देहः ? अयमभिप्रायः प्रष्टुः—गत्याद्युपग्रहकारिणः किल धर्मादयः केऽपीत्यप्रसिद्धसत्ताकेनैव प्रपन्नाभ्युपेतम् । इदानीं तु प्रश्नयति—कथं पुनरेषां धर्मादीनां विद्यमानत्वं निश्चेयमिति ? । आचार्य आह—**अत्रोच्यते लक्षणतः ॥** आचार्यस्यायमभिप्रायः—सङ्ग्रहादेकीभावादुत्पादादयः सल्लक्षणमस्तिशब्दविषयः, एवंविधाश्चैत उपलभ्यन्त इत्यतः सामान्येन तावदुपन्यस्यति—**लक्षणत** इति । पुनरपि सामान्याभिधाने सन्दिहान आह—**किञ्च सतो लक्षणमिति ?** । किं पुनः सतो लक्षणं ? लक्ष्यते येन लक्षणेन प्रमाणानि तद्विषयश्च, लक्ष्यते येन सदेतदिति । **अत्रोच्यत** इत्याचार्यः प्रतिजानीते सत्त्वलक्षणम्, तेषां धर्मादीनामस्तित्वाव्यभिचारि लिङ्गमिदमुच्यते । एतदुक्तं भवति—धर्माधर्माकाशपुद्गलजीवाः पञ्चास्तिकाया जगतः स्वतत्त्वम्, तत्र जीवद्रव्यं धर्मादीनां ग्राहकं स्वरूपस्य चेति, सङ्क्षेपतः शब्दार्थज्ञानानि सत्त्वलक्षणलक्ष्याणीति, अतः सकलाभिगम्याभिगमोपायविषयेण प्रश्नेनोपक्रान्तं चोदयित्वाऽतः प्रतिवचनमपि तथैवाचार्येणोच्यते, येन लक्षणेन प्रमाणानि तद्विषयश्च लक्ष्यते तद्यापि लक्षणमभिधीयत इति । तच्चेदं सूत्रम्—

---

योरभेदमुपचर्य प्रश्नस्य सदेहरूपतया कीर्त्तनमिति मन्तव्यम् । स्वरूपे निश्चिते यत्र तत्करणतत्प्रकारयोः सन्देहस्तत्र करणे प्रकारे च जिज्ञासा जायते, प्रकृते तु सत्त्वस्वरूपमेव सन्दिग्धमिति तत्रैव प्रश्न इत्याशयेन पक्षान्तरमाश्रयति—**अथवेति ।** सत्त्वं कारणतावच्छेदककोटिप्रविष्टमिति यत्किञ्चित्कार्यम्प्रति कारणत्वेऽवधृते सत्त्वमप्यवधृतमिति निश्चिते सन्देहानवकाश इत्याशयेन शङ्कते—**नन्विति,** सत्त्वं न कारणकोटिनिविष्टं न वा कारणत्वमेव सत्त्वं किन्तु तदन्यद्रेवेति गत्यादिकं प्रति धर्मादेः कारणत्वनिश्चयेऽपि सत्त्वे सन्देहः स्यादेवेत्यभिप्रायेण, धर्मादीनि सन्तीति कथं गृह्यत इति प्रश्नप्रवृत्तिरित्याह—**अयमभिप्रायः प्रष्टुरिति, सङ्ग्रहात्,** सङ्ग्रहनयाभिप्रायात् । **एकीभावात्,** कथञ्चित्तादात्म्याध्यवसायात्, उत्पादादय इत्यत्रादिपदाद्व्ययस्थित्योरुपग्रहः । **अस्तिशब्दविषयः,** अस्तिशब्दप्रतिपाद्यः । **एवंविधाः,** उत्पादव्ययध्रौव्यात्मकाः । **उपलभ्यन्ते,** प्रमाणविषयीभूता भवन्ति, तदुक्तं न्यायविशारदेन श्रीमद्यशोविजयवाचकवरेण—

"तद्धेम कुण्डलतया विगतं यदुच्चैरुत्पन्नमङ्गदतयाऽचलितं स्वभावात् ॥
लोका अपीदमनुभूतिपदं स्पृशन्तो न त्वा श्रयन्ति यदि तत्तदभाग्यमुग्रम् ॥ १ ॥" इति ।

**सामान्याभिधाने सन्दिहान इति,** सामान्यप्रकारकज्ञानस्य विशेषजिज्ञासाहेतुत्वात्, तच्च साधारणधर्मवद्धर्मिज्ञानस्य कोटिद्वयोपस्थापकत्वेन विशेषसंशयहेतुत्वेनापि निर्वहतीति । **प्रमाणानि तद्विषयश्चेति,** सर्वत्र लक्षणानुगत्युपपत्तये । प्रकृते तदनुगमनायाह—**लक्ष्यते येन सदेतदितीति । प्रतिजानीते,** वर्त्तमानकालाव्यवहितोत्तरकालीनकर्तव्यत्वप्रकारकज्ञानानुकूलव्यापारवानित्यर्थः । **सत्त्वलक्षणमित्यत्र** द्वितीयार्थो विशेष्यत्वं तत्र प्रकृत्यर्थस्याधेयतयान्वयः, तस्य च निरूपकत्वसम्बन्धेन प्रतिज्ञाघटकज्ञानेऽन्वयः, 'अत्रोच्यते' इत्यस्य प्रतिजानीते सत्त्वलक्षणमिति अर्थमभिधाय पुनस्तस्यैव प्रकृतार्थसमन्वयेनार्थमाह—**तेषामिति,** सत्त्वलक्षणमिति यदुक्तं तस्यैवोपव्याख्यानम् । **अस्तित्वाव्यभिचारि लिङ्गमिदमिति,** इदमित्यनन्तरवक्ष्यमाणसूत्रार्थं परामृशति, सत्त्वलक्षणलक्ष्यं जगदेव भवितुमर्हत्यतस्तल्लक्षणमखिलसग्राह्येव वाच्यमित्यर्थोपोद्बलनाय भावार्थमाविष्करोति—**एतदुक्तं भवतीति ।** धर्मादीनि सन्तीत्यादिपृच्छाविषयो नैकस्य सत्त्वं किन्त्वशेषस्य जगत इत्यर्थस्फोरणाय तत्रत्यादिपदसङ्गृहीतसकलार्थमुल्लिखति—**धर्माधर्मेत्यादि,** एतावता प्रमेयसामान्यगततयैव सत्त्वं पृच्छाविषयो न तु प्रमाणसत्त्वमपीत्याशङ्कोन्मेषापनोदायाह—**तत्र जीवद्रव्यमिति,** स्वपरव्यवसायि ज्ञानं प्रमाणं, जीवश्च स्वपरग्राहको ज्ञानपर्यायस्वरूपश्चेति तद्ग्रहणेन प्रमाणमपि गृहीतमेव भवति, प्रमाणं च विषयसमन्वितमेव व्यवहारपथमवतरतीति तद्ग्रहणेन विषयोऽप्याक्षिप्त एवेति । अर्थाभिधानप्रत्ययास्तुल्यनामधेया इति सामान्योक्तौ योग्यत्वात्सर्वेऽपि बुद्धिस्था भवन्तीत्यनुसन्दधानेनोक्तं **सङ्क्षेपत इति ।** यद्यपि लक्षणाधीना लक्ष्यव्यवस्थितिः, तथापि शृङ्गित्वं गोलक्षणमुपकल्प्य महिषस्यापि गोत्वं मा प्रापदतो लक्ष्यैकचक्षुष्कमेव लक्षणनिरूपणं कान्तमिति सामान्यतो लक्ष्यस्वरूपावधृतौ लक्षणमतिव्याप्त्यादिदोषानाघ्रातं सुखाववोधमित्यभिप्रायेणाह—**अत इति । सकलाभिगम्येति,** सकलं यदभिगम्यं धर्मादि वस्तु तस्य योऽभिगमः सर्वतोभावेन ज्ञानं सदात्मना प्रतीतिस्तस्योपायस्सकलव्यापि सत्त्वलक्षणं तद्विषयेणेत्यर्थः । धर्मादिसकलवस्तुगतसत्त्वलक्षणमेव पृच्छाविषयोऽत उत्तरमपि तथैव विधेयं येनाशेषस्य जगतः सत्त्वमावेदितम्भवतीत्याह—**अतः प्रतिवचनमपीति ॥**

## [सूत्रम्–] उत्पादव्ययध्रौव्ययुक्तं सत् ॥ ५–२९ ॥

**[भाष्यम्–] उत्पादव्ययाभ्यां ध्रौव्येण च युक्तं सतो लक्षणम्; यदुत्पद्यते, यद् व्येति, यच्च ध्रुवं तत् सत्; अतोऽन्यदसदिति ॥ २९ ॥**

**उत्पादव्ययाभ्यामित्यादि** । समासतश्चायं सूत्रार्थः–स्थित्युत्पत्तिविनाशस्वभावं सद्, अवश्यन्तयैव स्थित्युत्पादविनाशाः समुदिता एव सत्त्वं गमयन्ति । स्थित्यादयो हि सत एव भवन्ति, न जातुचिन्निरुपाख्यस्य, केनचिदप्याकारेणानुपाख्यायमानत्वादिति । यत् कथंचिन्न ध्रुवं न चोत्पद्यते न व्येति तन्न सदिति । इदं च सूत्रं द्रव्यपर्यायनयद्वयगर्भम्, यतो द्रव्यास्तिकपर्यायास्तिकावुत्सर्गापवादस्वभावौ मूलं सङ्ग्रहादिप्रपञ्चस्य, तन्निरूप्यं च सर्वं वस्तु, ते च सङ्ग्रहादयः प्रथमाध्याये विध्यपवादस्वरूपतया निरूपिताः, विशेषविवक्षया तु किञ्चिदुच्यते–उत्सर्गो विधिर्व्यापित्वमप्रतिषेधः, न ह्यसौ द्रव्यनयो विशेपमिच्छति, विशेषो ह्यन्यप्रतिषेधेनात्मानं प्रतिपादयति भावान्तरत्वात्, न

---

**उत्पादव्ययध्रौव्ययुक्तं सत्** ॥ ५ । २९ ॥ द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकमभिसम्बन्धादुत्पादादित्रयाणां कृतद्वन्द्वानां युक्तपदेनान्वयाद्योऽर्थो निष्पद्यते तं भाष्यकृदाह–**उत्पादव्ययाभ्यामित्यादि**, द्वयोरुत्पादव्ययोरेकपर्यायार्थिकनयाभिप्रेतत्वमभिसन्धाय ध्रौव्याद्द्रव्यार्थिकनयाभिप्रेतात्पृथक्कृत्य निर्देशः, **सतो लक्षणमि**त्युक्त्या उत्पादव्ययध्रौव्ययुक्तमिति लक्षणांशः सदिति लक्ष्यांशो निर्दिष्टः सूत्रे इति ख्यापितम् । उप्पेइ वेत्यादित्रिपद्यां वाकारो न विकल्पार्थः किन्तु समुच्चयार्थक एवेति द्योतनायाह–**यदुत्पद्यते इत्यादि** । अर्थापत्तिगम्यमर्थं स्पष्टमावेदयति–**अत इति**, सदसत्कार्यवादाविर्भावनाय टीकायां **स्थित्युत्पत्ती**त्येवं निर्देशः, तेन स्थितेः सर्वकालावच्छेद्यत्वमभिप्रैति । सूत्रभाष्ययो**र्युक्तमिति**शब्दो न सम्बन्धान्तरेण सम्बन्धित्वख्यापनपरः, किन्तु कथञ्चित्तादात्म्यलक्षणाविष्वग्भावसम्बन्धेनैवेत्यवगतये **स्थित्युत्पत्तिविनाशस्वभावमि**त्यत्र स्वभावपदम्, स्वभावस्वभाववतोश्च तादात्म्यं सुप्रतीतम्, तेन चोत्पादादित्रयाणामपि परस्पर कथञ्चिदभेदो लभ्यते तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायात् । एवञ्च न भिन्नप्रवृत्तिनिमित्तकत्वेन सच्छब्दस्य नानार्थत्वं हर्यादिपदवत्, किन्तु त्रयाणां कथञ्चिदेकत्वेन तत्प्रवृत्तिनिमित्तकत्वादेकार्थकत्वमेवेति, कथञ्चिद्भेदेऽपि च त्रितयपर्याप्तैकावच्छेदकताकशक्यताकत्वादेकार्थत्वमवसेयम्, अत एव **समुदिता एवे**त्युपपन्नम् । उत्पादव्ययध्रौव्याणां विभिन्नस्वभावानामेकस्मिन् वृत्तिर्न प्रकारभेदमन्तरेण निरुपाख्यस्य च निर्धर्मकतया न प्रकारभेदसम्भावनेति न स्थित्यादिसमुदितलक्षणसम्भव इत्याशयेनोक्तम्–**केनचिदप्याकारेणेति**, आकारश्चासमस्ताखण्डशब्दाभिलप्य एवाभिमतः, तेन शशशृङ्गगगनकुसुमखरविषाणादिशब्दाभिलप्याकारस्य न ग्रहणम् । **अतोऽन्यदसदिति** भाष्यं गमयति–**यत्कथञ्चिन्न ध्रुवमित्यादि**, स्थित्यादीनां त्रयाणां परस्परविरुद्धत्वादेकाश्रयतयोपबन्धनं सूत्रेऽसङ्गतमित्याशङ्कापनोदायाह–**इदञ्च सूत्रमिति**, उत्सर्गः सामान्यं तच्च प्रकृते ध्रौव्यांशः, तस्य पूर्वोत्तरपर्यायानुस्यूततयाऽनुगामित्वात्सामान्यरूपत्वम्, अपवादोऽननुगामी तत्तत्पर्यायनियतैकस्वभावो विशेषः, स च प्रकृते उत्पादव्ययौ । यथा हि स्थित्यवच्छेदकं सुवर्णद्रव्यं कुण्डलाङ्गदादिपूर्वोत्तरपर्यायानुयायि, न तथा कुण्डलत्वाङ्गदत्वादिकमुत्पादव्ययावच्छेदकम्, अवच्छेदकानुगतत्वाननुगतत्वाभ्यामवच्छेद्यानुगतत्वाननुगतत्वे बोध्ये, विषयधर्मेण विषयिणोऽप्यनुरञ्जनमिति द्रव्यास्तिकपर्यायास्तिकावुत्सर्गापवादस्वभावावित्युक्तम् । **सङ्ग्रहादी**त्यत्रादिपदाद्व्यवहारादीनामुपग्रहः । प्रमाणनयैरधिगम इत्यत्र नयस्याधिगमप्रयोजकत्वमुक्तं तत्स्मारयति–**तन्निरूप्यमिति**, सङ्ग्रहादिनयनिरूप्यमित्यर्थः । **उत्सर्गापवादे**त्यत्र यस्यैवोत्सर्गशब्देनाभिधानं तस्यैव **विध्यपवादे**त्यत्र विधिशब्देनानुरणनमित्येतत्कथयति–**उत्सर्गो विधिरित्यादि**, उत्सर्गमात्रप्रतिपादकत्वादुत्सर्गस्वभावत्वं द्रव्यास्तिकस्येति प्रपञ्चयति–**न ह्यसाविति** । किंस्वरूपो विशेषो यं न द्रव्यास्तिकोऽभिधत्ते इत्यपेक्षायामाह–**विशेषो हीति**, यथाऽङ्गदत्वं विशेषोऽङ्गदभिन्नकुण्डलादिप्रतिषेधेनाङ्गदस्वरूपं प्रतिपादयतीति, **भावान्तरत्वात्**, कुण्डलाद्यवृत्तिधर्मत्वात् । **अन्यप्रतिषेधेने**त्युक्तं, तत्र घटत्वादीनामतद्व्यावृत्तिरूपतामभ्युपगच्छतां सौगतानां मते अन्यप्रतिषेधेन प्रतिपादकत्वं विशेषस्येष्टमेव, परन्तस्याभावरूपतया तुच्छत्वमेव न चैवमत्रेत्याशयेनाह–**न चाभावः प्रतिषेधमात्रमिति**, तुच्छस्वरूपमित्यर्थः । अथवा प्रागभावादिचतुर्विधस्याभावस्य वैशेषिकमते सर्वथा भावव्यतिरिक्तत्वेन सप्तमपदार्थताऽभ्युपगता तथाऽत्र नेत्यभिप्रायेणाह–**न चाभावः प्रतिषेधमात्रमिति**, प्रतिषेधमात्रं भावस्वरूपतानाक्रान्ताभावस्वरूपम् ।

**चाभावः प्रतिषेधमात्रम् । प्रागभावो हि घटस्य मृत्पिण्डः, प्राग्घटोत्पादाद् घटस्याभावः पिण्ड एवानाविर्भूतघटाकारः १; प्रध्वंसाभावोऽपि कपालाद्यवस्था, प्रध्वंसो विनाशः, स चावस्थान्तररूपत्वाद् वस्तुस्वभावं न जहाति, वर्णकविरचनामात्रप्रापितनटान्यत्ववदुत्फणविफणादिसंस्थानमात्रत्यागिसर्पवद् वा २; इतरेतराभावोऽपि स्तम्भकुम्भादीनां परस्परव्यतिरेकरूपत्वान्नावस्तु, घटो हि घटसंस्थानादिव्यतिरेकापेक्षस्वरूप एवाभावशब्दवाच्यः, समस्तवस्तुनश्च तथाविधत्वाभ्युपगमाद् वस्त्वेव भवतीतरेतराभावः ३; न चात्यन्ताभावः कश्चिदनुपाख्योऽस्ति सर्वप्रकारमनुपाख्यायमानस्वरूपानधिगमात्, शशविषाणादेर्वस्त्ववस्थान्तरत्वादुपलब्धिविषयत्वम्, शशविषाणाभावो हि मौण्ड्यं समतलमस्तकस्वरूपोपलब्धिर्नात्यन्ताभावः, विषाणसद्भावादन्यत्र शशमस्तकसद्भावाच्चेतरेतराभाव एव, समवायसम्बन्धप्रतिषेधमात्रत्वाद् वा अन्यत्र च तस्य सत्त्वान्नात्यन्ताभावः, नामकर्मपरिणामवशाच्चापत्यवत्त्वे**

---

निषेधे हेतुमाह–**प्रागभावो हीति, हि** यतः, **प्रागभावो** घटस्य प्रागभावः । **मृत्पिण्डः** पिण्डितावस्थमृद्द्रव्यमेव घटप्रागभावः, एतेनाव्यवहितपूर्वपर्यायभावापन्नद्रव्यस्योत्तरपर्यायप्रागभावरूपता व्याख्याता । कथमेवमित्यपेक्षायामाह–**प्राग्घटोत्पादादिति, पिण्ड एव** मृत्पिण्ड एव । **प्रध्वंसाभावोऽपीत्य**पिना प्रागभावस्य भावरूपतासमुच्चयः । **स च** विनाशश्च । **अवस्थान्तररूपत्वात्** कपालाद्यवस्थोत्तरकालीनघटाद्यवस्थारूपत्वात् । **वस्तुस्वभावं** भावरूपताम्, उत्पादव्ययध्रौव्यात्मकतामिति यावत् । तथा चाव्यवहितोत्तरपर्याय एव पूर्वपर्यायस्य ध्वंसः, तथा च घटस्य घटात्मनोत्पाद एव कपालध्वंसो मृद्रूपेणावस्थितिश्चेति विनाशस्य घटरूपत्वे घटगतोत्पादव्ययध्रौव्ययुक्तत्वं तस्यापीति तद्रूपवस्तुस्वभावत्वमपि निर्बाधमेवेति । अथवा केनचिद्रूपेण विनाशेऽपि अनुगामिद्रव्यावस्थानं समस्त्येवातोऽनुगामिरूपत्वमेव वस्तुस्वभावं न जहातीत्यर्थः । अत्रैवानुगुणं दृष्टान्तद्वयमाह–**वर्णकविरचनेत्यादि,** वर्णकविरचना रामरावणाद्यनुकारिस्वरूपपरिकल्पना । मात्रपदोपसन्दानात्स्वस्वरूपात्मना नटस्यानन्यत्वं गम्यते, एवमग्रेऽपि । अन्योन्याभावस्यापि भावरूपत्वं स्पष्टमाख्याति–**इतरेतराभावोऽपीति,** उक्तमर्थमेव भावयति–**घटो हीति,** घटस्य यत्संस्थानादि पृथुबुध्नोदराद्याकारस्तद्रूपो यो व्यतिरेकः पटादितो वैलक्षण्यं तदपेक्षस्वरूप एव घटः । **अभावशब्दवाच्यः** पटाद्यन्योन्याभावव्यपदेशभाक् । न च घटादेरेव प्रतिनियतस्य वस्तुनो भावाभावोभयरूपत्वमपि त्वशेषस्य जगत एव भावाभावोभयरूपत्वमित्याह–**समस्तवस्तुनश्चेति, तथाविधत्वेति,** परस्परव्यतिरेकरूपत्वेत्यर्थः । अत्यन्ताभावोऽपि तादात्म्यपरिणामनिवृत्त्यात्माभावभूताधिकरणस्वरूप एव, न तु तद्व्यतिरिक्तस्तुच्छरूप इति । तस्याप्यधिकरणगतोत्पादादियोगाद्वस्तुत्वमेवेत्याशयेनाह–**न चात्यन्ताभाव इति,** अनुपाख्यस्तुच्छरूपः । तस्यानुपाख्यत्वेऽधिगतिविषयत्वमेव न सम्भवतीत्याह–**सर्वप्रकारमिति,** न च शशविषाणादीनामनुपाख्यस्वरूपाणां यथाऽसत्ख्यात्यात्मकाधिगतिविषयत्वं तथाऽत्यन्ताभावस्यापि तथाविधस्य तत्त्वम्भविष्यतीति व्याच्यम्, शशविषाणप्रतीतिर्हि नाखण्डस्यालीकस्य प्रतीतिस्तथा सति गगनकुसुमादिप्रतीतितो विषयकृतवैलक्षण्यस्य तत्रानुभूयमानस्यापलापप्रसङ्गादलीके स्वरूपादिवैलक्षण्यस्य वक्तुमशक्यत्वात्, किन्तु विषाणे शशीयत्वस्य शशे वा विषाणसम्बन्धस्य प्रतीतिरेवं सति शशीयत्वमप्यन्यत्र प्रसिद्धं विषाणसम्बन्धोऽपि चान्यत्र प्रसिद्ध इत्युक्तविशिष्टप्रतीतिर्विपरीतख्यातिरेव न त्वसत्ख्यातिः । एवं शशविषाणं नास्तीत्यन्ताभावप्रतीतिरपि नासत्प्रतियोगिकाभावविषयिणी, किन्तु शशे विषाणसम्बन्धाभावावलम्बनैवेत्यनुरोधेनाप्यसत्ख्यातिर्न सिद्धिपथमुपगच्छतीत्याशयेनाह,–**शशविषाणादेरिति,** आदिपदाद्गगनकुसुमादीना परिग्रहः । **वस्त्ववस्थान्तरत्वात्,** शशोऽपि पुद्गलपरिमाणत्वाद्वस्त्ववस्थान्तररूप एवं विषाणमपि । ततश्च **उपलब्धिविषयत्वम्,** विपरीतख्यातिविषयत्वम् । **मौण्ड्यमि**त्यस्यैव विवरणम्–**समतलमस्तकस्वरूपोपलब्धिरिति, उपलब्धिरि**ति प्रमाणोपन्यासाय, तथा चोपलभ्यमानसमतलशशमस्तकस्वरूपमेव शशविषाणाभावः, **नात्यन्ताभावः,** न तु तुच्छरूपोऽसावभावः । अयं चाभावोऽन्योन्याभावस्वरूप इत्यावेदयितुमाह–**विषाणसद्भावादन्यत्रेति** । नन्वन्योन्याभावस्थले प्रतियोग्यनुयोगिवाचकपदयोस्समानविभक्तिकत्वं तन्त्रमतो नोक्तस्यान्योन्याभावविषयकत्वमत आह–**समवायेति,** समवायश्चात्र कथञ्चित्तादात्म्यलक्षणाविश्वग्भावः, तथा च शशे तादृशसम्बन्धेन विषाणस्याभावो विषाणे वा शशस्य तादृशसम्बन्धस्याभावो वा विषयो नैतावता तुच्छरूपात्यन्ताभावविषयत्वं, किन्तु अधिकरणस्वरूपात्यन्ताभावविषयत्वमेवेति भावः । **तस्य,** समवायसम्बन्धस्य । एवं वन्ध्यापुत्रोऽपि नात्यन्तमसदनुपलब्धिगोचर इत्युपपादनायाह–**नामकर्मेति,** काचित्स्त्री नाम्ना वन्ध्याऽपि स्यात्पुत्रवत्यपि स्यात्तस्याः पुत्र एव

वन्ध्यायाः केन तद्वत्ता निवार्यते ?, नहि पूर्वोपात्तकर्मविपरिणामव्यतिरेकेण तज्जीवतथाविधपरिणत्यभावे वा उत्तरजन्मप्रतिपत्तिरमूलत्वात् ४; अतः सर्व एव पदार्था द्रव्यक्षेत्रकालभावभेदापेक्षाः कदाचिदुपलभ्यन्ते, प्रत्यक्षादिना प्रमाणेनावधार्यन्ते, कदाचिदुपलब्धाः सन्तोऽपि भूयो नोपलभ्यन्ते, द्रव्यादिविप्रकर्षात्, सत्यपि मतिज्ञानावरणीयकर्मक्षयोपशमकारणसाकल्ये उपयोगे च किञ्चिद् द्रव्यमन्त्यास्मपरमाणुद्व्यणुकादि वैक्रियशरीरादि च सदपि नोपलभ्यते, तस्य च द्रव्यस्य तथाविधपरिणामात्, आदिशब्दाद् दिवा तारकादयो माषश्च माषराशावुपक्षिप्तः, किञ्चित् क्षेत्रविप्रकर्षाद्धि दूरात्यासन्नसव्यवधानवर्ति विद्यमानमेव नोपलम्भविषयभूयमास्कन्दति, तथाऽपरं कालविप्रकर्षादनाविर्भूतं तिरोभूतमुपलब्धेरगोचरः, तथाऽन्यद्भावविप्रकर्षात् परकीयात्मवर्तिमतिज्ञानविकल्पजालमण्वादिपरिवर्ति च संस्थानरूपादिपर्यायकलापजातं सदप्यनुपलभ्यम्, विवक्षितोपलब्धेश्चान्या उपलब्धिरनुपलब्धिः, पर्युदासवृत्तेरभ्युपगमात्, न पुनरुपलब्ध्यभावोऽनुपलब्धिः, अनुपाख्यस्याभावस्य प्रत्याख्यानात्, भावस्यैव चाभावशब्देन कथञ्चिदभिधेयत्वात्, तस्मादुपलम्भकारणभाज एवानुपलब्धिर्नान्यथा, व्यवस्थितमिदं नाभावः प्रतिषेधमात्रमिति । एवं च ध्रौव्यं द्रव्यास्तिकः, अस्तीति मतिरस्येत्यास्तिकः, द्रव्य एवास्तिको द्रव्यास्तिकः, सकलभेदनिरासादकृतलक्षणस्य च तत्पुरुषस्य मयूरव्यंसकादिप्रक्षेपात् समसनम्, तच्च द्रव्यं भवनलक्षणं मयूराण्डकरसवदुपारूढसर्वभेदबीजं निर्भेदं देशकालक्रमव्यङ्ग्यभेदं समरसावस्थमेकरूपं भेदप्रत्यवमर्शेनाभिन्नमपि भिन्नवदाभासते, तदाश्रयाच्च भवितरि विशेषे भवति

वन्ध्यापुत्रः प्रसिद्ध इति न वन्ध्यापुत्रस्य सर्वथाऽसत्त्वम् । किञ्च याऽपि स्त्री कस्याप्यपत्यस्याजननीत्वाद्वन्ध्येति प्रसिद्धा, साऽप्यस्ति पुत्रोऽप्यन्यस्त्रियाः कश्चित्प्रसिद्ध इति पुत्रे वन्ध्यासम्बन्धित्वज्ञानरूपा वन्ध्यापुत्रप्रतीतिरपि विपरीतख्यातिरेव, नासत्ख्यातिः कुत्रापि सम्भवतीत्याशयेनाह–**अतः सर्व एवेति, कदाचिद्**, द्रव्याद्यविप्रकर्षे, **उपलभ्यन्त** इत्यस्यैव विवरणं **प्रत्यक्षादिना प्रमाणेनावधार्यन्त** इति । **नोपलभ्यन्ते द्रव्यादिविप्रकर्षादिति,** यथा–पृथिवीत्वादिजाती रूपादिकं च घटादावुपलभ्यते परमाणौ नोपलभ्यते इति द्रव्यविप्रकर्षात् तत्रानुपलब्धिः, भित्त्याद्यनावृतदेशस्थितो य एव पूर्वमुपलब्धस्स एव भित्त्यादिव्यवहितदेशगतस्सन्नोपलभ्यते तत्रानुपलब्धिः क्षेत्रविप्रकर्षात्, स्वासमानकालीनपदार्थस्तत्कालीनपुरुषोपलब्धिगोचरोऽप्यन्यकालीनपुंसा नोपलभ्यते तत्रानुपलब्धिकारणं कालविप्रकर्षः, लवणं पूर्वमुपलब्धमपि चक्षुषा तोयगतं नोपलभ्यते तत्रानुपलब्धिहेतुस्स्वभावविप्रकर्ष इत्येवमेकस्याप्युपलब्ध्यनुपलब्धी ज्ञेये । **द्रव्यादिविप्रकर्षादिति,** स्वयं स्पष्टदृष्टान्तेनोपपाद्य दर्शयति–**सत्यपीत्यादिना, किञ्चिद्द्रव्यमित्यादि** द्रव्यविप्रकर्षे उदाहरणम् । **उपलम्भविषयभूयमास्कन्दति** उपलम्भविषयत्वं प्राप्नोति । अनुपलब्धिरपि नोपलब्ध्यत्यन्ताभावो येन तुच्छरूपतामास्कन्देत, किन्तु भावरूपैवेत्याह–**विवक्षितोपलब्धेश्चेति** । प्रक्रान्तमर्थमालम्ब्याह–**एवं चेति, द्रव्यास्तिकपर्यायास्तिकावुत्सर्गापवादस्वभावाविति,** यदुक्तं प्राक् तदधिकृत्याह–**ध्रौव्यमिति,** अत्र विषयिनयगतस्य द्रव्यास्तिकत्वस्य विषये ध्रौव्येऽप्युपढौकनम्, तदुपपादनायाह–**अस्तीति मतिरस्येत्यास्तिक इति**।द्रव्यास्तिकशब्दस्योक्तस्य लाक्षणिकतत्पुरुषसमासभेदानन्तर्गतत्वेऽपि तत्पुरुषत्वोपपादनायाह–**सकलभेदनिरासादकृतलक्षणस्येति,** सकलभेदनिरासादित्यस्य पूर्वान्वयोऽपि सम्भवति, तत्र द्रव्य एव कुत आस्तिक इत्यपेक्षायामाह–**सकलेति,** भेदपदमत्र पर्यायपरम् । **तच्च द्रव्यं,** द्रव्यास्तिकनयविषयो ध्रौव्यलक्षणं द्रव्यं च, **भवनलक्षणं** भू सत्तायामिति वचनात् सत्तास्वरूपम्, तस्यैव घटपटादिस्वरूपसद्विशेषानुगतत्वेन द्रव्यत्वम्, तदेव च वस्तुनि त्रिकालानुगामितया ध्रौव्यम् । **मयूराण्डकरसवदिति,** यथा मयूराण्डकरसे भाविमयूरगतसचन्द्रपिच्छस्निग्धसौन्दर्यचित्ररूपादिसन्निवेशस्सूक्ष्मरूपेण वर्तते तथा भवनलक्षणे सत्त्वेऽपि सर्वेऽपि विशेषास्सन्ति, मयूराण्डकरसो यथा तत्तद्रूपेणोत्तरकालम्परिणमति तथा भवनमपि तत्तद्विशेषाकार इव भवति तद्वदेव च सर्वविशेषप्रभेदबीजं सत्त्वम् । **निर्भेदं** स्वतो भेदविकल्पमपि । **देशकालक्रमव्यङ्ग्यभेदमित्यत्र** भेदशब्दो विशेषवचनः । **समरसावस्थं** विशेषेषु नानारूपेष्वनुगततयैवावस्थितम्, अत एव **एकरूपम्** अनेकरूपस्यानुगतप्रतीतिनियामकत्वासम्भ-

भावता, अन्यथा तु भाव एव न स्याद् भविता विशेषो भवनव्यतिरेकित्वात्, तदव्यतिरिक्तरूपत्वाच्च भवितुर्विशेषस्य तत्स्वरूपवद्भावता तदव्यतिरिक्तरूपता च । एवं सति भवनमात्रमेवेदं कृत्स्नं भेदाभिमतास्त्वेता वृत्तयस्तस्यैव न जात्यन्तराणीति ॥ पर्यायः पुनरपवादस्वभावोऽन्यपरिवर्जनमपवदनमपवादः, स ह्यन्यपरिवर्जनेनान्यं प्रतिपादयति प्रतिषेधरूपत्वाद्, अघटो न भवतीति घटः, पर्याया एव सन्ति न पुनर्द्रव्यं नाम किञ्चिदेकं पर्यायार्थान्तरभूतमस्ति, द्रव्यास्तिकावधारितध्रौव्यवस्तुप्रतिक्षेपेण भेदा एव वस्तुत्वेन प्रतिज्ञायन्तेऽतः पर्याये आस्तिकः पर्यायास्तिकः समुपलभ्यमानायःशलाकाकल्पभेदकलापव्यतिरेकेण द्रव्यस्यानुपलम्भात् ॥ ननु च रूपादिव्यतिरेकेण मृद्द्रव्यमित्येकवस्त्वालम्बनश्चाक्षुषः प्रत्ययः प्रत्याख्यातुमशक्यः, सन्तमसपटलावच्छादितप्रदेशवर्तिनि वा मृद्द्रव्ये स्पर्शनज्ञानमभिन्नमृद्द्रव्यमात्रालम्बनमसत्यमिति वा भाषितुं न पार्यत इत्यस्त्यभिन्नमेकं द्रव्यमभेदज्ञाननि-

---

वात् । न चैकरूपत्वं सत्त्वस्य नास्त्येव घटत्वं हि घटे सत्त्वं पटत्वं पटे सत्त्वमित्येवमननुगततया भिन्नरूपस्यैव सत्त्वस्य घटसत्ता पटसत्तेत्येवं भिन्नप्रतिभासादिति वाच्यम्, तस्यौपाधिकभेदस्य वास्तविकाभेदाविरोधित्वादित्याशयेनाह–**भेदप्रत्ययदर्शनेति,** अभिन्नमपि भवनलक्षणं द्रव्यं घटादिभवनविशेषावगाहिवेदनेन भिन्नमिवाभासते, यथा महाकाश एक एव मठघटशरावाकाशादिरूपैरवभासते तथेदमपीति । भावत्वं सत्त्वस्यैव केवलस्यान्यत्र तूपचारात्तत्संप्रत्यय इत्याह–**तदाश्रयाच्चेति,** सत्त्वात्मकमहासामान्याभेदाश्रयाणाच्चेत्यर्थः । **भवितरि** भवनरूपयोगिनि । **अन्यथा** सत्त्वात्मकमहासामान्याभेदानाश्रयणे, **भविता** भवनशीलः, **विशेषो** भाव एव न स्यात्, अनुगतस्य भावत्वाद्विशेषाणा च स्वतोऽननुगतत्वादित्याह–**भवनव्यतिरेकित्वात्,** सत्त्वभिन्नत्वात् । **तदव्यतिरिक्तत्वात्,** सत्त्वाव्यतिरिक्तत्वाद्, **भवितुर्**भवनाश्रयस्य, **विशेषस्य** पर्यायस्य, **तत्स्वरूपवद्,** भवनस्वरूपवद्, **तदव्यतिरिक्तरूपता,** भावाव्यतिरिक्तरूपता । एवं सति द्रव्यार्थिकनयाभिप्रेतं यन्निष्पन्नं तदाह–**एवं सतीति, एता** विशेषरूपा **वृत्तयो**ऽवस्थाः, **तस्यैव** महासत्त्वलक्षणभवनस्यैव, **न जात्यन्तराणि** न तु विशेषा महासामान्यात्पृथग्भूतानि तत्त्वानि । इत्थमुत्सर्गस्वभावत्वं द्रव्यास्तिकनयस्योपपादितम् ॥ सम्प्रति पर्यायास्तिकस्यापवादस्वरूपतां प्रपञ्चयति–**पर्याय इति, पुनस्त्वर्थे, अपवादस्वभावः,** अपवादस्वरूपः पर्यायास्तिकनयः । अपवाद एव क इत्यपेक्षायामाह–**अन्यपरिवर्जनमिति,** यौगिकोऽयमर्थ इत्युपपादयितुं व्युत्पत्तिमुपदर्शयति–**अपवदनमपवाद इति, स हीति, हि** यतः **स** पर्यायार्थिकनयः, अन्यपरिवर्जनेनान्यं प्रतिपादयतीति, पर्यायार्थिकनये हि घट इति शब्दो न विधिमुखेन घटरूपमर्थं कथयति, किन्तु घटान्यद् यत्पटादि तत्परिवर्जनेन तन्निषेधमुखेन घटान्यपटादिभ्योऽन्यं घटं प्रतिपादयति, यतो घटपदस्य घटत्वावच्छिन्ने शक्तिः । घटत्वं च न विधिरूपं सामान्यं किन्त्वघटव्यावृत्तिरूपमेवेत्याह–**प्रतिषेधरूपत्वादिति,** एतदेव स्पष्टयति–**अघटो न भवतीति घट इति,** घटोऽयमित्युक्तेऽयमघटो न भवतीति निषेधरूपोऽर्थो लभ्यते इत्यर्थ. । घटत्वस्य विधिरूपत्वं किमिति नाश्रयत्ययमित्यपेक्षायामाह–**पर्याया एव सन्तीति,** एवकारव्यवच्छेद्यमाह–**न पुनर्द्रव्यमित्यादि,** द्रव्यपदञ्चात्रानुगतधर्ममात्रोपलक्षकम्, तथा च घटत्वं न घटेभ्यो व्यतिरिक्तं सकलघटानुगतमेकं सामान्यमस्ति, घटोऽयं घटोऽयमित्यनुगतमतिश्चाघटव्यावृत्तिविषयिण्येवेति । अघटव्यावृत्तिरूपतयाऽनुगतमतिप्रयोजनकत्वमिष्टमेव घटत्वादौ न पुनर्विधिरूपतयेत्यावेदयितुमुक्तं–**पर्यायार्थान्तरभूतमिति,** पर्यायास्तिकसंज्ञाप्यस्य नयस्यान्वर्थेत्याह–**द्रव्यास्तिकेत्यादि, ध्रौव्येति,** अनुगतात्मकेत्यर्थः । **भेदा एव** विशेषा एव । **प्रतिज्ञायन्ते,** स्वपक्षे स्थाप्यन्ते, परपक्षनिराकरणपूर्वकस्वपक्षव्यवस्थापनस्यैव प्रतिज्ञात्वात्, एतन्मतेऽनुगतमतिर्विकल्पनमात्रं न तु वस्तुनिर्णायकमिति हृदयम् । कथं निखिलपर्यायानुस्यूतमनुगतद्रव्यमयं नाभ्युपगच्छतीत्यपेक्षायामाह–**समुपलभ्यमानेत्यादि** । द्रव्यालम्बनप्रतीत्यपलपनमसहमानो द्रव्यास्तिक आशङ्कते–**ननु चेत्यादि, रूपादी**त्यत्रादिपदाद्रसगन्धस्पर्शाद्युपग्रहः । **सन्तमसेति,** निबिडान्धकारेत्यर्थः, अनेनालोकरूपसहकार्यभावाच्चक्षुस्तत्र रूपग्रहणे न व्याप्रियत इति सूचितम्, **स्पर्शनज्ञानमिति,** त्वगिन्द्रियजन्यज्ञानमित्यर्थः, तथा चेन्द्रियद्वयवेद्यत्वं न रूपस्पर्शयोस्तयोरेकैकेन्द्रियग्राह्यत्वस्यैव भावादिति चाक्षुषस्पार्शनज्ञानविषयोऽनुगामी रूपस्पर्शयोः कश्चिदभ्युपगन्तव्यः, स एव द्रव्यमिति गूढाभिसन्धिः । **मृद्द्रव्यमात्रेति,** मात्रपदेन रूपव्यवच्छेदः । नन्वनुगतप्रतीतिमात्रस्य भ्रान्ततयैव पर्यायवादिनाऽभ्युपगमान्न ततो वस्तुसिद्धिरित्यत आह–**न चायमिति ।**

षयत्वात्, न चायमभेदप्रत्ययो भ्रान्तः पुनः पुनः प्रेक्षापूर्वकारिभिस्तथैवोपलभ्यमानत्वात्, नैतदेवम्, अन्यविषयत्वाद्, रूपस्पर्शविषयाचक्षुःस्पर्शनज्ञानाद् भिन्नविषयोपलम्भिनोऽन्यदेव रूपादिसमुदयविषयं स्मार्तमभेदज्ञानमुत्पद्यते—स एवायं घटो यमहमद्राक्षमहनि रात्रौ वा यं चास्प्राक्षम्, अतो रूपाद्यग्रहे तस्या अभेदबुद्धेरनुत्पादात्। एतदुक्तं भवति—दृष्ट्वा स्पृष्ट्वा वा स एवायं घट इति यदभेदज्ञानं तद् रूपादिसमुदयविषयं स्मार्तम्, तदग्रहे सत्यनुत्पत्तेः, यथा वनज्ञानं धवाद्यग्रहे सत्यनुत्पद्यमानं धवादिविषयमिति॥ नन्वालोकाग्रहणे शुक्लबुद्धिर्न भवति, न चालोकविषया शुक्लबुद्धिरित्येवमन्यत्वेऽपि साध्ये, न चालोकाद् रूपं नान्यदित्यनेकान्तः, नैतदेवम्, हेत्वर्थापरिज्ञानात्, रूपाद्यग्रहे तद्बुद्ध्यभावादित्यनेन तदभावाभावमुखेन रूपादिग्रहे सत्येव भावादित्याख्यायते, न चालोकग्रहणे सति रूपबुद्धिर्भवति, चित्ररूपवत् सालोकस्य रूपस्य ग्रहणात्, आलोके तु सति स्याद् रूपबुद्धिः॥ पुनराशङ्कते—प्रत्यक्षानुमानाभ्यामननुभूते समुदाये कथं स्मृतिरुत्पद्यत इति, न, अनेका-

---

निषेधे हेतुमाह—**पुनःपुनरिति**। **प्रेक्षापूर्वकारिभिरि**त्यनेन विशेषदर्शित्वं तेषां व्यज्यते, विशेषदर्शनं च गुणरूपं ततो ज्ञानं भवत्प्रमैव स्यात्, विशेषादर्शनस्य दोषविधया भ्रमकारणस्याभावात्तेषां भ्रान्तिर्न स्यादेवेति भावः। सकृदनुभवने विशेषादर्शनसंभवाद्भ्रान्तिस्संभवेदपि न चैवं प्रकृते इत्यावेदनाय **पुनःपुनरि**त्यसकृदाम्रेडनमिति, द्रव्यविषयकत्वेनाभिमतप्रत्ययस्य रूपस्पर्शसमुदायविषयकत्वं स्मार्त्तत्वञ्च, समुदायश्च समुदायिभ्योऽभिन्नो न द्रव्यं किन्तु पर्याय एवेति नातो द्रव्यसिद्धिरिति पर्यायवादी **नन्विति** शङ्कायां समाधत्ते—**नैतदेवमिति**। **अन्यविषयत्वात्** द्रव्यातिरिक्तविषयकत्वात्। एतदेव भावयति—**रूपस्पर्शेति,** रूपविषयकाच्चक्षुर्ज्ञानात्स्पर्शविषयकात्स्पर्शनज्ञानाच्चेत्यर्थः, **भिन्नविषयोपलम्भिनो,** भिन्नविषयकोपलम्भत्वेन द्रव्यवादिसम्मताज्ज्ञानात्। **अन्यदेव** भिन्नमेव। न तु द्रव्यविषयकम्। किन्तदित्यपेक्षायामाह—**रूपादिसमुदायविषय**मिति, स्मार्त्तत्वोक्त्याऽस्यानुभवात्मकरूपज्ञानस्पर्शज्ञानद्वयादेवास्योत्पत्तिर्नैतदनुरोधेनातिरिक्तद्रव्यकल्पनमिति सूचितम्। **अतः** स्मार्त्तत्वादेव, आशयमुद्घाटयति—**एतदुक्तं भवतीति, तदग्रहे,** रूपाद्यग्रहे। समुदायग्रहस्य समुदायिज्ञानं विनाऽनुत्पद्यमानस्य समुदायविषयकत्वमित्यत्र दृष्टान्तमाह—**यथा वनज्ञानमिति,** यदज्ञाने यज्ज्ञानन्न भवति तज्ज्ञानस्य तद्विषयकत्वमिति व्याप्तिरेवोक्तदृष्टान्तबलादायाता। तत्र द्रव्यवादी व्यभिचारमाशङ्कते—**नन्वालोकाग्रहण इति, अन्यत्वेऽपि साध्य इ**त्यत्रानन्यत्वेऽपि साध्य इति पाठो भवितुमर्हति तत्रैव **न चालोकादि**त्यनेन व्यभिचारस्य दर्शितत्वात्, यत्रानुमाने व्यभिचारोऽनेन दर्शितस्स चानुमानप्रकारः पर्यायवादिन ईदृशः—विवादापन्नं ज्ञानं रूपाद्यनन्यविषयकं, रूपाद्यग्रहणे सत्यनुत्पद्यमानत्वात्, यज्ज्ञानं यदग्रहणे नोत्पद्यते तज्ज्ञानं तदनन्यविषयकं, यथा धवादिसमुदायात्मकवनज्ञानं धवाद्यग्रहणेऽनुत्पद्यमानं धवाद्यनन्यविषयकमिति। तत्र च व्यभिचार **आलोकाग्रहण** इत्यादिनोपदर्शितः, तथाहि—आलोकाग्रहणे शुक्लबुद्धिर्नोत्पद्यते इति सामान्यव्याप्तावभिमतो हेतुस्तत्र वर्तते, न च शुक्लबुद्धिरालोकानन्यविषयेति साध्यन्तत्र नास्तीति। विवादपदं ज्ञानं रूपाद्यनन्यविषयं, रूपादिग्रहणे सत्येव भावाद्यद्ग्रहणे सत्येव भवति तत् तदनन्यविषयकं, यथा धवखदिरादिसमुदायज्ञानं धवाद्यनन्यविषयकमित्यत्रैवोक्तानुमानपर्यवसानम्, तत्र च नोक्तव्यभिचारः, शुक्लबुद्धौ हि नालोकग्रहणं कारणं येनालोकग्रहणे सत्येव भावस्स्यादपि तु आलोकभासकसामग्रीनियतसामग्रीकत्वेनालोकोऽपि तस्यां भासत इति। पर्यायवादी समाधत्ते—**नैतदेवमिति,** यदि आलोकग्रहणं न शुक्लग्रहे कारणं तर्हि आलोकमन्तराऽपि शुक्लबुद्धिः कस्मान्न भवतीत्यपेक्षायामाह—**आलोके त्विति,** तथा च रूपबुद्धौ स्वरूपसत आलोकस्य कारणत्वन्न त्वालोकज्ञानस्येति, आलोकाभावे कारणाभावादेव शुक्लबुद्धिर्नोपजायत इति भावः। अननुभूतस्य स्मरणन्न भवतीति नियमेन रूपस्पर्शसमुदायस्य रूपादिप्रत्येकज्ञानाविषयत्वेन प्रागननुभूततया न तस्य स्मरणसम्भव इति द्रव्यविषयकमेव विवादपदं ज्ञानमभ्युपगन्तव्यमिति द्रव्यवादी शङ्कते—**पुनराशङ्कत इति**। अननुभूतस्य न स्मरणमिति न नियमः किन्त्वज्ञातस्य न स्मरणमित्येव नियमः, अत एव ज्ञानत्वेन स्मृतित्वेनैव कार्यकारणभावोऽभ्युपगम्यते तत एव च स्मृत्यनन्तरमपि स्मरणमुपपद्यते, अन्यथा सकृदनुभूतस्य स्मरणरूपफलेन संस्कारनाशे पुनः स्मरणं न स्यात्, तथा च घटादिपदसङ्केतप्रभवविकल्पात्मकज्ञानगोचरत्वात्समुदायोऽपि ज्ञात एवेति तत्स्मरणं न दुर्घटमिति पर्यायवादी समाधत्ते—**न अनेकान्तादिति,** अनुभवत्वेन स्मृतित्वेन कार्यकारणभावे व्यभिचारादित्यर्थः, तथा च व्यभि-

न्वात्, विकल्पितेऽपि ह्यर्थे स्मृतिर्दृष्टा बन्धुमत्याख्यायिकादौ । अस्ति च घटादिसङ्केतप्रभवः समुदाये विकल्पो वनादिविकल्पवत्, अन्यथा वनसेनास्मरणमपि न स्यात्, एवं च न रूपादिव्यतिरिक्तं द्रव्यं समस्तीति व्यवस्थितम् ॥ पुनरप्याह–अस्त्येवान्यद् द्रव्यं बुद्धिभेदात्, अन्यैव हि रूपादिधीरन्या च घटबुद्धिः, अयं च बुद्धिभेदोऽन्यत्वे सति भवति नान्यथा, तस्माद् रूपादिद्रव्ययोरन्यत्वं बुद्धिभेदाद् गवादिवदिति, अयुक्तमेतदपि, यदि तावदुभयोरन्यत्वं साध्यते, द्रव्याभावादेकदेशाश्रयासिद्धः, नहि सतोऽसतश्चैकमेव विशेषणं न्याय्यम् । अथ रूपादिभ्यो द्रव्यस्यान्यत्वं साध्यते, तदसमञ्जसम्, नहि द्रव्यं नाम किञ्चिदस्ति स्वरूपेण यस्यान्यत्वं साध्येत, सिद्धे धर्मिणि धर्मविप्रतिपत्तौ साधनसद्भावात्, अनैकान्तिकश्च पानकादिभिर्बुद्धिभेदादिति, विनाऽप्यर्थान्तरभूतद्रव्यकल्पनया मनीषाभेदस्य सद्भावाद् रूपाद्यवयवानां सन्निवेशविशेषाद् बुद्धिभेदः, यथा गुडोदकाभ्यां पानकं नार्थान्तरमथ च बुद्धिभेदः, एवं वनपङ्क्त्यादिष्वपि द्रष्टव्यम् । तस्मान्नोत्पादव्ययव्यतिरिक्तः कश्चिदस्ति ध्रौव्यांशो यमाश्रित्य प्रज्ञाप्येत द्रव्यमेकमभेदप्रत्ययहेतुरिति । स्वात्मव्यतिरिक्तावयव्यारम्भकास्तन्तव इति चेत्, अयुक्ततरमिदम्, तुलानतिविशेषाभावात्, यस्य ह्यवयवगुणा गुणान्तराण्यारभन्तेऽवयविनि "द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्" इति वचनात् तस्य

---

चाराभावे व्याप्यरूपेण तद्धर्मावच्छिन्नम्प्रति कारणत्वसम्भवे व्यापकरूपेणान्यथासिद्धिरिति न्यायेनाप्यनुभवत्वस्य कारणतावच्छेदकत्वन्न सम्भवतीति भाव. । व्यभिचारस्थलमेवोपदर्शयति–**विकल्पितेऽपीति,** न हि तत्रानुभवस्य सम्भवो बन्धुमत्यादेः कविकल्पनामात्रगोचरत्वेन वस्तुत्वाभावेन तद्विषयकानुभवासम्भवात्, अनुभवस्य सन्मात्रविषयकत्वनियमादिति भाव.। विकल्पश्च रूपस्पर्शसमुदायेऽपि समस्त्यतः तत्स्मरणं न दुर्घटमित्याह–**अस्ति चेति, अन्यथा** समुदायस्य विकल्पविषयकत्वानभ्युपगमे विकल्पस्य वा स्मरणजनकत्वानभ्युपगमे । एतावता निष्पन्नमर्थं पर्यायवाद्याह–**एवं चेति** । द्रव्यवादी पुनराशङ्कते–**पुनरप्याहेति,** द्रव्यं रूपादिभ्यो भिन्नं रूपाद्यग्राहकज्ञानग्राह्यत्वात्, द्रव्यपर्यायौ वा परस्परं विभिन्नौ, विभिन्नबुद्धिग्राह्यत्वात्, रूपस्पर्शाविवेत्यत्रानुमानाकारो ज्ञेयः । बुद्धिभेदमेव स्पष्टयति–**अन्यैवेति** । बुद्धिभेदस्य विषयभेदेन सहाविनाभावमावेदयति–**अयञ्चेति** । पर्यायवादी उक्तानुमानमाश्रयासिद्ध्यादिना प्रतिक्षिपति–**अयुक्तमेतदपीति** । पर्यायवादिनम्प्रति रूपादिद्रव्ये अन्योन्यं भिन्ने इति साधयितुं न शक्यते, द्रव्यस्यापि पक्षान्तर्गतत्वेन तस्य तम्प्रत्यसिद्ध्याऽऽश्रयासिद्धिरित्याह–**यदि तावदुभयोरन्यत्वं साध्यत इति** । ननु विकल्पसिद्धोऽपि धर्मी पर्यायार्थिकवादिना स्वीक्रियत इति विकल्पसिद्धत्वमुपादाय द्रव्यस्य पक्षत्वम्भविष्यतीत्यत आह–**नहीति,** रूपादिकं सत्, द्रव्यञ्चासत् तयोरेकसाध्यवत्त्वन्न सम्भवति सति सन्नेव साध्यधर्मः, असति चासन्नेव, न तयोश्चैक्यमिति तदुभयविशेषणतयैकसाध्यासम्भवादित्याशय. । ननु द्रव्यं रूपादिभ्यो भिन्नं भिन्नबुद्धिग्राह्यत्वादित्येव साध्यते, तत्र द्रव्यमात्रस्यैव पक्षत्वेन न पक्षैकदेशाप्रसिद्धिरित्याशङ्कते–**अथेति** । सत्प्रतियोगिकस्य भेदस्यापि पारमार्थिकत्वेन पारमार्थिके वस्तुन्येव संसर्गो नापारमार्थिके, द्रव्यं च पारमार्थिकं नाद्यापि सिद्धमिति न तत्र पारमार्थिकरूपादिभेदसंसर्गसम्भव इत्याशयेन पर्यायवादी समाधत्ते–**तदसमञ्जसमिति** । असतोऽपि द्रव्यस्यासत्ख्यातिवादिना पर्यायास्तिकानामसत्ख्यात्या सिद्धिसम्भवान्नात्राश्रयासिद्धिदोषोद्भावनं न्याय्यमिति यदि परो ब्रूयात्तत्राह–**अनैकान्तिकश्चेति,** पानकस्य गुडोदकमरिच्यादिसमुदायरूपत्वमेव न तु तदतिरिक्तद्रव्यरूपत्वमिति सामान्यव्याप्तौ व्यभिचारो भवत्येवेति बोध्यम् । ननु विषयभेदमन्तरेण कथं बुद्धिभेद इत्याशङ्कायामाह–**विनाप्यर्थान्तरभूतेति** । समुदायिनः समुदायघटकत्वात्समुदायावयवत्वमभिप्रेत्योक्तम्–**रूपाद्यवयवानामिति,** एतदेव भावयति–**यथा गुडोदकाभ्यामिति** । विशिष्टा पङ्क्तिर्विपङ्क्तिः पुष्पादीनां क्रमिकसन्निवेशविशेषो मालादिरूपः, आदिपदाद्वनसेनादिपरिग्रहः; उक्तखण्डनमुपसंहरति–**तस्मादिति** । वैशेषिकनयमाश्रयति द्रव्यवादी–**स्वात्मव्यतिरिक्तेति,** यदि तन्तुभ्यो व्यतिरिक्त. पटः स्यात्तदा पटानारम्भावस्थाया प्रत्येकं तन्तूना यानि गुरुत्वानि तानि पटावस्थायामपि तन्तूना विद्यमानत्वात्सन्त्येव पटगुरुत्वमपि तत उत्कृष्टमधिकं जातमिति पूर्वं गुरुत्वकार्यं यादृशं नमनोन्नमनादिकं तुलायास्ततो विशिष्टं पटावस्थाया स्यान्न चैवं मात्रयाऽपि विशेष उपलभ्यतेऽतो नावयवातिरिक्तोऽवयवीति पर्यायवादी समाधत्ते–**अयुक्ततरमिदमिति,** तुलानतिविशेषाभावादिति यदुक्तं तदेव विशदयति–**यस्येति,** वैशे-

दशपलपरिमाणभाजस्तन्तवः पटे गौरवान्तरमारभेरन्, अतस्तुलानतिविशेषाग्रहणान्नान्योऽवयव्यवयवेभ्य इति धर्मविशेषनिराकरणात् पक्षापवादो वाक्यार्थः; पटश्च तन्तुषु समवयन् प्रतितन्तु वर्तेत कार्त्स्न्येन देशेन वा ? न तावदेकत्र तन्तौ कृत्स्नः समवेतः सन्निकृष्टेऽपि तन्तावग्रहणात्, स्तम्भादिसन्निकर्षे मेर्वाद्यग्रहणवत्, यश्च यस्मिन् समवेतः स तत्सन्निकर्षे गृह्यते, यथा रूपादिः, अवयविबहुत्वप्रसङ्गश्च; अथ तन्तौ पटस्य प्रदेशो वर्तते, न तर्हि कश्चिदेकः पटो वर्तत इति प्राप्तम्, न च तन्तुव्यतिरेकेणान्यः पटस्य देशोऽस्ति येन देशेनासौ तन्तौ वर्तेत, तन्तुरेव च तस्य देश इष्यते **वैशेषिकैः**, न च तस्यैव तस्मिन् वृत्तिर्युज्यते, सावयवश्चावयवी स्यादिति । एवमवस्थितैकद्रव्याभावात् सर्वमुत्पादविनाशलक्षितमर्थक्रियासमर्थं वस्तु, उत्पादविनाशशून्याश्च शशविषाणादयो न वस्तुव्यपदेशभाज इति प्रतीतम् । न च परमार्थतः कारणप्रकृतिरस्ति द्रव्यसत्ता यत्रावगम्यते भव्यत्वात्, कारणं कार्यमिति कल्पनामात्रमेतत्, प्रतीत्यप्रत्ययमात्रवृत्तित्वाद् दीर्घत्वह्रस्वतावत्, तन्तुपट-

---

षिकस्येत्यर्थः । अवयवगुणानामवयविगुणारम्भकत्वे कणादसूत्रं प्रमाणतयोपन्यस्यति—**द्रव्याणीति, धर्मविशेषेति,** अवयवगुरुत्वभिन्नावयविगुरुत्वेत्यर्थः, **पक्षापवादः,** अवयविरूपपक्षस्य निरसनम्, **वाक्यार्थः** प्रकृतखण्डनतात्पर्यार्थः । अवयवेष्ववयविनः कार्त्स्न्येनैकदेशेन वा वृत्त्यसम्भवादपि नातिरिक्तावयविसम्भव इत्याह—**पटश्चेति, समवयन्** समवायेन वृत्तिमद्भवन् । न चैकस्मिन्नेव तन्तौ पटस्य वृत्तिरित्याह—**न तावदेकत्रेति** । तथाभ्युपगमे को दोषस्तत्राह—**सन्निकृष्टेऽपीति,** एकतन्तुमात्रेण चक्षुषस्सन्निकर्षेऽपि पटस्य प्रत्यक्षाभावादित्यर्थः, यदि चैकतन्तुमात्रवृत्तिः पटः स्यात्तदैकतन्तुसन्निकर्षे तन्मात्रवृत्तिरूपादिवत्पटोऽपि गृह्येत, न च गृह्यते तस्मान्नैकतन्तुमात्रसमवेतः पट इति भावः । उक्तमर्थमन्वयव्यतिरेकदृष्टान्ताभ्यां भावयति—**स्तम्भादीति** । पटस्य प्रत्येकतन्तुपरिसमाप्तत्वे तन्तूनामनेकत्वात्पटस्याप्यनेकत्वं स्यादित्याह—**अवयविबहुत्वप्रसङ्गश्चेति,** एतावता प्रतितन्तु पटस्य कार्त्स्न्येन वृत्तिः प्रतिषिद्धा । प्रतितन्तु एकदेशेन पटवृत्तिप्रतिषेधनायाह—**अथेति** । न चायं पक्षः सम्भवत्यपि, तन्तुव्यतिरिक्तपटप्रदेशाभावादित्याह—**न च तन्तुव्यतिरेकेणेति** । ननु तन्तुस्स्वयमेव स्वस्मिन्पटस्य वृत्ताववच्छेदकोऽस्त्वत आह—**न च तस्यैवेति,** तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकत्वमिति नियमेन स्ववृत्तौ स्वस्यावच्छेदकत्वे स्वाश्रयत्वं स्वस्य प्रसज्येतेत्यात्माश्रयान्न मुक्तिः स्यादिति भावः । एवमभ्युपगमेऽखण्डस्वरूपत्वमप्यवयविनो न स्यादित्याह—**सावयवश्चेति,** यद्यप्यवयवोऽस्यास्तीत्यवयवीति व्युत्पत्तिबलादवयविनस्सावयवत्वमस्त्येवेति नेदमनिष्टम्, तथाप्याश्रयभूतादवयवाद्यतिरिक्तेन प्रत्येकावयववृत्त्यवच्छेदकावयवेनावयववत्त्वं तु नानुमतं तत्प्रसक्तिरेवात्र विवक्षितेति स्वमतं निगमयति पर्यायवादी—**एवमवस्थितैकद्रव्याभावादिति** । कार्यकारणयोस्तादात्म्यात्कारणमेव कार्यरूपेण परिणमत इत्येवमनुगामित्वात्कारणस्य द्रव्यत्वमिति पराभिप्रेतमप्यास्कन्दयन्नाह पर्यायवादी—**न च परमार्थत इति,** एतदुक्त्या कार्यकारणभावस्य कल्पनामात्रनिर्मिततनुत्वमावेदितम् । **कारणप्रकृतिः** कारणस्वभावः कारणात्मेति यावत् । यत्र कारणप्रकृतौ, **भव्यत्वात्** तेन तेन कार्यरूपेण भवनशीलत्वात्परिणमनस्वभावत्वाद्वा, भव्यं च द्रव्यमिति वचनप्रामाण्यादेतदुक्तिः । कार्यकारणभावस्य काल्पनिकत्वं व्यवस्थापयन्नाह—**कारणमिति** । काल्पनिकत्वे हेतुः—**प्रतीत्यप्रत्ययमात्रवृत्तित्वादिति,** प्रतीत्य किञ्चिदपेक्ष्य प्रत्ययो ज्ञानं यस्य स प्रतीत्यप्रत्ययस्तन्मात्रवृत्तित्वात् सनिरूपकत्वादिति यावत्, कारणं हि कार्यमपेक्ष्यैव प्रतीयते इदमस्य कारणं, न तु केवलं कारणमित्यवगतिः, कार्यमपि कारणमपेक्ष्यैव ज्ञायते इदमस्य कार्यमिति, न त्वपेक्षाविनिर्मुक्तं कार्यमित्येतावन्मात्रं तदवगतिरस्तीति । यच्च प्रतीत्यप्रत्ययमात्रवृत्ति तत्कल्पनानिर्मितशरीरमिति सामान्यव्याप्तौ दृष्टान्तमाह—**दीर्घत्वह्रस्वतादिवदिति,** अयमस्माद्दीर्घोऽयमस्माद् ह्रस्व इत्येवं दीर्घत्वह्रस्वत्वयोः प्रत्ययात् तयोः प्रतीत्यप्रत्ययमात्रवृत्तित्वं सुप्रतिपन्नम्, न च ते अपि वास्तविके एव, वास्तवस्य सर्वापेक्षयैकरूपत्वात्, यद्धि नीलं तन्न किञ्चिदपेक्षया नीलं किञ्चिदपेक्षयाऽनीलं च सम्भवति, तस्य सर्वापेक्षया नीलत्वादेव, दीर्घत्वह्रस्वत्वे च न सर्वापेक्षयैकरूपे प्रतीयेते, एकापेक्षया दीर्घतया प्रतीयमानस्यैवान्यापेक्षया ह्रस्वतया प्रतीयमानत्वात्, एवं कारणत्वकार्यत्वे अपि । नहि कारणत्वकार्यत्वे सर्वसाधारण्येन प्रतीयेते तथा सति घटकारणस्यापि पटकारणत्वं प्रसज्येत कुलालकार्यमपि तन्तुवायकार्यं स्यात्ततश्च प्रतीत्यप्रत्ययमात्रवृत्तित्वात्कार्यकारणभावस्य काल्पनिकत्वमिति, **तन्तुपटयोरिति** । तन्तुषु यत्कारणत्वं पटे च यत्कार्यत्वं न तत्

योर्मृद्घटयोर्वा न किञ्चित् स्वसिद्धं रूपमस्ति, तन्तुषु मृदि वा यः कारणप्रत्ययः स पटकुम्भाद्यशेषार्थान्तरापेक्षया, न स्वसिद्धः, तस्मात् तन्तुपटयोर्यस्तन्तुपटप्रत्ययः स इतरेतराश्रयत्वादसदर्थविषयः, तथा मृद्घटयोः, अतत्कारणकार्ययोरभाव एव स्वरूपस्यासिद्धत्वाद् व्योमोत्पलादिवदिति । अत्रोच्यते—प्रागुत्पतद्भिरेवास्माभिरभ्यधायि स्थित्युत्पत्तिविनाशस्वभावं सकलमेव सत्, एतौ च द्रव्यपर्यायौ परस्परनिरपेक्षौ न सतो लक्षणम्, द्रव्यास्तिकस्य ध्रौव्यमात्रवृत्तित्वात्, पर्यायस्योत्पत्तिव्ययमात्रवृत्तित्वात्, परस्परापेक्षौ तु वस्तुस्वतत्त्वम्, न च द्रव्यांशः पर्यायांशो वा परमार्थतः कश्चिदस्ति परिकल्पितत्वात् ॥ यथाऽऽह—

"नान्वयो भेदरूपत्वान्न भेदोऽन्वयरूपतः । मृद्भेदद्वयसंसर्गवृत्तिर्जात्यन्तरं घटः ॥"

अत एकान्तवादपरिकल्पिताद् वस्तुनोऽनेकान्तवादिनः संमतं वस्तु जात्यन्तरमेवाविभक्तरूपद्वयसंसर्गात्मकत्वाद् नरसिंहादिवत्, यथा—

"न नरः सिंहरूपत्वान्न सिंहो नररूपतः । शब्दविज्ञानकार्याणां, भेदाज्जात्यन्तरं हि तत् ॥"

तदेवं घटाद्यपि कल्पिताद् द्रव्यार्थरूपात् पर्यायार्थरूपाच्च जात्यन्तरमित्येवंविधप्रक्रियाभ्युपगमेन च सर्वमेकनयमतानुसारि दूषणमुपन्यस्यमानमसम्बद्धमेवापनीपद्यते, यतश्चैवमतो भेदाभेदस्वभावेऽपि

---

**स्वसिद्धं** स्वाभाविकम् । एवं मृद्घटयोरपि कारणत्वकार्यत्वे न स्वाभाविके, तथा सति सर्वापेक्षया तन्तुत्वादिकमिव कारणत्वादिकमपि स्यात्, नहि तन्तुत्वादिकं तत्र निरूप्यमाणं किञ्चिदपेक्ष्यैव भवतीति तत्स्वाभाविकं नैवं कारणत्वादिकं, तत्तु किञ्चिदपेक्ष्यैव निरूप्यतेऽतः कल्पितमित्याशयः । **पटकुम्भाद्यशेषे**त्यत्राशेषशब्दः स्वस्वनियतकार्यमात्रार्थकः । **न स्वसिद्धः**, न स्वाभाविकः, **तन्तुपटप्रत्ययः** पटावयवत्वेन तन्तुप्रत्ययः, तन्त्ववयवित्वेन पटप्रत्ययः । पटावयवत्वं परिकल्प्य तन्तुव्यपदेशप्रत्ययौ तन्त्ववयवित्वं प्रकल्प्य पटव्यपदेशप्रत्ययौ न निरपेक्षौ किन्त्वन्योन्यापेक्षावित्यन्योन्याश्रयकवलितावित्याह—**स इतरेतराश्रयत्वादसदर्थविषय इति**, उक्तन्यायमन्यत्राप्यतिदिशति—**तथेति** । **अतत्कार्यकारणयोरिति**, नहि मृत् घटस्य कारणं नापि घटो मृदः कार्यम्, अनेवम्भूतयोरपि कल्पनाकोशमात्रनिर्मितवपुषोरित्यर्थः । **स्वरूपस्य** स्वसिद्धस्वरूपस्य, मृत्त्वघटत्वादिकं च सामान्यं नास्त्येव केवलमारोप्यते स्वस्वसिद्धान्ताभिनिवेशवशात्, तत एव च मृद्घटादिव्यपदेशप्रवृत्तिरिति । एवं द्रव्यास्तिकपर्यायास्तिकनयवादावेकान्तौ परस्परस्वरूपमर्दकावुपदर्श्य ग्रन्थकारस्स्वसिद्धान्तमावेदयन्नाह—**अत्रोच्यत इति** । **उत्पतद्भि**र्वस्तुस्वरूपं निरूपयद्भिः । **द्रव्यांशो** द्रव्यमात्रम्, **पर्यायांशः** पर्यायमात्रम् । अन्योन्यनिरपेक्षयोः द्रव्यपर्याययोरपारमार्थिकत्वे वृद्धसम्मतिमुपदर्शयति—**यथाहेति** । **नान्वयो** न द्रव्यमात्रत्वम्, **भेदरूपत्वाद्** उत्पादविनाशरूपपर्यायस्वभावत्वात् । **न भेदो** न केवलं मुक्तपर्यायस्वरूपविशेष एव, **अन्वयरूपत** उत्पादव्ययानुस्यूतद्रव्यस्यापि भावात् । तर्हि किंस्वरूपं वस्त्वित्यपेक्षायाह—**मृद्भेदेति**, **मृदिति** द्रव्योपलक्षकम्, **भेदः** पर्यायः, **जात्यन्तरमिति**, नैकान्तोभयरूपमपि, प्रत्येकपक्षदोषस्योभयपक्षेऽपि सद्भावात्, "प्रत्येकं यो भवेद्दोषो द्वयोर्भावे कथं न स." इत्युक्तेः, किन्तु नरसिंहादिवद्विलक्षणोऽखण्डस्वरूप एव प्रत्येकपक्षदोषासंस्पृष्ट इति, एतदेव भावयन्नाह—**अत इति** । **नरसिंहादिवदि**त्युक्तदृष्टान्तं विशदयति—**यथेति** । **शब्दविज्ञानकार्याणामिति**, नरे नरशब्दः सिंहे सिंहशब्दः नरसिंहे तु न नरशब्दो नापि सिंहशब्दोऽभिधायकतया प्रवर्त्तते किन्तु नरसिंहशब्द इति शब्दभेदः, एवं नरे नरबुद्धिः सिंहे सिंहबुद्धिः, नरसिंहे तु नोक्तबुद्धी अवभासकतया प्रवर्त्तेते किन्तु नरसिंहबुद्धिरेवेति बुद्धिभेदः, नरकार्यसिंहकार्यविलक्षणमेव तदुभयासाध्यं हिरण्यकशिपुहृदयविदारणं नरसिंहकार्यमिति कार्यभेदः, इत्यतो नरात्सिंहाच्च विलक्षणमेव जात्यन्तरं नरसिंहः । एवमेकान्तवाद्यभिमतद्रव्यपर्यायप्रत्येकस्वरूपोभयस्वरूपविलक्षणमेवान्योन्यसापेक्षोत्पादव्ययध्रौव्यात्मकमनेकान्तवाद्यभिमतं वस्त्वित्यर्थः । एतदेव निगमयन्नाह—**तदेवं घटाद्यपीति**, **कल्पिताद्** अपारमार्थिकात्, एकान्तानुगतिस्वरूपादिति यावत्, **कल्पितादिति** च **पर्यायार्थरूपादि**त्यत्राप्यन्वेति तदानीमेकान्तव्यावृत्तिरूपादिति तदर्थः, जात्यन्तरमित्यस्य भिन्नमित्यर्थः । **एवंविधप्रक्रिया** स्याद्वादप्रक्रिया, **आपनीपद्यते** प्राप्नोति, **यतश्चैवं** यतोऽनेकान्तोत्पादव्ययध्रौव्यात्मकं वस्त्वेकान्तनयानुसारिदूषणास्पृष्टम् । **उपगूहमानो** रक्षमाणः, **प्रादु-**

वस्तुनि कदाचिदभेदप्रत्ययः स्ववासनावेशात् केवलमन्वयिनमंशमुपगूहमानः प्रवर्तते, कदाचिद् भेदमात्रवादिनो भेदावलम्बनः प्रत्ययः प्रादुरस्ति, स्याद्वादिनस्तु जिज्ञासितविवक्षितार्थायत्तज्ञानाभिधानस्य द्रव्यपर्याययोः प्रधानोपसर्जनभावापेक्षया समस्तवस्तुविषयव्यवहारप्रवृत्तिर्वस्तुतत्वमनेकाकारमेव ॥ यथाऽऽह–

"सर्वमात्रासमूहस्य, विश्वस्यानेकधर्मणः । सर्वथा सर्वदाभावात्, क्वचित् किञ्चिद् विवक्ष्यते ॥"

इति । भवतु नाम विवक्षावशाद् वचनव्यवहारः, चक्षुरादिज्ञानं पुनः प्रवर्तमानं न सहते कालान्तरम्, प्रथमसम्पात एव स्वविषयग्रहणात्, तद् यदि भेदाभेदस्वभावं वस्तु किमिति प्रथमत एव तदुल्लेखमिन्द्रियज्ञानं नोत्पद्यते, अतो मनोविज्ञानविकल्पमात्रं द्रव्यपर्यायाविति ? । अत्रोच्यते–चक्षुरादिविज्ञानान्यवग्रहादिक्रमेणोत्पद्यन्ते, अर्थावग्रहश्चैकसामायिकः प्राक्, ततो मुहूर्ताभ्यन्तरवर्तीहाज्ञानं, ततोऽपायज्ञानमनन्तरं प्रमाणमिन्द्रियमेव व्यापारयतो निश्चिताकारमुपजायते, तद्भावे भावात् तदभावे चाभावात्, निश्चयश्चक्षुरादिविषयोऽप्यस्ति मनोविषयश्चाष्टाविंशतिविधत्वान्मतेर्बह्वादिभेदेन वा बहुतरविकल्पत्वाद्, अस्त्येवेदं निश्चिताकारमिन्द्रियस्य ग्रहणं द्रव्यपर्यायाविति, मानसमपि यदि

---

रस्तीत्यतः पूर्वं केवलं व्यावृत्तस्वरूपमंशमुपगूहमान इति दृश्यम्, उभयत्रान्यांशे गजनिमीलिकामवलम्बमान इत्यपि दृश्यम्, स्ववासनावेशादिति चोत्तरत्रापि हेतुः । नयवक्तव्यतामुपदर्श्य प्रमाणवक्तव्यतामाह–**स्याद्वादिनस्त्विति,** द्रव्यपर्याययोः प्रधानोपसर्जनभावापेक्षया समस्तवस्तुविषयव्यवहारप्रवृत्तिः **जिज्ञासितविवक्षितार्थायत्तज्ञानाभिधानस्य** स्याद्वादिन इत्यन्वयः, जिज्ञासितविवक्षितार्थायत्ते ज्ञानाभिधाने यस्य भवतस्स जिज्ञासितविवक्षितार्थायत्तज्ञानाभिधानस्तस्येत्यर्थः, अत्र स्याद्वादिनो योऽर्थो येन द्रव्यात्मना पर्यायात्मना वा जिज्ञासितो भवति तस्यार्थस्य तेन रूपेण ज्ञानम्भवति यश्चार्थो येन द्रव्यात्मना पर्यात्मना वा विवक्षितो वक्तुमिष्टो भवति तस्यार्थस्य तद्रूपमुपादायाभिधानम्भवति । एतस्माज्जिज्ञासाविवक्षावैचित्र्यात्स्याद्वादे द्रव्यपर्याययोरेकत्र वस्तुनि समप्रधानभावेऽपि प्रधानोपसर्जनभावावलम्बनेन समस्तवस्तुव्यवहारः प्रवर्त्तते, नैतावता वस्तुत्वं द्रव्यमात्रवृत्ति पर्यायमात्रवृत्ति वा, किन्तु द्रव्यपर्यायानेकाकारवृत्त्येव, व्यवहारवैचित्र्यस्यैवमपि जिज्ञासाविवक्षावैचित्र्यत उपपत्तेरित्यर्थः । उक्तमर्थं प्राचीनसम्प्रतिपत्त्या दृढीकरोति–**यथाहेति, सर्वमात्रासमूहस्येत्यत्र** मात्रापदं द्रव्यपर्यायांशपरम्, **सर्वथा** सर्वप्रकारेण द्रव्यपर्यायादिस्वभावेन । एवं सति कुतो न सर्वरूपेण सर्वस्याभिधानमित्यत आह–**क्वचिदिति,** यदा यस्य येन रूपेण विवक्षा तदा तेन रूपेण तस्य व्यवहार इत्यर्थः । वस्तुन उत्पादादित्रयात्मकत्वे भेदाभेदस्वरूपस्य घटादेश्चक्षुर्जन्यज्ञाने प्रथमत एव भानं स्यात्तस्यार्थजन्यत्वादर्थस्य च त्र्यात्मकत्वादित्याशङ्कते–**भवतु नामेति,** अतः, चक्षुस्सन्निपातानन्तरजायमानज्ञानेऽर्थजन्ये भेदाभेदादेरप्रतिभासनात्, अवग्रहादिक्रमेण प्रवर्त्तमानस्य चक्षुरादिप्रभवस्य ज्ञानस्य सामान्यविशेषविषयकत्वाद्भेदाभेदादिविषयकत्वमस्त्येवोपयोगदैर्घ्यमाश्रित्येति सिद्धान्ती समाधत्ते–**अत्रोच्यत इति, अवग्रहादी**त्यादिपदादीहापायधारणानां परिग्रहः, व्यञ्जनावग्रहस्यार्थाविषयकत्वादर्थावग्रहमादीकृत्य क्रममुपदर्शयति–**अर्थावगाहश्चेत्यादि,** सामान्यमात्रेण वस्तुग्रहणमवग्रहः किञ्चिदस्तीति, प्रायो वृक्षेणानेन भवितव्यमितीहा, वृक्ष एवायमित्यपायः, धारणा चापायस्यैवोत्तरकालावस्थानपरिणामस्य संज्ञेति, तथा चैतावच्चतुष्टयस्वरूपतामास्कन्दतो दीर्घोपयोगरूपस्य चक्षुरादिप्रभवमतिज्ञानस्य भेदाभेदात्मकवस्तुविषयकत्वमस्त्येवेति युक्तमुत्पादाद्यात्मकत्वं वस्तुन इति, इन्द्रियमेव व्यापारयतः प्रमातुर्निश्चिताकारमपायज्ञानं प्रमाणमुपजायत इत्यन्वयः । इन्द्रियमेवेत्येवकारेण तस्य ज्ञानस्य मानसविकल्परूपत्वव्यवच्छेदः । तस्येन्द्रियप्रभवत्वेऽन्वयव्यतिरेकौ प्रमाणयति–**तद्भावे भावादिति । चक्षुरादिविषयः,** चक्षुरादीन्द्रियजन्यः, चक्षुरादिना विषयो यस्य भवतीति व्यधिकरणबहुव्रीहेरन्यत्रासाधुत्वेऽप्यत्रागत्या स्वीकरणीयत्वम्, अथवा चक्षुरादिपदं चक्षुरादिविषयपरं, तथा च चक्षुरादिश्चक्षुरादिविषयो विषयो यस्येति बहुव्रीहिरेवात्र साधुः । **मनोविषयश्चेत्यत्रापि निश्चय** इत्यनुवर्त्तते, अर्थगतिः पूर्ववत् । **अष्टाविंशतिविधत्वादिति,** एतच्च प्रथमाध्याये प्रपञ्चितम् । तथा च चक्षुरादिप्रभवमपि ज्ञानं द्रव्यपर्यायालम्बनमुपपद्यत इत्याह–**अस्त्येवेदमिति,** इदं द्रव्यपर्यायाविति निश्चिताकारं ग्रहणमिन्द्रियस्यास्त्येवेत्यन्वयः । इन्द्रियस्येत्यत्र जन्यजनकभावलक्षणसम्बन्धार्था षष्ठी । मानसस्यापि द्रव्यपर्यायविषयकग्रहणस्य नासद्विषयकत्वं तेनापि च द्रव्यपर्यायोभयात्मकत्वं वस्तुनोऽभ्युपगन्तव्यमेवेत्याह–**मानसमपीति,** मानसस्यापि नायथार्थत्वमिति प्रपञ्चयति–

भवति, भवतु नाम. को दोषः ? सर्वथा मनोविज्ञानमेवेदम्, तच्चाभूतं विकल्पमात्रमित्येतदसत्, अतो यदवाचि—"ननु रूपादिव्यतिरेकेण मृद्द्रव्यमित्येकवस्त्वालम्बनश्चाक्षुषः प्रत्ययः प्रत्याख्यातुमशक्य इति" तत्स्वमतिजृम्भितसमुत्थापितविकल्पमात्रम्, स्याद्वादिप्रक्रियानवबोधात्, यतो न रूपादिभ्योऽत्यन्तव्यतिरिक्तं किञ्चिद् द्रव्यमस्ति, कथञ्चिद् भेदे वा परस्याभ्युपेतबाधा स्यात्कारलाञ्छनार्थज्ञानवचसो वा वादिनः सिद्धसाध्यतासमास्कन्दनात् सर्वमसमीचीनम् । न चान्धतमसादौ केवलमृद्द्रव्यग्रहणमस्त्यभिहितन्यायात्, अपि च—

"द्रव्यं पर्यायवियुक्तं पर्याया द्रव्यवर्जिताः । क्व कदा केन किंरूपा दृष्टा मानेन केन वा ? ॥"

नहि विशेषनिरपेक्षो ध्रौव्यांशः सामान्यलक्षणः कश्चिद् विद्यते यो गृह्येत केवलः, न च सामान्यनिरपेक्षः कश्चिद् विशेषो नाम विद्यते य इन्द्रियाणां गोचरतामापद्यते ॥ अथैवमाशङ्केथाः—न ब्रूमो नास्ति सामान्यांशः, स हि विद्यमानोऽपि ग्रहणकाले ग्रहीतुमशक्य इति विशेषमात्रग्रहणमेवेति, एवं तर्हि सामान्यांशस्वशरीरविरहाद् विभावत्वाद् व्योमोत्पलादिवत् कुतो विशेषग्रहणम् ? । सामान्योपलम्भानुभवविरोधश्च सामान्यशून्यविशेषमात्रग्रहणवादिनः । नापीन्द्रियविषयसङ्करः,

---

**सर्वथेति, मनोविज्ञानमेवे**त्येवकारेण तादृशज्ञानस्य चक्षुरादिप्रभवत्वव्यवच्छेदः । भवतु मनोविज्ञानमेव तत् तेनापि च द्रव्यपर्यायात्मकत्वं वस्तुनः सेत्स्यतीत्यावेदयितुमाह—**तच्चाभूतमिति,** अभूतमित्यस्यायथार्थमित्यर्थः । **इत्येतदसत्,** एवमभ्युपगमो निष्प्रमाणक इत्यर्थः । व्यवस्थिते च द्रव्यपर्यायोभयात्मकत्वे, द्रव्यैकान्तवादिप्ररूपितयुक्तिजालमयुक्तमेवेत्याह—**अतो यदवाचीति,** स्याद्वादिप्रक्रियामेवोपदर्शयति—**यत इत्यादिना । कथञ्चिद्भेदे वेति,** द्रव्यस्य रूपादिपर्यायेभ्यः कथञ्चिद्भेदाभ्युपगमे वेत्यर्थः । **परस्य** द्रव्यैकान्तवादिनः । **अभ्युपेतबाधा,** स्वाभ्युपगतस्य पर्यायात्सर्वथा व्यतिरिक्तद्रव्यवादस्य बाधा, तथा चैवमभ्युपगमेऽपसिद्धान्तदोषो दुरुद्धरः । स्याद्वादीष्टसिद्ध्यापीत्येतद्वचनस्य परम्प्रत्यसमञ्जसत्वमिति स्ववधाय कृत्योत्थापनमेव स्यादित्याह—**स्यात्कारेति, वादिनः** स्याद्वादिनः । यत्पुनर्द्रव्यवादिना पूर्वमुक्तम्—"सन्तमसपटलावच्छादितप्रदेशवर्त्तिनि वा मृद्द्रव्ये स्पर्शनज्ञानमभिन्नमृद्द्रव्यालम्बनमसत्यमिति वा भाषितुं न पार्यते" इत्यादि, तदपि न युक्तमित्याह—**न चान्धतमसादाविति, अभिहितन्यायादिति,** ज्ञानमात्रे द्रव्यपर्यायोभयविषयकत्वव्यवस्थापकपूर्वोक्तयुक्तेरित्यर्थः । चक्षुरादिज्ञानस्य जात्यन्तरविषयकत्वे युक्त्यन्तरमाह—**अपि चेति, द्रव्यमिति,** व्यक्तमदः, **क्व** कस्मिन्देशे, **कदा** कस्मिन्काले, **केन** केन प्रमात्रा, **किंरूपाः** कि प्रकाराः, **केन मानेन** प्रत्यक्षाद्यन्यतमेन केन प्रमाणेन, **दृष्टा** अवलोकिताः, अर्थात् नैवेत्यर्थः, एतदेव भावयति—**नहीति** । पर्यायवादिमतमाशङ्क्य प्रतिक्षिपति—**अथैवमाशङ्केथा इति । स** सामान्यांशः, **हि** यतः, **एवं तर्हि** सामान्यांशस्याग्रहणे हि, **सामान्यांशस्वशरीरविरहादिति,** द्रव्यासहित एव पर्याय इति पूर्वं निर्णीतमेव, तत्र सामान्यांशाग्रहणे तन्नियतविशेषस्याप्यग्रह इति सामान्यरूपं यत् स्वस्य विशेषस्य शरीरं तद्विरहात्, एवं सति **विभावत्वात्,** विगतो भावस्सत्ता यस्मात्स विभावस्तत्त्वात्, उत्पादव्ययध्रौव्यात्मकत्वं हि सत्त्वम्, तच्च द्रव्यपर्यायोभयरूपत्वे सत्येव भवति ध्रौव्यांशाभावे तन्न भवत्येव, तथा च **व्योमोत्पलादिवत्कुतो विशेषग्रहणमिति,** व्योमोत्पलादेरप्यग्रहणे उक्तलक्षणसत्त्वाभाव एव नियामकः स च प्रकृतेऽप्यविशिष्ट इति विशेषमात्रग्रहणमिति रिक्तं वच इति भावः । नह्यनुभवमभिभूय किमपि कल्पयितुं शक्यते, अनुभवश्च सामान्यांशग्रहणस्यापीति तदपलाप आग्रहमात्रविलसित इत्याह—**सामान्योपलम्भेति,** ननु यदि न सामान्यांशं परित्यज्य विशेषमात्रग्रहणं चक्षुरादिभिस्तर्हि तेषां विषयसंकरः स्यात्, असंकीर्णविषयतया च तेषामुपगमः प्रामाणिकानामिति विषयसाङ्कर्यपरिहाराय सामान्यांशाग्रहणमेव न्याय्यमित्यत आह—**नापीन्द्रियविषयसङ्कर इति,** सर्वथा विषयसाङ्कर्यं तदा स्याद्यदि सामान्यमात्रमेवालम्बनं सर्वेषां स्यान्न चैवं, किन्तु विशेषोऽपि तदंशरूपप्रतिनियतविषयकत्वाद्विषयासाङ्कर्यमप्यस्त्येव, अनुभवस्य दुरपह्नवत्वात्सामान्यांशरूपविषयसांकर्यन्त्विष्टमेव, सर्वत्र कथञ्चित्प्रकारस्य स्याद्वादिभिरभ्युपगमात्सामान्यांशरूपविषयाभेदेऽपि स्वस्वावरणकर्मक्षयोपशमरूपकारणवैलक्षण्याद्वैलक्षण्यं चक्षुरादिज्ञानानां सम्भवत्येव । एवं विशेषांशविषय-

चक्षुरादिज्ञानावरणकर्मक्षयोपशमविशेषात् तादृश एवासौ क्षयोपशमो येन समस्तान्येवेन्द्रियाण्येकसामान्यग्रहणे व्याप्रियन्ते, न पुनर्विशिष्टान्यान्यार्थग्रहणे, तथा दृश्यमानत्वात्। न चास्ति काचिद् युक्तिर्यद् विवक्षितं वस्तु सर्वथा वस्त्वन्तरेणासदृशं स्वरूपेऽवस्थास्यते, सर्वप्रकारमतुल्यत्वाद् वन्ध्यासुतादिवत्, अतो भावान्तरेण तुल्यताऽवश्यमभ्युपेया विवक्षितस्य वस्तुनः सत्त्वमिच्छता। तच्च सामान्यं ध्रौव्यलक्षणम्। न चैतद् बुद्धिपरिकल्पनामात्रे सामान्ये घटते, परिकल्पस्य वस्त्वसंस्पर्शात् तादवस्थ्यं दोषाणाम्, परिकल्पश्चाभूतोऽपि तत्त्वतो वस्तुष्वेव तादृशीं धियमुत्पादयति, नावस्तुषु वाजिविषाणादिष्विति किमत्र कारणम्?, उपादाय वस्तु विकल्पः प्रवर्तत इति चेत्, तदसत्, तस्य वस्तुनो वस्तुत्वेनानिर्धारितत्वान्नोपादानकारणता, न च सर्वथा वस्तुनः तुल्यतैव, यदि स्यात् ततो वैरूप्यशून्यत्वाद् विवक्षितं वस्तु वस्त्वन्तरादन्यदित्येष प्रत्ययो न स्यात्, केनचिदप्याकारेण भेदाभावात्, अतो भेदमभिलषता प्रेक्षापूर्वकारिणा वैरूप्यमपि केनचिदाकारेणाभ्युपेयम्, एवं चेत् सामान्यविशेषस्वभावं सर्वदा सर्वमेव वस्त्विति प्रतिपत्तव्यम्। न च सामान्यविशेषयोः स्वलक्षणभेदेऽप्यत्यन्तभेदः, शबलरूपत्वात्, वस्तुनश्च वस्तुतयाऽपि वस्त्वन्तरातुल्यत्वेऽन्यतरस्यावस्तुत्वप्रसङ्गात् तदविनाभावाच्च द्वितीयस्याप्यभाव इति सर्वं शून्यं स्यात्, इष्यत एवेति चेत्, तदयुक्तम्, प्रमाणप्रमेयप्रतिपाद्यप्रति-

वैलक्षण्यमपीत्याशयेनाह–**चक्षुरादीति**। इन्द्रियविषयसङ्करहेतोः क्षयोपशमविशेषस्य माहात्म्यमाविर्भावयति–**तादृश एवेति, विशिष्टेति,** सर्वथा विलक्षणेत्यर्थः, तेन विशेषांशमादाय विभिन्नार्थग्राहित्वस्य सिद्धान्त्यभ्युपगतत्वेऽपि न क्षतिः। उक्ताभ्युपगमेऽनुभवं प्रमाणयति–**तथा दृश्यमानत्वादिति**। ननु सर्वं वस्तु परस्परं विलक्षणमेव ततो न सामान्यांशसम्भावनाऽपीत्यत आह–**न चास्तीति**। यद्धि न केनचित्सदृशं तन्न सत् यथा वन्ध्यासुतः, असदृशं च वस्त्वभ्युपगम्यते पर्यायैकान्तवादिनेति तदपि न सत्स्यादित्याह–**सर्वप्रकारमतुल्यत्वादिति, तच्च** तुल्यतालक्षणञ्च। ननु कल्पितेनैव सामान्येन तुल्यताऽस्तु कोऽत्र दोष इत्यपेक्षायामाह–**न चैतदिति,** एतत् तुल्यत्वम्। **परिकल्पस्य,** कल्पनैकमात्रशरीरस्य सामान्यस्य। **वस्त्वसंस्पर्शात्,** पारमार्थिकवस्तुसंसर्गाभावात्। **तादवस्थ्यं दोषाणामित्युक्तं** तदेव स्पष्टयति–**परिकल्पश्चेत्यादिना, किमत्र कारणमित्यन्तेन,** किमत्र कारणमित्यस्य काक्वा नास्त्यत्र कारणमित्यर्थः। वस्तून्युपादाय विकल्पः प्रवर्त्तते नावस्तूनि, ततो वस्तुष्वेवानुगतबुद्धिर्नावस्तुषु शशविषाणादिष्विति परः शङ्कते–**उपादायेति, वस्तु** उपादायेत्यन्वयः, वस्तुनः विकल्पं प्रति कारणत्वे सति वस्तु उपादायेति वक्तुं शक्यते, कारणत्वं च वस्तुत्वेनैव वाच्यम्, अन्यथा शशशृङ्गादिकमुपादायापि अनुगतबुद्धिः प्रवर्त्तेत, वस्तुत्वञ्चोत्पादव्ययध्रौव्ययुक्तत्वमिति ध्रौव्यांशमन्तरेण न निर्णयविषय इति। ध्रौव्यांशाभावे शशशृङ्गादिवदवस्तुत्वेनाभिमतस्यापि वस्तुत्वाभावादवस्तूपादाय विकल्पः प्रवर्त्तत इति वक्तुं न शक्यत इति समाधत्ते–**तदसदिति,** एतावता सर्वथा पर्यायरूपतैवेत्यस्य व्यवच्छेदः। इदानीं सर्वथा सामान्यरूपमेव वस्त्वित्यपि नास्तीत्याह–**न च वस्तुन इति**। सर्वथा वस्तुनस्तुल्यताभ्युपगमे दण्डमाह–**यदि स्यादिति,** सर्वथा यदि वस्तुनः तुल्यता स्यादित्यर्थः। **ततः** तदा। **भेदमभिलषता,** विवक्षितं वस्तु वस्त्वन्तरादन्यदिति भेदप्रतीतिमभिलषतेत्यर्थः, तेन द्रव्यैकान्तवादिनो भेदाभिलाषाभावेऽपि न क्षतिः, व्यवहारान्यथानुपपत्त्या भेदप्रतीतिस्तस्यापीष्टत्वादभिलाषागोचर इत्यभिसन्धिः। अनुगतप्रतीत्यनुरोधेन सामान्यस्य व्यावृत्तिप्रतीत्यनुरोधेन भेदस्य च सिद्धौ सत्यां यन्निष्पन्नं तदाह–**एवं चेदिति**। ननु सामान्यविशेषयोः परस्परविविक्तलक्षणकत्वेनैकवस्तुस्वरूपत्वं कथं स्याल्लक्षणात्मकविरुद्धधर्माध्यासात्परस्परं भेद एव स्यादित्यत आह–**न चेति, स्वलक्षणभेदेऽपीति,** सामान्यस्य यल्लक्षणमनुगतप्रतीतिजनकत्वं विशेषस्य च यल्लक्षणं व्यावृत्तिबुद्धिजनकत्वं तद्भेदाद्भेदेऽपीत्यर्थः। **न चात्यन्तभेद** इत्यत्र हेतुमाह–**शबलरूपत्वादिति,** चित्रस्वभावत्वादित्यर्थः, वस्तुत्वेन रूपेण सर्वेषां वस्तूनामैक्यं स्वस्वासाधारणरूपेण भेद इत्येवं भेदाभेदसंवलनात्मकत्वादिति यावत्। एतदेव भावयितुमाह–**वस्तुनश्चेति,** एकेन वस्तुना समं द्वितीयस्य वस्तुनस्तुल्यत्वं तदैव न भवेद्यद्युभयोर्वस्तुत्वं न स्यात्, अन्यथा वस्तुत्वस्योभयत्र सत्त्वात्तद्रूपेण तुल्यतां को वारयिता, वस्तुत्वाभावे चावस्तुत्वं स्यादेवेत्यर्थः। अत्र माध्यमिक आह–**इष्यत एवेति,** सर्वस्य शून्यत्वमिष्यत एवेत्यर्थः। शून्यताऽपि कथायामेव केनचित्प्रमाणेन शून्यतावादिना जगत्सत्यत्ववादिनम्प्रति साधनीया, तद-

बाधकसद्भावात् । सांवृत एव व्यवहार इति चेत्, तदप्यसत्, संवृतिः प्रमाणमप्रमाणं वा स्यात् ? यदि प्रमाणं ततो बाधकप्रमाणाभावात् परमार्थसत्त्वं प्रत्यक्षादिवत्, अथाप्रमाणं संवृतिः ततो देवानांप्रियस्य व्यर्थः प्रयासः, प्रमाणप्रतीतिनिबन्धत्वात् प्रेक्षापूर्वकारिव्यवहाराणाम् । अथ सकलशून्यताप्रसङ्गभीत्या सामान्यविशेषयोस्तुल्यत्वमेव वस्तुतयाऽभ्युपेयते ततः सामान्यविषयस्वभावं सर्वमिति व्यपेतशङ्कं प्रतिपद्यस्व, परस्परं वा स्वभावविरहाभावात् सामान्यविशेषयोः सङ्कीर्णतायां सत्यामपि धर्मभेदप्रसिद्धेः समस्तव्यवहारसम्प्रसिद्धिः, कारकशक्तिवत्; कारकशक्त्योर्ह्येकद्रव्याव्यतिरिक्तत्वात् सङ्कीर्णा अपि कार्यभेदाद् भेदमनुपतन्त्य एवोपलभ्यन्ते विशिष्टव्यवहारहेतवः, तद्वदत्रापि द्रष्टव्यम् । न च सामान्यविशेषव्यतिरिक्तः कश्चिदनयोः सामान्यविशेषयोराधारभूतो द्रव्यांशोऽपरः समस्ति परपरिकल्पितः, तुल्यातुल्यांशव्यतिरेकेणानुपलभ्यमानत्वाद् द्रव्यांशस्य; यदि तावदसावन्यस्माद् व्यावृत्ततयाऽवगम्यते ततो विशेष एव, अथानुवृत्तिद्वारेण परिच्छिद्यते सामान्यांशः स्यात्, न ह्यन्यथा प्रत्ययप्रवृत्तिर्या द्रव्यमालम्बेत, अतो वस्त्वेकमनेकाकारम्; आकाराश्चानुवृत्तिप्रत्ययावसेयाः

---

नुरोधेन च शून्यतारूपः प्रमेयः, तत्साधकं प्रमाणं, प्रतिपाद्यो जगत्सत्यत्ववादी, प्रतिपादकश्च स्वात्मा शून्यवादिनाऽभ्युपगन्तव्य एवेति कथं सर्वशून्यता, तद्दृष्टान्तेन तत्तुल्यन्यायादन्यस्यापि संसिद्धौ पूर्णताया एव जगति विश्रान्तेः, शून्यतायां प्रमाणानुपन्यासे कथं शून्यतासिद्धिः, तत्सिद्धौ प्रमाणानपेक्षणे पूर्णतासिद्धावपि तदपेक्षा मास्त्विति पूर्णतैव किन्न सिद्ध्येत्, प्रमाणोपन्यासे च शून्यतासाधकप्रमाणस्य सत्त्वं वाच्यमिति क्व सर्वशून्यता, तदुक्तम्—

शून्ये मानमुपैति चेन्ननु तदा शून्यात्मता दुःस्थिता नो चेत्तर्हि तथापि किन्न सुतरां शून्यात्मता दुःस्थिता ।
वन्ध्या मे जननीत्यमुख्यसदृशीमप्याश्रयन् शून्यतां शङ्के दुश्शकसाहसैकरसिकः स्वामिन्नसौ सौगतः ॥१॥ इति,

इत्याद्यभिप्रायावष्टम्भेन माध्यमिकमतमपहस्तयति—**तदयुक्तमिति**, कथाया प्रमाणादीना सत्त्वं सांवृतमेवोपयुज्यते न वास्तविकमिति शून्यवादी शङ्कते—**सांवृत एवेति, व्यवहारः**, प्रमाणप्रमेयप्रतिपाद्यप्रतिपादकादिव्यवहारः, संवृतिः सती न वा ?, आद्ये तदधीनव्यवहारस्यापि सत्त्वमवर्जनीयम्, असती चेत् गगनकुसुमस्येव न तस्या व्यवहारोपपादकत्वमित्याशयेन संवृतिं विकल्प्य दूषयति—**तदप्यसत्, संवृतिः प्रमाणमप्रमाणं वा स्यादिति** । आद्ये प्रमाणभूतसंवृतिविषयस्य बाधकप्रमाणाभावात्सत्त्वं पारमार्थिकमेवेति न शून्यतेत्याह—**यदि प्रमाणमिति** । द्वितीये प्रामाणिकाना परिषदि प्रमाणेनैव सत्त्वमसत्त्वं वोपपादनीयमिति प्रमाणबहिर्भूतया संवृत्या व्यवहृतिसत्त्वोपपादनं प्रयासमात्रफलकमेवेत्याह—**अथाप्रमाणं संवृतिरिति** । सामान्यविशेषयोर्द्वयोरप्यबाधितप्रमाणविषयत्वात्तुल्यस्वरूपत्वमेव प्रामाणिकैरभ्युपेयं सर्वशून्यताप्रसङ्गभीतिमद्भिरिति वस्तुत्वं सामान्यविशेषस्वभावत्वसमनियतमनुभवानुरोधादापतितमेवेत्याह—**अथ सकलशून्यताप्रसङ्गभीत्येति** । तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायेन सामान्याभिन्नवस्त्वभिन्नत्वाद्विशेषस्य सामान्याभिन्नत्वेऽपि न न. किञ्चिदपचीयते विविक्तलक्षणयोगाद्भेदस्याप्यबाधाद्भेदाभेदयोरेकत्र विभिन्नावच्छेदेन वृत्तौ विरोधाभावात्तावतैव समस्तं प्रामाणिकव्यवहारोपपत्तिरित्याह—**परस्परं वेति,** वाकारश्चार्थे । **स्वभावविरहाभावादिति,** निषेधद्वयोपादानमेकस्वभावत्वदार्ढ्यार्थम्, **धर्मभेदः** सामान्यत्वविशेषत्वादि. । **कारकशक्तिवत्** कारणत्ववत् । एकस्मिन् कारणे विविक्तानेककार्यकारणत्वशक्तयस्समवयन्ति, तासां च शक्तीना स्वाश्रयद्रव्याव्यतिरेकात्तदभिन्नाभिन्नस्येति न्यायेन परस्परमभिन्नत्वं निरूपकीभूतकार्यभेदाद्भिन्नत्वमपि, तथैव सामान्यविशेषयोरपीत्यावेदयितुमाह—**कारकशक्त्योर्हीति, विशिष्टव्यवहारेति,** घटकारणं गवानयनादिकारणञ्च दण्ड इत्यादीत्यर्थः । द्रव्यमाश्रयः, तत्राश्रितौ सामान्यविशेषौ ततो भिन्नावित्यभ्युपगच्छन्तं वैशेषिकम्प्रत्याह—**न च सामान्यविशेषव्यतिरिक्त इति, परपरिकल्पितः**, वैशेषिकाभ्युपगत. । निषेधे हेतुमाह—**तुल्यातुल्यांशव्यतिरेकेणेति,** सामान्यविशेषभिन्नतयेत्यर्थ । सामान्यविशेषाव्यतिरिक्तत्वमेवोपपादयति—**यदीति, असौ** द्रव्यांश , **विशेष एवेति,** अन्यव्यावृत्तत्वस्यैव विशेषत्वरूपत्वादिति भाव', **अनुवृत्तिद्वारेण,** अनुगततया, **अन्यथा,** अनुवृत्तिभिन्नप्रकारेण, एतदर्थसंवादकञ्च—
"स्वतोऽनुवृत्तिव्यतिवृत्तिभाजो भावा न भावान्तरनेयरूपाः । परात्मतत्त्वादतथात्मतत्त्वाद्द्वयं वदन्तोऽकुशला. स्खलन्ति ॥ १ ॥"
इति श्रीमद्धेमचन्द्रसूरीशवचनम् । फलितमाह—**अत इति, अनुवृत्तिप्रत्ययावसेयाः,** अनुगतबुद्धिविषया., **केचित्**

केचिद्, अपरे तु व्यावृत्त्याकारबुद्ध्याऽध्यवसातव्या इति। न चावश्यं सतो भवितव्यमाधारेण, परिकलय तावत् तस्यैव त्वत्परिकल्पितद्रव्यांशस्य क आधारः? को वा व्योमादेरित्यलं प्रसङ्गेन। व्यवस्थितमिदमुभयस्वभावं सकलम्। तस्मान्न केवलस्य क्वचिदस्ति मृद्द्रव्यस्य ग्रहणम्। उपपद्यते चायमभेदप्रत्ययः, न च भ्रान्तः, सामान्यांशालम्बनत्वाद्, अतः सर्वं साधु स्याद्वादप्रक्रियायाम्। एतेन रूपादिसमुदयविषयं स्मार्तमभेदज्ञानमिति प्रत्युक्तम्, उभयस्वभावत्वाद् वस्तु सत्; सामान्यांशालम्बनभेदज्ञानम्, न पुनः सामान्यशून्यरूपादिभेदसमुदयमात्रालम्बनम्, समुदायस्य तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वेनानिर्धार्यमाणस्वभावस्यापारमार्थिकत्वात्। यदप्युक्तं—"तेष्वेव हि तन्त्वादिषु तथासन्निविष्टेषु पट इत्यादिबुद्धिः प्रवर्तते, यथा भक्तसिक्थोदकेषु तथासन्निविष्टेषु काञ्जिकबुद्धिः" इति; कथं पुनः सन्निविष्टेष्विति निरूप्यम्?, ननु च पटाद्याकारेणेति किमत्र निरूप्यते?, क पुनरसावन्यत्र पटः प्रसिद्धः? यस्याकारेण तन्तवः सन्निविशन्ते, यथा पार्थाकारोऽभिमन्युरिति। कश्चायं सन्निवेशः? यदि संस्थानमेव वृत्त-त्र्यस्र-चतुरस्रा-यत-परिमण्डलभेदमिष्यते युग्मा-युग्म-प्रतर-घनविकल्पकम्, एवं सति प्रागस्माभिः प्रत्यपादि प्रपञ्चतः सङ्घातभेदेभ्य उत्पद्यन्ते स्कन्धास्तद्भावलक्षणपरिणामवशात्, स च तादृशः परमार्थतोऽस्त्येव समुदायः, अथान्यः कोऽपि समुदायः, स निरूपणीयः, काञ्जिकाद्यपि

---

सामान्यस्वभावाः, **अपरे** विशेषस्वभावा आकाराः। ननु यत् सत् तत्साधारमिति व्याप्तेः सतोस्सामान्यविशेषयोस्साधारत्वमवश्यमभ्युपगन्तव्यम्, आधाराधेयभावश्च भेदनियत इति सामान्यविशेषाधारस्तद्व्यतिरिक्तो द्रव्यांशोऽवश्यमभ्युपगन्तव्य इत्यत आह—**न चेति,** उक्तव्याप्तिरेवासिद्धा। **अन्यथा** तद्बलाद्द्रव्यस्यापि सत आधारः परिकल्प्यः स्यात्तस्यापि च सत्त्वादाधारान्तरमेवन्तस्यापीत्यनवस्था स्यादित्याशयेनाह—**परिकलयेति**। न च गगनमेव सर्वद्रव्याधारभूतम्, स्वस्मिन् स्ववृत्तिविरोधेन तस्यैवानाश्रितस्याभ्युपगमनीयत्वादित्याह—**को वेति**। निगमयति—**व्यवस्थितेति, तस्मादुभयस्वभावत्वात्**। न च द्रव्यप्रत्ययस्य भ्रान्तत्वादेव न विशेषसम्भिन्नसाधकत्वमत आह—**न च भ्रान्त इति, अभेदप्रत्यय** इति सम्बध्यते, निरालम्बनत्वमेव सामान्यापलापिबौद्धमते भ्रान्तत्वम्, पूर्वोत्तरपर्यायानुगतमृद्द्रव्यावगाही चाभेदप्रत्ययः, तस्य मृद्द्रव्यरूपसामान्यांशावलम्बनात्वादेव न भ्रान्तत्वमित्याह—**सामान्यांशेति**। वस्तूनां सामान्यविशेषस्वभावत्वव्यवस्थापनेन एकान्तपर्यायवादिमतमप्युन्मूलितमेवेत्याह—**एतेनेति**। एतेनेत्यतिदिष्टमेव हेतुं सङ्गमयति—**उभयस्वभावत्वादिति, सामान्यांशालम्बनभेदज्ञानमिति,** सामान्यविषयकं सद्विशेषविषयकं भेदज्ञानम्, न तु सामान्यांशं परित्यज्य विशेषमात्रविषयकं तत्, सामान्यविनिर्मुक्तस्य विशेषस्याभावादित्यर्थः। स एवायं घटो यमहमद्राक्षमहनि रात्रौ वा यं चास्प्राक्षमित्यभेदज्ञानस्य रूपादिभेदसमुदायमात्रावलम्बनत्वासम्भवमुपदर्शयति—**न पुनरिति**। समुदायस्य समुदायिभ्यो भिन्नत्वमभिन्नत्वं वा?, आद्ये समुदायिभानमन्तरेणापि तत्समुदायावभासप्रसङ्गः, यद्धि यतो भिन्नं तत्तद्भानमन्तराऽपि भासते, यथा स्पर्शो रूपादिभानमन्तरेणापि स्पार्शनज्ञाने, न चानुभूयते रूपस्पर्शादिसमुदायिनमन्तरेण तत्समुदायः, तस्मान्न प्रथमः पक्षः, नापि द्वितीयः, तथा सति एकैकस्य समुदायिनो भानेऽपि तद्भानप्रसङ्गः। अतो द्रव्यरूपतामन्तरेण तस्यापारमार्थिकत्वमेवेत्याह—**समुदायस्येति,** तत्त्वं समुदायिभ्योऽभिन्नत्वम्। सन्निवेशविशेषभावान्नानावयवानामेवावयवित्वं न त्ववयवी अवयवानुगतोऽतिरिक्त इत्यप्येकान्तवादो न क्षोदक्षम इत्याह—**यदप्युक्तमिति**। अवयवानतिरेकवादिनं पृच्छति—**कथमिति,** केन प्रकारेणेत्यर्थः। अवयवानतिरेकवादी उत्तरयति—**ननु चेति**। क्वचित्प्रसिद्धेनैवाकारेण केनचित्केषांचित्परिकल्पना भवति, पटाद्याकारस्तु न तन्तून्विरहय्य क्वापि प्रसिद्ध इति न पटाद्याकारेण सन्निविष्टेष्विति वक्तुं शक्यते, दृष्टान्तेऽपि न सर्वथाऽभेदः कथञ्चित्तस्यैव काञ्जिकादेस्तथाबुद्धिविषयत्वादेवं सेनावनादेरपीत्याशयमुद्घाटयति सिद्धान्तवादी—**क पुनरसावन्यत्रेति**। प्रसिद्धस्यैवान्यत्र सन्निवेश इत्यत्र दृष्टान्तमाह—**यथेति, पार्थः,** अर्जुनः, **अभिमन्युः,** अर्जुनस्य पुत्रः, सन्निवेशोक्त्याऽप्यवयव्येव कथञ्चिद्व्यतिरिक्तः स्वीकृतः परेण, अन्यथा तन्निर्वचनमशक्यमित्याशयवान् सिद्धान्ती परं पृच्छति—**कश्चायं सन्निवेश इति**। सन्निवेशस्य संस्थानस्वरूपत्वं यदि परो ब्रूयात्तदा सिद्धं नस्समीहितमित्याशयेनाह—**यदीति, एवं सति,** सन्निवेशस्य संस्थानविशेषरूपत्वाभ्युपगमे सति संस्थानविशेषव्यतिरिक्तरूपत्वेन सन्निवेशो न निरूपयितुं शक्यस्तस्य प्रकारान्तरस्य स्याद्वादविनिर्मुक्तस्य दर्शयितुमशक्यत्वादित्याशयेनाह—**अथेति**। **स इति,**

परिणामान्तरापत्त्यैव सिद्धमार्हतानाम्, न भक्तसिक्थादिमात्रतया । यच्चोक्तम्–"रूपाद्यग्रहे घटादिबुद्धेरभावात्" इति, एतदपि जैनान् प्रति न किञ्चित्, उभयस्वभावत्वाद् वस्तुनो विभागाभावात्, रूपादिस्वरूपोल्लेखेनैव सामान्यांशः प्रतीयते, वह्निरूपस्पर्शपरिणतायोगोलकवत्, तथा वनविपङ्क्त्यादयोऽपि सन्निवेशविशेषाः पुद्गलानां सामान्यविशेषस्वभावाः समासादितक्रमपरिणतयः तत्त्वतोऽभ्युपेयन्ते, नोपादाय प्रज्ञप्तिमात्रम्, यदि च संस्थानमर्थान्तरं रूपादिभ्यस्तदपि परमार्थसत्, ततो रूपादिवदन्यानपेक्षमेव गृह्येत, अथ रूपस्पर्शमात्रम्, एवं तर्हि तदनेकं रूपस्पर्शवत् प्रसक्तम्, एवं चानिष्टप्राप्तेरसमञ्जसता, यदि रूपसन्निवेशविशेषो वृत्तं स्पर्शनेन न गृह्येताविषयत्वाद् रूपवत्, न वा स्पर्शविशेषश्चक्षुषा गृह्येतोक्तन्यायात्, भेदे च द्वे वृत्ते गृह्येयातामन्यत्वाद् रूपस्पर्शवत्, एवं तन्त्वादिषु तथास्थितेष्वित्यादि विचार्यमाणं विशीर्यते, तस्मादस्ति द्रव्यं तद्भावाव्ययलक्षणं स्थित्यात्मकमन्वयिरूपत्वात्, स्वभेदानां प्राक् तदा आयत्यां च मृदन्वयाविच्छेदादेकम्, न पुना रूपादिसमुदायमात्रम्, अतः सर्वैकान्तध्वंसविधायिनि स्याद्वादे दूरमपास्तमसद्विकल्पचतुष्टयम्, किं तत्?, एवं–समूहिनः परिणामिनो

---

अन्यप्रकारः, **निरूपणीय इति**, यदि स प्रकारः स्यात्तदा भवद्भिरुपदर्शयितुमपि शक्येत, न चोपदर्शयन्ति भवन्तस्तमिति स नास्त्येवेति गूढाभिसन्धिः । काञ्जिकादिरपि भक्तादिभ्यः कथञ्चिद्व्यतिरिक्त एवेति दृष्टान्तोऽपि भवदुक्तोऽसदनुकूल एवेत्याह–**काञ्जिकाद्यपीति** । अन्यदपि पर्यायवाद्युक्तमनेकान्तवादिनम्प्रति नाभीष्टप्रसाधकमित्याह–**यच्चोक्तमिति** । **उभयस्वभावत्वात्**, द्रव्यपर्यायोभयात्मकत्वात् । **विभागाभावात्**, रूपादिः पर्यायः, तदाश्रयो द्रव्यं घट इत्येव विभागाभावात् । एकमेव वस्त्वखण्डात्मकमवच्छेदकभेदेन पर्यायात्मना द्रव्यात्मना च व्यवह्रियते, न तु तस्यैको भागो द्रव्यमपरो भागः पर्याय इति विभागेनोभयात्मकम्, किन्तु द्रव्यांशस्यापि पर्यायमिश्रितत्वं पर्यायांशस्यापि द्रव्यमिश्रितत्वम् । अत एव सम्पूर्णेनैव वस्तुनाऽपेक्षाभेदेन द्रव्यव्यवहारबुद्धी पर्यायबुद्धिव्यवहारौ च भवतः, अन्यथा प्रत्येकपक्षदोषापत्तेः, एतदभिसन्धानेनैव "भागे सिंहो नरो भागे योंऽशो भागद्वयात्मकः । तमभागं विभागेन नरसिंहं प्रचक्षते" इत्युक्तिरुपपद्यते । विभागाभावे सति यदभिलषितं तदाह–**रूपादीति**, सामान्यांशः स्वपर्यायानुगतत्वाद्द्रव्यात्मा घटः, स रूपस्पर्शादिविशेषाजहद्वृत्तिरेवेति रूपादिस्वरूपोल्लेखेनैव प्रतीयत इत्यर्थः । एतदेव दृष्टान्तेन भावयति–**वह्निरूपेति**, अतितप्तायोगोलकं तत्क्षणे सर्वतोभावेन वह्निव्याप्तशरीरत्वाद्वह्निगतरूपस्पर्शसमन्वितमेवावभासते, तत्क्षणे तस्य तन्मयीभवनमेव विभाव्यते, तद्वद्घटादेरपि परित पर्यायसम्भिन्नत्वात्तदुल्लिखिततयैवावभासनम्, नैतावता तत्समुदायात्मैव घटः, तथा सति अयोगोलकस्याप्यतितप्ततादशायां वह्निरूपस्पर्शमात्रस्वरूपता प्रसज्येतेति । उक्तन्यायमन्यत्राप्यतिदिशति–**तथेति** । **तत्त्वतः** परमार्थतः । **नोपादाय प्रज्ञप्तिमात्रमिति**, **प्रज्ञप्तिमात्रं** विकल्पमात्रम्, **उपादाय** अभ्युपगम्य, **न** नैव अभ्युपगम्यन्ते, वनविपङ्क्त्यादयो वृक्षादिपुष्पादिभ्यो व्यतिरिक्ता न सन्त्येव, केवलं विकल्पबुद्धिप्रभाविता एव वनविपंक्त्यादिव्यवहारा इत्येवं नाभ्युपगम्यतेऽस्माभिः, किन्तु सामान्यविशेषस्वभावा वस्तुभूता एवाभ्युपगम्यन्त इत्याशयः । **नोपादेयप्रज्ञप्तिमात्रमिति** पाठे तु उपादेयोऽवयवेभ्यो व्यतिरिक्तोऽवयवी अर्थात् प्रत्येकवृक्षादिविभिन्नो वनादिस्तत्प्रज्ञप्तिमात्रन्तद्विकल्पमात्रन्नाभ्युपगम्यते, किन्तु समुदायिभ्यो भिन्नाभिन्नस्यैव समुदायिनो वनादेर्ज्ञानमभ्युपगम्यत इति । एकान्तव्यतिरेके एकान्ताव्यतिरेके च क्रमेण दोषमुद्भावयति–**यदि चेति**, **संस्थानमिति**, समुदायावयविद्रव्याद्युपलक्षणम् । **अर्थान्तरं** सर्वथा व्यतिरिक्तम् । **तदपि** संस्थानमपि । **ततः** तदा, **रूपस्पर्शमात्रम्**, एकान्तेन रूपस्पर्शादिभ्योऽव्यतिरिक्तं सस्थानम् । **तत्** संस्थानम् । **अनिष्टप्राप्तेरित्युक्तं** तदेव स्पष्टयति–**यदीति**, **वृत्तमिति**, त्र्यस्रचतुरस्रायतपरिमण्डलादेरुपलक्षणम्, तदेति शेषः । **अविषयत्वात्**, रूपाभिन्नस्य वृत्तादेस्त्वगिन्द्रियागोचरत्वात् । **उक्तन्यायात्**, स्पर्शवत् स्पर्शाभिन्नस्य वृत्तादेश्चक्षुरिन्द्रियागोचरत्वात्, रूपाभिन्नस्य वृत्तस्य स्पर्शाभिन्नवृत्तभिन्नत्वम्, स्पर्शाभिन्नस्य वृत्तस्य रूपाभिन्नवृत्तभिन्नत्वञ्च प्रसक्तम् । तथा सति यदनिष्टं तदाह–**भेदे चेति** । अवयवावयविनोरपि सर्वथाऽभेद उक्तन्यायेन सम्भवतीत्यतिदिशति–**एवमिति** । द्रव्यसिद्धिमुपसंहरति–**तस्मादस्ति द्रव्यमिति** । **अन्वयिरूपत्वादिति** यदुक्तम्, तदेव सङ्गमयति–**स्वभेदानामिति**, मृद्द्रव्यपर्यायाणा स्थासकोसकुशूलघटादिनामित्यर्थः । **प्राक् तदाऽऽयत्याञ्चेति**, प्राक्पदेनातीतकालस्य तदेत्यनेन वर्त्तमानकालस्यायत्यामित्यन्तेन भविष्यत्कालस्य परिग्रहादुक्तकालत्रयवर्त्तित्वेन मृदोऽन्वयित्वं नियतत्वमेकत्वञ्च स्पष्टमेव प्रतीयते । **असद्विकल्पचतुष्टयमिति**, सामान्येनोक्तम् । तद्विशेषप्रतिपत्तये परः पृच्छति–

वा तत्कार्यमुत नैव तत्कार्यमथ कार्यमेवास्ति न कारणं, कारणमेव वा विद्यते न कार्यमिति; एष च सामूहिकः समस्तोऽपि रत्नावलीपटस्तम्भकुम्भसेनावनयूथादिरर्थः स्वसमये पारिणामिक एव, भिन्नाभिन्नदेशानां परिणामिनां परिणामाभ्युपगमात्, तथापि भेदेनोपन्यासो लोकव्यवहारानुवृत्त्या, पूर्वधर्मोपमर्देनोत्तरधर्मोत्पादः परिणामो लोके क्षीरदध्यादिवत् समूहिषु पारिणामिषु चानैकान्तव्याप्तिप्रपञ्चप्रदर्शनार्थः। तथाहि—आलोकविशिष्टरूपग्रहणमपि नात्यन्तभेदप्रतिपत्तये, विशेषणविशेष्यभावश्चैकान्तभेदविषयो न कश्चित् प्रसिद्धः, दण्ड्यादावपि सामान्यविशेषभावे सति विशेषणविशेष्यभावात्। यच्चोक्तमवधारणं—रूपादिग्रहे सत्येव भावात्, तदप्युभयस्वभाववस्त्वभ्युपगमे न कञ्चनापक्षालमावहति। यदप्यारेकां "प्रमाणानुभवमन्तरेण स्मृतिरनुपपन्ना" इति पश्चात् परिजिहीर्षताऽभ्यधायि—"विकल्पितेऽपि ह्यर्थे स्मृतिर्दृष्टा" इति, तदप्यसत्, अर्थाभिधानप्रत्ययानां वस्तुत्वाभ्युपगमादत्यन्ताभावस्य च निरुपाख्यस्य प्रतिषिद्धत्वात्, सर्वप्रकारमसतः संव्यवहारायोग्यत्वात्, बभूवुरनादौ संसारे वन्धुमत्यादयः प्राणिविशेषास्तदभिधानानि तदालम्बनाश्च प्रत्ययाः, ततश्च प्रमाणानुभवपूर्विकैव स्मृतिः सर्वत्र, नान्यथा, समुदायस्य च प्रतिपादितवस्तुत्वान्न निर्मूलविकल्पत्वम्, बुद्धिभेदाच्चान्यत्व-

---

किं तदिति, ग्रन्थकार उत्तरयति—**एवमिति,** अनन्तरं यन्मयोच्यते तत्तदवधार्यमित्यर्थः, तत् समुदायावयव्यादिकम्। **समूहिनः परिणामिनो वा तत्कार्यमित्येको** विकल्पः, **नैव तत्कार्यमिति** द्वितीयो विकल्पः, अत्रापि समूहिनः परिणामिनो वेत्यनुवर्तते, अथ कार्यमेवास्ति न कारणमिति तृतीयो विकल्पः, यद्यपि कार्यस्य कारणाधीनात्मलाभत्वात्तत्स्वीकारे कारणस्वीकार आवश्यकः, तथापि कार्यपदमत्र कार्यत्वेनाभिमतपरं बोध्यम्, एवं कारणपदमपि, कारणमेव विद्यते न कार्यमिति तुरीयो विकल्पः। समूहिनः परिणामिनो वेति भेदेनोपन्यासस्य प्रयोजनमाविर्भावयति—**एष चेति,** चकारो यद्यपीत्यर्थपरो ज्ञेयः। **सामूहिकः,** समूहप्रभवः। **स्वसमये** जैनराद्धान्ते। **भिन्नाभिन्नदेशानामिति,** रत्नावलीसेनावनादौ परिणामपरिणामिनोर्भिन्नदेशता पटस्तम्भकुम्भादावभिन्नदेशताऽवसेया। **लोकव्यवहारानुवृत्त्येति,** लोके हि क्षीरादीनां दध्यादिरूपेण भवनस्थल एव परिणामव्यवहारो यत्र पूर्वधर्मस्योपमर्दः, मालादिरूपेण रत्नादीनां निष्पत्तौ तु समूहव्यवहार एव, तत्र पूर्वधर्मोपमर्दाभावादिति लोकव्यवहारमनुसरद्भिरस्माभिस्समूहिनः परिणामिनो वेत्युक्तमिति। एतदेव प्रपञ्चयति—**पूर्वेति।** एकैकरत्नादौ यद्रत्नान्तरासंयुक्तरत्नत्वरूपो धर्मस्तस्य रत्नावल्यादिरूपेण समूहावस्थायामुपमर्दनम्भवत्येवेति स्याद्वादे तदपि परिणामलक्षणं तत्रापि सुसङ्गतमिति गूढाभिसन्धिद्योतनायोक्तम्—**अनेकान्तव्याप्तिप्रपञ्चप्रदर्शनार्थ इति।** अनेकान्तव्याप्तिं सङ्गमयति—**तथाहीत्यादिना।** यदग्रहे यन्न गृह्यते तयोरभेद इत्यत्रालोकाग्रहे रूपग्रहो न भवति, अथ चालोकरूपयोर्भेद एवेति व्यभिचारस्त्वालोके सति रूपग्रहणम्भवतीत्यालोक एव रूपग्रहणनिमित्तत्वालोकग्रहणं तयोस्तुल्यकालत्वादित्येवमुद्धार आलोकरूपयोर्भेदमवलम्ब्य पूर्वमुपदर्शितस्तत्रेदानीं कथञ्चिदभेद एव तयोरपीति उक्तनियमे कथञ्चिदभेदस्य व्यापकतयाऽभिमतत्वे व्यभिचारवार्त्तापि नास्तीत्यभिप्रायेणाह—**आलोकविशिष्टरूपग्रहणमपीति,** अत्र ययोर्विशेषणविशेष्यभावस्तयोः कथञ्चिदभेद इति व्याप्तिरभिमता। तत्र दण्डी पुरुष इत्यत्र दण्डपुरुषयोर्विशेषणविशेष्यभावोऽस्ति न च कथञ्चिदभेद इत्याशङ्का स्यात्तदपाकरणायाह—**दण्ड्यादावपीति,** दण्डी पुरुषोऽपि भवति दण्डवान्तदन्यदेशोऽपीति दण्डित्वस्य दण्डस्वरूपपर्यवसितस्यानुगामित्वेन सामान्यता दण्डित्वेन परिणतस्तु पुरुषो न दण्डशून्यकालेऽनुवर्तेत इति तस्य विशेषतेति सामान्यविशेषभावेन तयोरभेदोऽवधार्यः। अथवा दण्डत्वपुरुषत्वाभ्यां भेदः, स च विशेषरूपतामाश्रित्य, संयुक्तत्वेन रूपेण चाभेदः, स च सामान्यमाश्रित्य। यच्चोक्तं प्राक् पर्यायवादिना "रूपाद्यग्रहे तद्बुद्ध्यभावादित्यनेन तदभावाभावमुखेन रूपादिग्रहे सत्येव भावादित्याख्यायते" इति तस्यापि कथञ्चिदभेदसाधकत्वाभिप्राये निर्दुष्टत्वमेवेत्याह—**यच्चोक्तमवधारणमिति।** अपक्षालं दोषम्। यदप्युक्तं पर्यायवादिना "पुनराशङ्कते—प्रत्यक्षानुमानाभ्यामननुभूते समुदाये कथं स्मृतिरुत्पद्यत इति, न, अनेकान्तात्, विकल्पितेऽपि ह्यर्थे स्मृतिर्दृष्टा वन्धुमत्याख्यायिकादाविति" तदधिकरोति—**यदपीति,** असत्ख्यातिर्न सम्भवतीत्यावेदनायाह—**सर्वप्रकारमसतः संव्यवहारायोगादिति, प्रतिपादितेति।** स च तादृशः परमार्थतोऽस्त्येव समुदाय इत्यादिग्रन्थेन प्रतिपादितेत्यर्थः। बुद्धिभेदाद्भेद एकान्ततो भेदस्तदा स्याद्यदि सर्वप्रकारेण बुद्धिभेदस्स्यात्, न चैवम्, द्रव्य-

मेकान्तत एवेति पूर्वमेव प्रत्यस्तम्। नहि बुद्धिभिदा सर्वप्रकाराऽस्ति जैनेन्द्राणां द्रव्यास्तिकनयाभिप्रायेण ग्रहणात्, सद्द्रव्यतया भेदाभावात्, पर्यायतः सङ्ख्यापरिमाणाकारभेदसद्भावात् भिन्नाभिन्नस्वभावैव शेमुषी, सा च भेदाभेदस्वभाव एव वस्तुनि व्यापारमासादयन्ती स्वात्मप्रतिष्ठां प्रतिलभत इति न किञ्चिदनिष्टम्। यच्चोक्तम्—"तुलानतिविशेषाग्रहणादनन्योऽवयव्यवयवेभ्य" इति, तदिष्टमेव, सर्वथा अन्यत्वस्य निषिध्यमानत्वात्, यतो विनाऽप्यवयविना संयोगमात्रे तदर्थान्तरभूतसङ्घातपरिणामाद् दशपलपरिमाणत्वमस्त्येवेति अतो नावयविकृतं पलदशकस्य दशपलपरिमाणत्वं, विनाऽपि तेनोपलभ्यमानत्वादेकादशपलेनेव; इतश्चावयवव्यतिरेकेणासन्नवयवी, अनभिभूतगुणत्वे सत्यवयवरूपादिव्यतिरेकेणानुपलभ्यमानरूपादिगुणत्वात्, तुरगवारणाद्यवयवव्यतिरेकेण सेनावत्। यदि च स्याद् रूपादयोऽपि च गुणा गृह्येरन्नवयविनः पृथक्त्वेन, घटबदरादिवदिति व्यतिरेकः, विशेषणोपादानाद् विद्यमानेष्वभिभवादनुपलभ्यमानगुणत्वं तारकादिषु दृष्टमित्यनैकान्तिकत्वव्यावृत्तिः, द्रव्यात्मना च तन्तुपरिणतौ पटपरिणामोऽस्त्येव, सुचिरादपि तत्र भावात्, पर्यायात्मना चाभावाद्, अतीतानागतपरिणामानामसत्त्वादव्यवहार्यत्वाद् वर्तमानपर्याय एव परमार्थतोऽस्त्युपयुज्यमानत्वात्, पटपरिणामकाले च द्रव्यात्मना तन्तुसद्भावात् पर्यायात्मना चाभावात्, सर्वेषामवयवावयविसमुदायसमुदायिगुणगुणिनामन्यत्वानन्यत्वमुभयनयापेक्षमेवाभिरूपधियो धिनोति तस्मादेकान्तवादिनः सूक्ष्मबादरप्रतिघाताप्रतिघातभेदसङ्घातकार्यकारणैकत्वान्यत्वादिविश्वप्रकारपरिणाममभ्युपयतो न किञ्चिदवद्यमाढौकते॥ एतेन द्रव्यपर्यायनयद्वयव्यावर्णनेन किमेकोऽवयवी स्वारम्भकावयवेषु प्रत्यवयवं वर्तते

---

रूपेणाभेदस्यापि प्रतीतेरित्याह—**नहि बुद्धिभिदेति**। **शेमुषी** बुद्धिः, **सा** बुद्धिः। अवयवावयविनोरनन्यत्वसाधनं कथञ्चिदनन्यत्वसाधनपर्यवसितं स्याद्वादिनामिष्टापादनरूपत्वान्न दोषायेत्याह—**यच्चोक्तमिति**। अवयविनोऽवयवेभ्यस्सर्वथाऽन्यत्वं न सम्भवतीत्यत्र हेतुमाह—**यतो विनाऽप्यवयविनेति, तदर्थान्तरभूतेति,** अवयविव्यतिरिक्तेत्यर्थः। अयमभिप्रायः—यत्रैकैकपरिमितानां दशानां वस्तूनामनारम्भकसंयोग एव न त्वारम्भकसंयोगस्तत्रावयवी नोत्पद्यत एवेत्यवयविवादिनाऽप्यभ्युपेयम्। अथ च दशपलपरिमाणत्वं तादृशसंयोगविशेषापन्नसमुदायेऽनुभूयते, अतोऽवयविनमन्तराऽपि भावात्संयोगकृतमेव पलदशकस्य दशपलपरिमाणत्वन्नावयविकृतमिति, उक्तार्थे परार्थानुमानप्रयोगमुपनिबध्नाति—**अतो नावयविकृतमित्यादिना**। अवयविनोऽवयवव्यतिरिक्तत्वाभावसाधकमनुमानान्तरमुपन्यस्यति—**इतश्चेति**। **यदि च स्यात्,** अवयवेभ्यो व्यतिरिक्तो, यद्यवयवी स्यात्, तदेति शेषः। **रूपादय इति,** अवयविनो रूपादयो गुणा अवयवरूपादिगुणेभ्यः पृथक्त्वेन गृह्येरन्निति, **व्यतिरेकः**। न चावयविनो रूपादयो गुणा अवयवरूपादिगुणेभ्यः पृथक्त्वेन गृह्यन्ते तस्मान्न सन्ति तदभावादवयव्यपि नास्तीति। **अनभिभूतगुणत्वे सतीति** हेतुविशेषणफलमुपदर्शयति—**विशेषणोपादानादिति**। द्रव्यनयपर्यायनययोरभेदभेदानेकान्ताभ्युपगमरूपस्याद्वादप्रमाणराजदौत्यमावेदयन्नाह—**द्रव्यात्मना चेति, तत्र भावात्,** तन्तुपरिणतौ पटस्य भावात्, अन्यथाऽसतस्तस्य कदाचिदपि तत्रोत्पादासम्भवाद्गगनकुसुमस्येवेति भावः। **पर्यायात्मना चाभावात्**, पृथुबुध्नोदराकारात्मना विशकलिततन्त्ववस्थानवेलायां तन्तुपरिणतौ पटस्याभावात्। अत्रैव पर्यायास्तिकनयावष्टम्भेन हेतुमाह—**अतीतेत्यादि, उपयुज्यमानत्वात्,** देहाद्यावरणादिकार्यकारित्वात्। अवयविनोऽवयवेषु भावाभावावुपदर्श्यावयवानामवयविनि भावाभावावुपदर्शयति—**पटपरिणामकाले चेति**। **द्रव्यात्मना**—विशकलिताविशकलितसाधारणतन्तुस्वरूपेण। **पर्यायात्मना**—विशकलिततन्तुरूपेण। अयं च न्यायः सर्वत्रावयव्यवयवादौ योज्य इत्याशयेनाह—**सर्वेषामवयवेत्यादि**। **उभयेति,** द्रव्यास्तिकपर्यायास्तिकेत्यर्थः। **अभिरूपधियो धिनोतीति,** पण्डितानां बुद्धिर्विषयितयाऽऽश्रयतीत्यर्थः, शेमुष्युन्मेषशालिनां बुद्धाववभासत इति यावत्। स्याद्वादे न दूषणकणस्यापि प्रवेश इत्युपसहरति—**तस्मादिति, सूक्ष्मेत्यादि अभ्युपयत** इत्येतत्पर्यन्तमनेकान्तवादिन इत्यस्य विशेषणम्। अवयवी अवयवे सामस्त्येन वर्तते एकदेशेन वेत्यादि विकल्पानामप्यतिरिक्तावयविनिराकरणाय सौगताभिमतानां नास्ति स्याद्वादे पदारोपणसङ्क्षापीत्याह—**एतेनेति**। अस्य विवरणरूपमेव—**द्रव्यपर्यायनयव्याव-**

आहोस्विद् एकदेशेनेत्येषोऽपि विकल्पः सिद्धसाध्यतादिबहुदोषत्वादपास्तो वेदितव्यः, तस्मान्न व्यतिरिक्तोऽवयव्यस्ति निभाल्यमानः, समस्ति च द्रव्यांशः स्थितिलक्षणोऽन्वयी, तदपेक्षावुत्पादविनाशौ स्तः, अतः स्थित्युत्पादविनाशस्वभावमेव सर्वमर्थक्रियासमर्थं, न स्थितिनिरपेक्षावुत्पादविनाशाविति। यदप्युक्तम्–कल्पनामात्रं कारणं कार्यमिति प्रतीत्यप्रत्ययमात्रत्वात्, तदप्ययुक्तम्, करोतीति कारणं कार्यान्तरनिवर्तनसमर्थम्, क्रियायाः कारणान्तरापेक्षात्, कल्पना च बहिरङ्गार्थशून्यं विज्ञानमात्रं शब्दमात्रं वा, न च तस्य घटादिकार्यान्तरनिष्पादने शक्तिरस्ति, न च विज्ञानमात्रमेव ग्राह्यग्राहकलक्षणमर्थशून्यमस्तीति प्रतिपत्तुं शक्यम्, प्रमाणाभावात्, न च भ्रान्तिमात्रं कार्यकारणव्यवस्था, भ्रान्तिबीजाभावात्, नापि शून्यता, प्रतिषेधप्रतिषेध्यादिसद्भावात्। व्यवहारतः सत्त्वमर्थानां न परमार्थत इति चेत्, प्रतिषेधोऽपि तर्हि व्यवहारमात्रत्वादसन्निति प्रतिहतसद्भावात् कथं न भावा भवेयुः? न च रासभशृङ्गमसत् स्वतः परिकल्पितेन रूपेण मृत्खननादिकार्यार्थमाचेष्टमानमिष्टं दृष्टं वा॥

दीर्घता च यदि स्वतोऽसती ह्रस्वबुद्धेः कारणं भवत्येवं सति व्योमारविन्दकर्णिकाऽपि हेतुरसत्त्वात् स्याद् ह्रस्वताबुद्धेः, यदि चासत्प्रतीत्याऽसदेवोत्पद्येत तथा सति शशविषाणं प्रतीत्य खरविषाणमपि स्यात्, अथास्त्येव वस्तुनो दीर्घता, न तर्हि प्रतीत्यप्रत्ययमात्रं सर्वम्, सतीमेव दीर्घतामाश्रित्य ह्रस्वताधियोऽभ्युपगमात् दीर्घह्रस्वबुद्ध्योश्चायौगपद्यादयुक्ता प्रतीत्यसमुत्पत्तिः, न चासतः कारणभावः, यदि च सर्वं प्रतीत्यैव सिद्ध्यति नाप्रतीत्य, ततः प्रतीत्यसिद्धिरपि प्रतीत्यसिद्धिप्रभवा-

---

शेनेनेति, अस्यापास्त इत्युत्तरेण योगः। उत्पादव्ययसम्बधितध्रौव्यं सर्वव्यापकतयोपसंहरन्नाह–तस्मादिति। न व्यतिरिक्तो न सर्वथाऽवयवेभ्यो भिन्नः, तेन कथञ्चिद्भेदाभ्युपगमो न विरुध्यते। तदपेक्षौ द्रव्यांशानुगतौ। कार्यकारणभावस्य काल्पनिकत्वमेवेति मतमप्यपहस्तयितुमाह—यदप्युक्तमिति। कारणान्तरापेक्षादिति भावप्रधानो निर्देशः। कल्पनामात्रमित्युक्तं तत्र कल्पनां विकल्प्य तत्र कार्यान्तरनिर्वर्त्तनसमर्थत्वं कारणत्वन्नसम्भवतीत्यतो न कल्पनामात्रं कारणमित्याह–कल्पना चेति। तस्य विज्ञानमात्रस्य शब्दमात्रस्य वा। विज्ञानवाद्यभिमतं ग्राह्यं च ग्राहकं च ज्ञानमेव न तु वाह्योऽर्थो विद्यत इत्येतत्प्रतिक्षिपति–न चेति, अस्य शक्यमित्यनेन योगः। कार्यकारणभावावगाहिज्ञानं भ्रान्तमेव ततो नार्थसिद्धिरित्येतदपाकरणायाह–न च भ्रान्तिमात्रमिति। माध्यमिकमतमुन्मूलयितुमाह–नापि शून्यतेति,–

"शून्ये मानमुपैति चेन्ननु तदा शून्यात्मता दुःस्थिता, नो चेत्तर्हि तथापि किं न सुतरां शून्यात्मता दु स्थिता।
वन्ध्या मे जननीत्यमुख्यसदृशीमप्याश्रयन् शून्यतां शङ्के दुरशकसाहसैकरसिकः स्वामिन्नसौ सौगतः॥ १॥"

इति श्लोकार्थोऽप्येतत्पक्षप्रतिक्षेपायात्रानुसन्धेयः। संवृतिसत्त्वमेवार्थानां न तु पारमार्थिकसत्त्वं संवृतिसत्त्वादेव प्रतिषेध्यप्रतिषेधवादिप्रतिवादिसकलव्यवहारोपपत्तिरिति गूढाभिसन्धिं शून्यवादिन आशङ्क्य प्रतिक्षिपति–व्यवहारत इति, व्यावहारिकसत्त्वमेव पारमार्थिकसत्त्वं तस्य यदि संवृतिसत्त्वं नामान्तरं परेण गीयते तत्र न नो विवादः, अन्यथा व्यवहारसतो वस्तुनो वस्तुतोऽसत्त्वे प्रतिषेधस्यापि परेण व्यवह्रियमाणस्यासत्त्वापत्त्या कथं शून्यता सिद्ध्येत्। तदभावे विरोध्यभावात्पूर्णतैव जगति पदमादधातीति गूढाभिसन्धिर्ग्रन्थकार आह–प्रतिषेधोऽपीति। व्यावहारिकस्यासत्त्वे रासभशृङ्गादिवत्कार्यकारित्वमेव न स्यादस्ति च कार्यकारित्वमतः सत्त्वमेवास्थेयमित्याह–न च रासभशृङ्गमसदिति, कारणं कार्यमिति कल्पनामात्रमेतत् प्रतीत्यप्रत्ययमात्रवृत्तित्वात् दीर्घत्वह्रस्वतावदित्यत्र दीर्घत्वादिदृष्टान्तेऽपि नासत्त्वमस्माकं सम्मतमिति दृष्टान्तासिद्धिरुद्धर्तुमशक्येत्याह–दीर्घता चेति। ननु ह्रस्वत्वमप्यसदेव कार्यं ततश्च असतः कारणादसतः कार्यस्योत्पत्तौ न कश्चिद्दोष इत्यत आह–यदि चेति। यत्किञ्चिदसत्प्रतीत्यापेक्ष्य यत्किञ्चिदसदुत्पत्तौ नियामकाभावाच्छशविषाणादपि खरविषाणं स्यादित्याह–तथा सतीति। ह्रस्वत्वादीनां सत्त्वाभ्युपगमे तु न परस्येष्टसिद्धिरित्याह–अथास्त्येवेति। क्षणक्षयवादिनः परस्य यदा दीर्घत्वबुद्धिर्न तदा ह्रस्वत्वबुद्धिरिति प्रतीत्यप्रत्ययत्वं तयोरुपगन्तुमशक्यमित्याह–दीर्घह्रस्वबुद्ध्योरिति, अवध्यवधिमतोरेककालीनतायामेव तथा व्यवहारादित्यभिसन्धिः। सर्वस्य प्रतीत्यप्रत्ययमात्रत्वेऽनवस्थाऽप्यभ्युपगमविरोधिनी प्रसज्येतेत्याह–यदि चेति। कार्यकारणभावस्य पारमार्थि-

ऽभ्युपेया, तथा चाभ्युपगमविरोधः, तस्मादस्ति ध्रौव्यांशलक्षणात् द्रव्यसत्ता, नापेक्ष्यसिद्धा, कारणमिति या व्यपदिश्यते, कारणसिद्धौ च कार्यसिद्धिरपि तदविनाभावात्, अन्यथा कारणतैव न स्यादसम्भावितत्तद्गुणत्वात्, पर्यायास्तूत्पादादयः केचिदपेक्ष्यसिद्धाः प्रयोगजाः पटादयः, केचिदनपेक्ष्यसिद्धाः स्वाभाविकाः परमाणुनीलताभ्रेन्द्रचापविद्युदादयः, एवं च स्वरूपसिद्धेः कारणकार्यप्रत्ययावसदर्थविषयौ न भवत इति सिद्धम् ॥

भाष्याक्षरानुसरणमधुना समातन्यते—उत्पादश्च व्ययश्च **उत्पादव्ययौ**, समस्यैकत्वेन निर्दिष्टौ, ध्रुवतीति ध्रुवं—शाश्वतं तद्भावो **ध्रौव्यं**—स्थिरता, उत्पादव्ययध्रौव्याणि, **युक्तं** योगः—समुदायः, सत् अस्तीति **सद्**, विद्यमानमित्यर्थः । एतदुक्तं भवति—उत्पादादयो नैकका: सत्, किं तर्हि ? युक्तं योगः—परस्परापेक्षः समुदाय एवोत्पादादीनां, सदित्यस्य ध्वनेर्विषयः, यथा वृक्षा वनं समुदिता एव नैकका:, एवमुत्पादव्ययध्रौव्याणि योगः सदिति, अथवा समाध्यर्थस्य युजेर्युक्तं—समाहितं त्रिस्वभावं सत्, उत्पादव्ययध्रौव्याण्येव त्रयः स्वभावाः सम्यगाहिताः—परस्परप्रतिबद्धाः सदिति । अन्ये तूत्पादव्ययध्रौव्यैर्युक्तमिति विगृह्णते, किं पुनस्तदुत्पादादिभिर्युक्तमिति निरूपणीयम्, उत्पादादित्रयव्यति-

---

कत्वव्यवस्थितौ ध्रौव्यमयत्नोपनतमेवेत्याह—**तस्मादिति** । या द्रव्यसत्ता । **तदविनाभावात्**, कार्यकारणयोरन्योन्यमव्यभिचारात् । अविनाभावानभ्युपगमे दण्डमाह—**अन्यथेति**, कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वपर्यवसितस्य कार्यनियतपूर्ववर्त्तित्वस्य कार्यानुकूलशक्तिमत्त्वस्य वा कारणत्वस्य कार्यघटितमूर्तिकस्य कार्याभावेऽसम्भावितया तत्स्वभावस्य कारणस्याप्यसम्भवादित्यभिप्राय । प्रतीत्यप्रत्ययमात्रत्वेन कार्यं कारणं च कल्पनामात्रमिति परमतमपाकृत्य पर्यायाणामपि केषाचिदापेक्षिकत्वं केषाचिच्चानापेक्षिकत्वमित्युपपादनद्वारा कार्यकारणभावप्रत्यययोरसदर्थविषयकत्वमपाकरोति—**पर्यायास्तूत्पादादय इति** । **प्रयोगजाः** कुविन्दादिप्रयत्नप्रभवाः । **स्वाभाविकाः** विस्रसापरिणामाः । **स्वरूपसिद्धेः** कार्यतया कारणतया च वस्तुस्वरूपव्यवस्थितेः । आक्षेपसमाधानाभ्यामुत्पादव्ययध्रौव्यात्मकत्वं सत्त्वं व्यवस्थाप्य मूलं यथावद्व्याख्यातुमाह—**भाष्याक्षरेति** । सूत्रे उत्पादश्च व्ययश्च ध्रौव्यं चोत्पादव्ययध्रौव्याणि तैर्युक्तमुत्पादव्ययध्रौव्ययुक्तमिति न समासः, किन्तु उत्पादश्च व्ययश्चोत्पादव्ययौ उत्पादव्ययौ च ध्रौव्यं चोत्पादव्ययध्रौव्याणि तैर्युक्तमुत्पादव्ययध्रौव्ययुक्तमित्येतत् ख्यापयितुमुत्पादव्ययाभ्यामित्युक्तिरित्याह—**उत्पादश्चेति** । **एकत्वेनेति**, पर्यायरूपतया तयोरेकत्वं वोध्यम्, युक्तमित्यस्य योगाश्रयो नार्थः, तथा सति घटयुक्तस्य भूतलस्य घटभिन्नत्ववदुत्पादव्ययध्रौव्ययुक्तस्यापि वस्तुन उत्पादव्ययध्रौव्यभिन्नत्वप्राप्तौ तत्त्रितयात्मकत्वमिष्टं व्याहन्येतात आह—**युक्तं योग इति** । योगोऽपि न संयोगादिलक्षणस्सम्बन्धस्तथा सति उत्पादव्ययध्रौव्याणान्तत्प्रतियोगित्वे तदनुयोगिनोऽन्यस्यैवाक्षेपलभ्यत्वेनैकस्योत्पादव्ययध्रौव्यात्मकत्वं न निरूपितं स्यात्प्रत्युत तत्सम्बन्धमात्रस्यैव सत्त्वं सूत्रविधेयं स्यादत आह—**समुदाय इति** । **सदिति** । न परपरिकल्पितसत्तात्मकजातिविशिष्टार्थक, सत्ताजातेरेवाप्रामाणिकत्वादव्यापकत्वाच्च, किन्तु विद्यमानार्थकमित्याह—**सत् अस्तीति** । उक्तार्थकरणाभिप्रायं प्रकटयति—**एतदुक्तं भवतीति**, उत्पादव्ययध्रौव्ययुक्तं सदित्यत्र समुदायार्थकयुक्तपदोपादानेनानन्तराभिधीयमानार्थः प्रतिपादितो भवतीत्यर्थ , **सदित्यस्येति**, अनुरूपं दृष्टान्तमाह—**यथेति** । योगो नात्रोत्पादव्ययध्रौव्याणां संयोगलक्षणोऽभिमतः समुदायोपि वा न व्यतिरिक्त', किन्तु समुदितानि तान्येवेत्याह—**उत्पादव्ययध्रौव्याणि योग इति**, वहुत्वेऽपि सत्येकत्वन्नापेक्षिकं विरुद्धमित्यावेदनाय **योग** इत्येकवचननिर्देश , वेदाः प्रमाणमित्यनुरोधेन विशेष्यविशेषणवाचकपदयोस्समानवचनकत्वमिति नियमस्य यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसङ्ख्याविरुद्धसङ्ख्याया अविवक्षितत्वं तत्र विशेष्यविशेषणवाचकपदयोस्समानवचनत्वमित्येवंरूपतयाऽन्यत्रोपपादितत्वेन न तद्विरोधोऽपीति । **युजेः**, युजिधातो , **युक्तं** युक्तमिति रूपम् । एवं सति योऽर्थस्सम्पद्यते तमाह—**समाहितमिति**, अस्यैव फलितं **त्रिस्वभावमिति**, **सदिति**, सूत्रघटकलक्ष्यांशग्रहणम् । तथा च यादृशस्सूत्रार्थो निष्पन्नस्तमाह—**उत्पादेत्यादि** । **सम्यगाहिता** इत्यस्यैव विवरणं **परस्परप्रतिबद्धा इति** । व्याख्यान्तरमाचार्यदेशीयाना केषाचिदाक्षेपोपगतमित्यनादरणीयमित्यावेदनायोपनिबध्नाति—**अन्ये त्विति** । एतद्व्याख्यानासम्प्रतिपत्तिख्यापनायाह—**किं पुनरिति**, किमित्याक्षेपे । आक्षेप-

रेकेण द्रव्याभावान्न विद्मः किं तद् युज्यमानमुत्पादादिभिः । अपरे समाधानमाक्षेपस्याभिदधते—युक्तं विशेष्यते उत्पादव्ययध्रौव्यैः, समुदितैर्यो योगस्तद् युक्तं सत्, नान्याभ्यामुत्पादव्ययाभ्यामित्यादिको योगः सदिति । योगश्च सामान्येनोत्पादादीनामनादिर्विशेषविवक्षया सादिः, ध्रौव्यं चेति पृथक् प्राधान्यख्यापनाय सामान्यस्य भाष्यकृतोदचारि, यतः सत्यन्वय्यंशे तदाश्रयावुत्पादविनाशौ सङ्गच्छेते, अन्यथा कस्योत्पादः ? कस्य चानुत्पन्नस्य तेनाकारेण व्ययः ? ॥ अपरे तु ध्रौव्यं चेत्यसमस्ततामन्यथा वर्णयन्ति—

त्रैलक्षण्ये सतः सादिः कथं सन्न त्रिलक्षणम् ? । ध्रौव्यं तल्लक्षणत्वेन द्रव्यार्थेन त्रिपूदितम् ॥ १ ॥
अत एव पृथग् वृत्तौ ध्रौव्यं चेति प्रदर्शितम् । सत् त्रिरूपं त्रयं त्वेतत् सम्भवेन विकल्प्यते ॥ २ ॥
आद्ययोर्नियमादन्त्यसन्त्ये तु भजनाऽऽद्ययोः । स्वतः परनिमित्तौ तु स्यातामप्युपचारतः ॥ ३ ॥
अस्ति नोत्पद्यते चैकमेकमुत्पद्यतेऽस्ति च । नास्ति चोत्पद्यते चैकं नास्ति नोत्पद्यते परम् ॥ ४ ॥
आकाशपरमाणू च प्रदीपान्त्यशिखादि च । आकाशकुसुमं चेति चतुष्टयमुदाहृतम् ॥ ५ ॥

---

परिपोषायाह—**उत्पादादित्रयव्यतिरेकेणेति** । उक्ताक्षेपप्रतिक्षेपकं व्याख्यानान्तरमुपनिबध्नाति—**अपर इति** । **युक्तं सदिति** लक्ष्यलक्षणभावेन विवक्षितम्, तत्र युक्तं योगस्तस्य लक्षणत्वं, सदित्यस्य लक्ष्यत्वम् । युक्तमिति सामान्येनाभिहितम्, उत्पादव्ययाभ्यां युक्त व्ययध्रौव्याभ्यां युक्तमुत्पादध्रौव्याभ्यां युक्तमुत्पादव्ययध्रौव्यैर्युक्तमित्येवं वहुरूपम्, तत्र तुरीयकल्प एवादरणीयः । तत्त्व एव सत्त्वोपपत्तेरित्यावेदयितुमाह—**युक्तं विशेष्यत इति**, उत्पादव्ययध्रौव्यैर्युक्तं न्यान्यत्किञ्चिदभिमतं किन्तु तैस्समुदितैर्यो योगोऽन्योन्याविष्वग्भावस्तदेव युक्तं सदिति व्यपदिश्यतेऽतोऽन्यविशेष्याकाङ्क्षणप्रयुक्ताक्षेपस्य नावकाशः । कीदृशो योगोऽत्र व्यावर्त्यतयाऽभिमत इत्यपेक्षायामाह—**नान्येति** । आदिपदादुत्पादध्रौव्याभ्यां व्ययध्रौव्याभ्यामित्यनयोरुपग्रहः । किमयं योगस्सादिरनादिर्वेत्यपेक्षायामाह—**योगश्चेति, अनादिरित्यनेनानन्तत्वस्य सादिरित्यनेन** सान्तत्वस्य चार्थादागतेरनभिधानेऽपि न न्यूनत्वमिति वोध्यम् । नन्वेवमुत्पादव्ययध्रौव्यैर्युक्तं सतो लक्षणमित्येवं भाष्येण भवितव्यम्, दृश्यते तु उत्पादव्ययाभ्यां ध्रौव्येण च युक्तं सतो लक्षणमित्येवमन्यादृशं भाष्यं तस्य का गतिरित्याशङ्कायामाह—**ध्रौव्यं चेति**, एतत्प्रतीकस्वारस्यात् उत्पादव्ययौ, ध्रौव्यं च युक्तं सतो लक्षणमिति पाठो भाष्ये भवितुमर्हति । **तदाश्रयौ** ध्रौव्यलक्षणसामान्याश्रयौ, **ध्रौव्यं चेति** पृथग्ग्रहणप्रयोजनान्तरोपदर्शकमतान्तरमुपन्यस्यति—**अपरे त्विति** । **त्रैलक्षण्य** इत्याद्याः पञ्च श्लोकाः । तत्र प्रथमस्य—**सतः** वस्तुनः, **त्रैलक्षण्ये** उत्पादव्ययध्रौव्यात्मकत्वे सिद्धे सति, **सादिः सत्** उत्पत्तिमद्वस्तु, **कथं न त्रिलक्षणम्**, उत्पत्तिमत्पदार्थस्य नियमेन विनाशित्वेन निरन्वयस्योत्पादविनाशयोरसम्भवेन यत्रोत्पादस्तत्र विनाशध्रौव्ययोरवश्यम्भावेन त्रिलक्षणं स्यादेवेत्यर्थः । **त्रिषु** उत्पादव्ययध्रौव्येषु मध्ये, **ध्रौव्यं** नित्यत्वम्, **द्रव्यार्थेन** द्रव्यार्थिकनयावष्टम्भेन, **तल्लक्षणत्वेन** सल्लक्षणत्वेन **उदितम्**, सूत्रे कथितम्, इत्यर्थः ॥ १ ॥ ननु सूत्रे उत्पादादीना त्रयाणां समासवाक्येनैवाववोधनात्कथमेतदित्यपेक्षायामाह—**अत एवेति**, यत एव ध्रौव्यस्य सल्लक्षणत्वं तत एवेत्यर्थः । **वृत्तौ** भाष्ये । **ध्रौव्यं चेति**, इत्येवं स्वरूपेण पृथक् उत्पादव्ययाभ्यां पृथक्कृत्य **प्रदर्शितं** कथितम् । ननूत्पादव्ययौ इत्येवं रूपेण तयोरपि ध्रौव्यात् पृथक् कीर्त्तनं भाष्ये समस्त्येव ततस्तयोरेव कथं न सल्लक्षणत्वमित्यत आह—**सत्त्रिरूपमिति**, सत्त्रिरूपमित्येतद्यदभिमतम्, तत्र **एतत्त्रयम्** उत्पादव्ययध्रौव्यस्वरूपम् । **सम्भवेन** यथा यत्र यत्सम्भवस्तथा । **विकल्प्यते** विभज्यते, इति द्वितीयस्यार्थः ॥२॥ विभजनामेवोपदर्शयति—**आद्ययोरिति**, उत्पादव्ययोरित्यर्थः । **अन्त्यं** ध्रौव्यम् । **नियमादिति**, यत्रोत्पादव्ययौ तत्र नियमेन ध्रौव्यमित्यर्थः । **अन्त्ये तु** ध्रौव्ये पुनः । **भजना** स्याद्वा न स्याद्वेति विकल्पना । **आद्ययोः** उत्पादव्यययोः । ध्रौव्ये गगनादिवस्तुनि **स्वतः** परापेक्षाभावतः उत्पादव्ययौ न स्तः । **परनिमित्तौ तु**, अवगाहकपुद्गलादिपरापेक्षावगाहनादिफलापेक्षौ पुनः । **स्यातामपि** उत्पादव्ययौ सम्भवतोऽपि । एवमप्युत्पादव्यययोर्वस्तुव्यापकत्वं समस्त्येवेति कथन्न सल्लक्षणत्वमित्यत आह—**उपचारत इति** । प्रधानवृत्त्याऽऽश्रयणेन ध्रौव्यस्य वस्तुव्यापकत्वतो लक्षणत्वमिति प्रधानवृत्त्याश्रयणमेव न्याय्यमणुरपि विशेषोऽध्यवसायकर इति न्यायादिति तृतीयपद्यार्थः ॥ ३ ॥ भजनास्वरूपोपदर्शनपरः **अस्तीत्यादि** तुरीयश्लोक उत्तानार्थः ॥ ४ ॥ भजनास्वरूपावगतिसौकर्याय निदर्शनचतुष्टयमाह—**आकाशपरमाणू चेति** । **अस्ति नोत्पद्यते चैकमित्यत्र** निदर्शनमाकाशः,

सङ्क्षेपतः कारिकापञ्चकस्यायमर्थः—पुद्गलजीवेषूत्पादव्ययोरन्यादृशत्वाद्, धर्मादित्रितये ततोऽन्यादृशत्वात्, ध्रौव्यस्य पञ्चत्वेऽप्यविशेषाद् वृत्तौ पृथग् विवरणम्, अन्यथा धर्माधर्माकाशेष्वधिगमोपायविषयत्वेनोत्पादप्रच्युती, अन्यथा च जीवपुद्गलेष्विति द्रव्यक्षेत्रकालभावापेक्षाद् अन्यथा प्रयोगजावुत्पादव्ययौ, अन्यथा च धर्मास्तिकायादिषु द्रव्यस्वभावापेक्षमप्रयोगजौ ज्ञानविषयत्वोत्पादप्रच्युतिमात्रलक्षणौ, नहि तेषु पौरुषेयो विस्रसा वा प्रयोगः क्रमत इति, अतः परप्रत्ययावुत्पादविनाशौ त्रयाणाम्, जीवपुद्गलानां तु प्रयोगविस्रसाभ्यामुत्पादव्ययौ सम्भवतः, ध्रौव्यं तु सर्वेष्वविशिष्टम्, एतत् सतो लक्षणं कचिदुपचारतः क्वचित् परमार्थत इति, तदेतत् पौर्वापर्येणालोच्य कृतप्रज्ञैरागमज्ञैरेव व्याख्यास्यते निर्विरोधं, वयं तत्रानिपुणाः किञ्चिदेव स्थूलकुशलतयाऽभिदध्महे—चशब्दः समुच्चितौ वर्तते, तेन नोत्पादादयः प्रत्येकं सतो लक्षणं, किं तर्हि ? समुदिता एव वस्तुतत्त्वं

---

स्वतो नाकाशस्योत्पत्तिरित्युररीकृत्य चेदम्। **एकमुत्पद्यतेऽस्ति चे**त्यत्र निदर्शनं परमाणु, तस्य स्कन्धात्पृथग्भावे उत्पत्तिरवसेया। **नास्ति चोत्पद्यते चैकमि**त्यत्र निदर्शनं प्रदीपान्त्यशिखादि। एवं सति तृतीयविकल्पनाया ध्रौव्यस्यास्तित्वलक्षणस्य व्यापकत्वं न स्यादिति नारेकणीयम्, द्रव्यार्थिकनयावष्टम्भेन ध्रौव्यस्य लक्षणत्वप्रतिज्ञानात्पुद्गलात्मना प्रदीपान्त्यशिखादेरप्युत्पादात्पूर्वं विनाशानन्तरमपि सत्त्वमस्त्येवेति। **नास्ति नोत्पद्यते परमि**त्यत्र निदर्शनम**ाकाशकुसुमं चेतीति** ॥ ५ ॥ पद्यानामप्युपदर्शितपद्यानाम्मुकुलितमर्थमावेदयन्नाह—**सङ्क्षेपत इति। अन्यादृशत्वात्** धर्मादित्रितयोत्पादव्ययापेक्षयेत्यर्थः, अन्यादृशत्वञ्चाग्रे स्पष्टीकृतम्। **पञ्चत्वेऽप्यविशेषादिति** स्थाने **पञ्चस्वप्यविशेषादिति** पाठो युक्तः, पञ्चसु जीवपुद्गलधर्माधर्माकाशेषु, **अविशेषात्**, यादृशं ध्रौव्यं जीवपुद्गलयोस्तादृशमेव धर्माधर्माकाशाना न तूत्पादव्ययवदन्यादृशमित्यत। **वृत्तौ** भाष्ये, **पृथग् विवरणम्**, उत्पादव्ययौ समासेनोपन्यस्य तत्पार्थक्येन ध्रौव्यस्य विवरणम्। उत्पादव्यययोः कथमन्यादृशत्वमित्यपेक्षायामाह—**अन्यथेति**, अस्यैवार्थकथनम्—**अधिगमोपायविषयत्वेनेति**—जीवपुद्गलयोरुत्पादव्यययोः कथमन्यादृशत्वमित्यपेक्षायामुक्तम्—**अन्यथा चेति।** अस्यैव स्पष्टतरवाक्यान्तरेण विवरणम्—**द्रव्यक्षेत्रकालभावापेक्षात् अन्यथा प्रयोगजावि**त्येतत्पर्यन्तम्। ततोऽन्यथा धर्मास्तिकायादिषूत्पादव्ययावित्युपदर्शयति—**अन्यथा च धर्मास्तिकायादिष्विति**, उत्पादव्ययाविति सम्बध्यते, आदिपदादधर्मास्तिकायाकाशास्तिकाययोरुपग्रहः। एतदेव भावयति—**द्रव्यस्वभावेति।** कथमप्रयोगजावुत्पादव्ययौ धर्मादिष्वित्यत आह—**नहि तेष्विति**, तेषु धर्माधर्माकाशेषु। **परप्रत्ययौ** गन्तृस्थात्रवगाहकजीवपुद्गलनिमित्तकौ। **त्रयाणां** धर्माधर्माकाशास्तिकायानाम्। जीवपुद्गलोत्पादव्यययो प्रयोगत्वमुपपादयति—**जीवपुद्गलानान्त्विति। सर्वेषु** जीवपुद्गलधर्माधर्माकाशेषु। **एतत्**, उत्पादव्ययध्रौव्यात्मकत्वम्। **क्वचित्**, धर्मास्तिकायादिषु, स्वत उत्पादव्यययोरभावात्, परनिमित्तकयोरेव तयोस्तत्रोपचार, तेष्वेव च ध्रौव्यस्य स्वतो भावात्परमार्थता, इत्यंशेनोपचारतोऽशेन परमार्थतस्त्रिलक्षणयोगित्वम्, जीवपुद्गलयोस्तु स्वत उत्पादव्ययौ स्वतो ध्रौव्यञ्चेति परमार्थतस्त्रिलक्षणयोगित्वम्। यद्यपि सर्वस्यैव वस्तुनो द्रव्यपर्यायोभयात्मकत्वेन द्रव्यात्मना ध्रौव्यं पर्यायात्मनोत्पादव्ययाविति कृत्वोत्पादव्ययध्रौव्याणा सर्वत्रापेक्षिकत्वमविशिष्टमित्यापेक्षिकस्यौपचारिकत्वे सर्वत्रोपचारत एव त्रिलक्षणयोग, पारमार्थिकत्वे सर्वत्र परमार्थत एव त्रिलक्षणयोगस्तथापि धर्मादीना स्वरूपतो नित्यतयैव प्रसिद्धिः प्रदीपान्त्यशिखादीनाञ्चानित्यतयैव प्रसिद्धिरतो नित्यत्वमेव धर्मादीनामनित्यत्वमेव प्रदीपादीना व्यवहारत. पारमार्थिकं रूपमापेक्षिकमपि, तदन्यत्तु युक्त्युपपत्तिसिद्धमपि व्यवहारपथानवतीर्णत्वादपारमार्थिकमिति मनसि निधायोक्तम्—**कचिदुपचारत इत्यादि।** अत्र भाष्यव्याख्याभेदसम्यक्त्वासम्यक्त्वविवेकं कर्तुमागमज्ञा एव विदग्धा न त्वन्य इत्युक्तिवैचित्र्येणोपदर्शयन्नेव प्रकृतमनुसरति—**तदेतदिति। निर्विरोधमिति व्याख्यास्यत** इति पूर्वक्रियान्वयि। **तत्र** निर्विरोधव्याख्याने। **किञ्चिदेव** प्रागुपदर्शितप्रकार वक्ष्यमाणप्रकारमेव च। **स्थूलकुशलतया** मन्दबुद्धिग्राह्यार्थव्याख्याननैपुण्येन, एतदुक्तिश्च स्वस्य सतोऽपि पाण्डित्यविशेषस्याभिमानमूलत्वाभावाविष्काराय। वस्तुत स्वोपदर्शितव्याख्यानप्रकारोऽपि सूक्ष्मप्रेक्षादक्षविद्वज्जनचेतश्चमत्कारचञ्चुरेवेत्यर्थावबोधनाय **किञ्चिदेवे**त्युक्तमिति विभावनीयं सुधीभि। **चशब्दः, ध्रौव्येण चे**त्यत्रोक्त चशब्दः। समुच्चयार्थकस्य चशब्दस्योपादाने प्रयोजनमाह—**नोत्पादादय इति। समुदिता एवेति,**

रेकेण द्रव्याभावान्न विद्मः किं तद् युज्यमानमुत्पादादिभिः । अपरे समाधानमाक्षेपस्याभिदधते— युक्तं विशेष्यते उत्पादव्ययध्रौव्यैः, समुदितैर्यो योगस्तद् युक्तं सत्, नान्याभ्यामुत्पादव्ययाभ्यामित्यादिको योगः सदिति । योगश्च सामान्येनोत्पादादीनामनादिर्विशेषविवक्षया सादिः, ध्रौव्यं चेति पृथक् प्राधान्यख्यापनाय सामान्यस्य भाष्यकृतोदचारि, यतः सत्यन्वय्यंशे तदाश्रयावुत्पादविनाशौ सङ्गच्छेते, अन्यथा कस्योत्पादः ? कस्य चानुत्पन्नस्य तेनाकारेण व्ययः ? ॥ अपरे तु ध्रौव्यं चेत्यसमस्ततामन्यथा वर्णयन्ति—

त्रैलक्षण्ये सतः सादिः कथं सन्न त्रिलक्षणम् ? । ध्रौव्यं तल्लक्षणत्वेन द्रव्यार्थेन त्रिषूदितम् ॥ १ ॥
अत एव पृथग् वृत्तौ ध्रौव्यं चेति प्रदर्शितम् । सत् त्रिरूपं त्रयं त्वेतत् सम्भवेन विकल्प्यते ॥ २ ॥
आद्ययोर्नियमादन्त्यसन्त्ये तु भजनाऽऽद्ययोः । स्वतः परनिमित्तौ तु स्यातामप्युपचारतः ॥ ३ ॥
अस्ति नोत्पद्यते चैकमेकमुत्पद्यतेऽस्ति च । नास्ति चोत्पद्यते चैकं नास्ति नोत्पद्यते परम् ॥ ४ ॥
आकाशपरमाणू च प्रदीपान्त्यशिखादि च । आकाशकुसुमं चेति चतुष्टयमुदाहृतम् ॥ ५ ॥

---

परिपोषायाह—**उत्पादादित्रयव्यतिरेकेणेति** । उक्ताक्षेपप्रतिक्षेपकं व्याख्यानान्तरमुपनिबध्नाति—**अपर इति** । **युक्तं सदिति** लक्ष्यलक्षणभावेन विवक्षितम्, तत्र युक्तं योगस्तस्य लक्षणत्वं, सदित्यस्य लक्ष्यत्वम् । युक्तमिति सामान्येनाभिहितम्, उत्पादव्ययाभ्यां युक्तं व्ययध्रौव्याभ्यां युक्तमुत्पादध्रौव्याभ्यां युक्तमुत्पादव्ययध्रौव्यैर्युक्तमित्येवं बहुरूपम्, तत्र तुरीयकल्प एवादरणीयः । तत्त्व एव सत्त्वोपपत्तेरित्यावेदयितुमाह—**युक्तं विशेष्यत इति**, उत्पादव्ययध्रौव्यैर्युक्तं न्यान्यत्किञ्चिदभिमतं किन्तु तैस्समुदितैर्यो योगोऽन्योन्याविष्वग्भावस्तदेव युक्तं सदिति व्यपदिश्यतेऽतोऽन्यविशेष्याकाङ्क्षणप्रयुक्ताक्षेपस्य नावकाशः । कीदृशो योगोऽत्र व्यावर्त्यतयाऽभिमत इत्यपेक्षायामाह—**नान्येति** । आदिपदादुत्पादध्रौव्याभ्यां व्ययध्रौव्याभ्यामित्यनयोरुपग्रहः । किमयं योगस्सादिरनादिर्वेत्यपेक्षायामाह—**योगश्चेति**, **अनादिरित्यनेनानन्तत्वस्य** **सादिरित्यनेन** सान्तत्वस्य चार्थादागतेरनभिधानेऽपि न न्यूनत्वमिति बोध्यम् । नन्वेवमुत्पादव्ययध्रौव्यैर्युक्तं सतो लक्षणमित्येवं भाष्येण भवितव्यम्, दृश्यते तु उत्पादव्ययाभ्यां ध्रौव्येण च युक्तं सतो लक्षणमित्येवमन्यादृशं भाष्यं तस्य का गतिरित्याशङ्कायामाह—**ध्रौव्यं चेति**, एतत्प्रतीकस्वारस्यात् उत्पादव्ययौ, ध्रौव्यं च युक्तं सतो लक्षणमिति पाठो भाष्ये भवितुमर्हति । **तदाश्रयौ** ध्रौव्यलक्षणसामान्याश्रयौ, **ध्रौव्यं चेति**, पृथग्ग्रहणप्रयोजनान्तरोपदर्शकमतान्तरमुपन्यस्यति—**अपरे त्विति** । **त्रैलक्षण्य** इत्याद्याः पञ्च श्लोकाः । तत्र प्रथमस्य— **सतः** वस्तुनः, **त्रैलक्षण्ये** उत्पादव्ययध्रौव्यात्मकत्वे सिद्धे सति, **सादिः सत्** उत्पत्तिमद्वस्तु, **कथं न त्रिलक्षणम्**, उत्पत्तिमत्पदार्थस्य नियमेन विनाशित्वेन निरन्वयस्योत्पादविनाशयोरसम्भवेन यत्रोत्पादस्तत्र विनाशध्रौव्ययोरवश्यम्भावेन त्रिलक्षणं स्यादेवेत्यर्थः । **त्रिषु** उत्पादव्ययध्रौव्येषु मध्ये, **ध्रौव्यं** नित्यत्वम्, **द्रव्यार्थेन** द्रव्यार्थिकनयावष्टम्भेन, **तल्लक्षणत्वेन** सल्लक्षणत्वेन **उदितम्**, सूत्रे कथितम्, इत्यर्थः ॥ १ ॥ ननु सूत्रे उत्पादादीनां त्रयाणां समासवाक्येनैवावबोधनात्कथमेतदित्यपेक्षायामाह— **अत एवेति**, यत एव ध्रौव्यस्य सल्लक्षणत्वं तत एवेत्यर्थः । **वृत्तौ** भाष्ये । **ध्रौव्यं चेति**, इत्येवं स्वरूपेण पृथक् उत्पादव्ययाभ्यां पृथक्कृत्य **प्रदर्शितं** कथितम् । ननूत्पादव्ययौ इत्येवं रूपेण तयोरपि ध्रौव्यात् पृथक् कीर्त्तनं भाष्ये समस्त्येव ततस्तयोरेव कथं न सल्लक्षणत्वमित्यत आह—**सत्त्रिरूपमिति**, सत्त्रिरूपमित्येतद्यदभिमतम्, तत्र **एतत्त्रयम्** उत्पादव्ययध्रौव्यस्वरूपम् । **सम्भवेन** यथा यत्र यत्सम्भवस्तथा । **विकल्प्यते** विभज्यते, इति द्वितीयस्यार्थः ॥२॥ विभजनामेवोपदर्शयति— **आद्ययोरिति**, उत्पादव्यययोरित्यर्थः । **अन्त्यं** ध्रौव्यम् । **नियमादिति**, यत्रोत्पादव्ययौ तत्र नियमेन ध्रौव्यमित्यर्थः । **अन्त्ये तु** ध्रौव्ये पुनः । **भजना** स्याद्वा न स्याद्वेति विकल्पना । **आद्ययोः** उत्पादव्यययोः । ध्रौव्ये गगनादिवस्तुनि **स्वतः** परापेक्षाभावतः उत्पादव्ययौ न स्तः । **परनिमित्तौ तु**, अवगाहकपुद्गलादिपरापेक्षावगाहनादिफलापेक्षौ पुनः । **स्यातामपि** उत्पादव्ययौ सम्भवतोऽपि । एवमप्युत्पादव्यययोर्वस्तुव्यापकत्वं समस्त्येवेति कथन्न सल्लक्षणत्वमित्यत आह—**उपचारत इति** । प्रधानवृत्त्याऽऽश्रयणेन ध्रौव्यस्य वस्तुव्यापकत्वतो लक्षणत्वमिति प्रधानवृत्त्याश्रयणमेव न्याय्यमणुरपि विशेषोऽध्यवसायकर इति न्यायादिति तृतीयपद्यार्थः ॥ ३ ॥ भजनास्वरूपोपदर्शनपरः **अस्तीत्यादि** तुरीयश्लोक उत्तानार्थः ॥ ४ ॥ भजनास्वरूपावगतिसौकर्याय निदर्शनचतुष्टयमाह—**आकाशपरमाणू चेति** । **अस्ति नोत्पद्यते चैकमित्यत्र** निदर्शनमाकाशः,

सङ्क्षेपतः कारिकापञ्चकस्यायमर्थः—पुद्गलजीवेषूत्पादव्यययोरन्यादृशत्वाद्, धर्मादित्रितये ततोऽन्यादृशत्वात्, ध्रौव्यस्य पञ्चत्वेऽप्यविशेषाद् वृत्तौ पृथग् विवरणम्, अन्यथा धर्माधर्माकाशेष्वधिगमोपायविषयत्वेनोत्पादप्रच्युती, अन्यथा च जीवपुद्गलेष्विति द्रव्यक्षेत्रकालभावापेक्षाद् अन्यथा प्रयोगजावुत्पादव्ययौ, अन्यथा च धर्मास्तिकायादिषु द्रव्यस्वभावापेक्षमप्रयोगजौ ज्ञानविषयत्वोत्पादप्रच्युतिमात्रलक्षणौ, नहि तेषु पौरुषेयो विस्रसा वा प्रयोगः क्रमत इति, अतः परप्रत्ययावुत्पादविनाशौ त्रयाणाम्, जीवपुद्गलानां तु प्रयोगविस्रसाभ्यामुत्पादव्ययौ सम्भवतः, ध्रौव्यं तु सर्वेष्वविशिष्टम्, एतत् सतो लक्षणं क्वचिदुपचारतः क्वचित् परमार्थत इति, तदेतत् पौर्वापर्येणालोच्य कृतप्रज्ञैरागमज्ञैरेव व्याख्यास्यते निर्विरोधं, वयं तत्रानिपुणाः किञ्चिदेव स्थूलकुशलतयाऽभिदध्महे—चशब्दः समुच्चितौ वर्तते, तेन नोत्पादादयः प्रत्येकं सतो लक्षणं, किं तर्हि ? समुदिता एव वस्तुतत्त्वं

---

स्वतो नाकाशस्योत्पत्तिरित्युररीकृत्य चेदम् । **एकमुत्पद्यतेऽस्ति चे**त्यत्र निदर्शनं परमाणुः, तस्य स्कन्धात्पृथग्भावे उत्पत्तिरवसेया । **नास्ति चोत्पद्यते चैकमि**त्यत्र निदर्शनं प्रदीपान्त्यशिखादि । एवं सति तृतीयविकल्पनाया ध्रौव्यस्यास्तित्वलक्षणस्य व्यापकत्वं न स्यादिति नारेकणीयम्, द्रव्यार्थिकनयावष्टम्भेन ध्रौव्यस्य लक्षणत्वप्रतिज्ञानात्पुद्गलात्मना प्रदीपान्त्यशिखादेरप्युत्पादात्पूर्वं विनाशानन्तरमपि सत्त्वमस्त्येवेति । **नास्ति नोत्पद्यते परमि**त्यत्र निदर्शन**माकाशकुसुमं चेतीति** ॥ ५ ॥ पञ्चानामप्युपदर्शितपद्यानाम्मुकुलितमर्थमावेदयन्नाह—**सङ्क्षेपत इति । अन्यादृशत्वात्** धर्मादित्रितयोत्पादव्ययापेक्षयेत्यर्थः, अन्यादृशत्वञ्चाग्रे स्पष्टीकृतम् । **पञ्चत्वेऽप्यविशेषादिति** स्थाने **पञ्चस्वप्यविशेषादिति** पाठो युक्तः, पञ्चसु जीवपुद्गलधर्माधर्माकाशेषु, **अविशेषात्**, यादृशं ध्रौव्यं जीवपुद्गलयोस्तादृशमेव धर्माधर्माकाशानां न तूत्पादव्ययवदन्यादृशमित्यतः । **वृत्तौ** भाष्ये, **पृथग् विवरणम्**, उत्पादव्ययौ समासेनोपन्यस्य तत्पार्थक्येन ध्रौव्यस्य विवरणम् । उत्पादव्यययोः कथमन्यादृशत्वमित्यपेक्षायामाह—**अन्यथेति,** अस्यैवार्थकथनम्—**अधिगमोपायविषयत्वेनेति**—जीवपुद्गलयोरुत्पादव्यययोः कथमन्यादृशत्वमित्यपेक्षायामुक्तम्—**अन्यथा चेति** । अस्यैव स्पष्टतरवाक्यान्तरेण विवरणम्—**द्रव्यक्षेत्रकालभावापेक्षात् अन्यथा प्रयोगजावि**त्येतत्पर्यन्तम् । ततोऽन्यथा धर्मास्तिकायादिषूत्पादव्ययावित्युपदर्शयति—**अन्यथा च धर्मास्तिकायादिष्विति,** उत्पादव्ययाविति सम्बध्यते, आदिपदादधर्मास्तिकायाकाशास्तिकाययोरुपग्रहः । एतदेव भावयति—**द्रव्यस्वभावेति** । कथमप्रयोगजावुत्पादव्ययौ धर्मादिष्वित्यत आह—**नहि तेष्विति,** तेषु धर्माधर्माकाशेषु । **परप्रत्ययौ** गन्तृस्थात्रवगाहकजीवपुद्गलनिमित्तकौ । **त्रयाणां** धर्माधर्माकाशास्तिकायानाम् । जीवपुद्गलोत्पादव्यययोः प्रयोगत्वमुपपादयति—**जीवपुद्गलानान्त्विति** । **सर्वेषु** जीवपुद्गलधर्माधर्माकाशेषु । **एतत्**, उत्पादव्ययध्रौव्यात्मकत्वम् । **क्वचित्**, धर्मास्तिकायादिषु, स्वत उत्पादव्यययोरभावात्, परनिमित्तकयोरेव तयोस्तत्रोपचारः, तेष्वेव च ध्रौव्यस्य स्वतो भावात्परमार्थता, इत्यंशेनोपचारतोंऽशेन परमार्थतस्त्रिलक्षणयोगित्वम्, जीवपुद्गलयोस्तु स्वत उत्पादव्ययौ स्वतो ध्रौव्यञ्चेति परमार्थतस्त्रिलक्षणयोगित्वम् । यद्यपि सर्वस्यैव वस्तुनो द्रव्यपर्यायोभयात्मकत्वेन द्रव्यात्मना ध्रौव्यं पर्यायात्मनोत्पादव्ययाविति कृत्वोत्पादव्ययध्रौव्याणां सर्वत्रापेक्षिकत्वमविशिष्टमित्यापेक्षिकस्यौपचारिकत्वे सर्वत्रोपचारत एव त्रिलक्षणयोग, पारमार्थिकत्वे सर्वत्र परमार्थत एव त्रिलक्षणयोगस्तथापि धर्मादीना स्वरूपतो नित्यतयैव प्रसिद्धिः प्रदीपान्त्यशिखादीनाञ्चानित्यतयैव प्रसिद्धिरतो नित्यत्वमेव धर्मादीनामनित्यत्वमेव प्रदीपादीना व्यवहारतः पारमार्थिकं रूपमापेक्षिकमपि, तदन्यत्तु युक्त्युपपत्तिसिद्धमपि व्यवहारपथानवतीर्णत्वादपारमार्थिकमिति मनसि निधायोक्तम्—**क्वचिदुपचारत इत्यादि** । अत्र भाष्यव्याख्याभेदसम्यक्त्वासम्यक्त्वविवेकं कर्तुमागमज्ञा एव विदग्धा न त्वन्य इत्युक्तिवैचित्र्येणोपदर्शयन्नेव प्रकृतमनुसरति—**तदेतदिति । निर्विरोधमिति व्याख्यास्यत** इति पूर्वक्रियान्वयि । **तत्र** निर्विरोधव्याख्याने । **किञ्चिदेव** प्रागुपदर्शितप्रकार वक्ष्यमाणप्रकारमेव च । **स्थूलकुशलतया** मन्दबुद्धिग्राह्यार्थव्याख्याननैपुण्येन, एतदुक्तिश्च स्वस्य सतोऽपि पाण्डित्यविशेषस्याभिमानमूलत्वाभावाविष्काराय । वस्तुतः स्वोपदर्शितव्याख्यानप्रकारोऽपि सूक्ष्मप्रेक्षादक्षविद्वज्जनचेतश्चमत्कारचञ्चुरेवेत्यर्थाववोधनाय **किञ्चिदेवे**त्युक्तमिति विभावनीयं सुधीभिः । **चशब्दः, ध्रौव्येण चे**त्यत्रोक्तः चशब्दः । समुच्चयार्थकस्य चशब्दस्योपादाने प्रयोजनमाह—**नोत्पादादय इति । समुदिता एवेति,**

भवन्तीति, एनमेवार्थमुत्तरेण भाष्येण प्रदर्शयति—**[यदुत्पद्यते यद् व्येति यच्च ध्रुवं तत् सत्। अतोऽन्यदसदिति ॥] यदुत्पद्यते** इत्यादि । यदिति सामान्यमात्राभिधायिना सर्वनाम्ना धर्मास्तिकायादिपञ्चकपरिग्रहः, परस्परापेक्षाः समुदिता एवोत्पादादयः सल्लक्षयन्ति, तत्र द्रव्यनयाभिप्रायेणाकारान्तराविर्भावमात्रमुत्पाद औपचारिकः, परमार्थतो न किञ्चिदुत्पद्यते सततमवस्थितद्रव्यांशविवर्तमानमुत्पादविनाशव्यवस्थया व्यपदिश्यते प्रज्ञायते च, पूर्वक्षणोच्छेदेन क्षणान्तरात्मलाभ उत्पादः पर्यायस्य, तस्यैव क्षणस्य निरन्वयोच्छेदिता विनाशः, द्रव्यास्तिकस्य ध्रौव्यमन्वयी सामान्यांशः। पर्यायस्योपचारात् सन्तानमात्रं ध्रौव्यशब्दाभिधेयम्, एकः सन्तानः, तद्बलेन च प्रत्यभिज्ञादिप्रसिद्धिः। तदेतत् त्रितयमपि प्रतिपादयत्युभयनयसङ्गत्या वस्तुसद्भावप्रतिपत्तये, न ध्रौव्यमुत्पादव्ययशून्यं केनचित् प्रमाणेन गोचरीकर्तुं शक्यते, नाप्युत्पादव्ययौ सामान्यांशवियुताविति यदुत्पद्यते यद् व्येति यच्च ध्रुवं तत् सद् विद्यते तदस्तीति, सामर्थ्यादिदमापन्नम्—अतोऽन्यदसदिति, अत इत्युत्पादादिसमुदितस्वभावाद् यदन्यत् तदसत्, तच्च किं ? समुदायादपकृष्ट एकक उत्पादो वा विनाशो वा ध्रौव्यं वा, उत्पादविनाशौ वा, उत्पादध्रौव्ये वा, विनाशध्रौव्ये वा, इतरनिरपेक्ष्यस्य तादृशांशस्याभावाद्-

---

उत्पादादय इति सम्बध्यते । **एनमेव** प्रत्येकं न किन्तु समुदिता एवोत्पादादयः वस्तुतत्त्वमित्येवंरूपमेव । **सामान्यमात्राभिधायिना यदिति सर्वनाम्नेति** योगः । परस्परापेक्षद्रव्यपर्यायोभयनयानुगतप्रमाणप्रमेयं वस्तुनस्त्रैलक्षण्यं तत्त्वं न तु परस्परानपेक्षैकनयाभिमतं तत्त्वम्भवितुमर्हतीत्युपपादयितुमाह—**तत्रेति**, उत्पादादिषु त्रिष्वित्यर्थः । प्रथमं द्रव्यनयवक्तव्यमाविष्करोति—**द्रव्यनयाभिप्रायेणे**त्यारभ्य **प्रज्ञायते चे**त्यन्तेन । पर्यायनयवक्तव्यमाह—**पूर्वक्षणोच्छेदेनेति । पर्यायस्येति**, पर्यायनयस्येत्यर्थ , अभिप्रायेणेति शेष. । **तस्यैव क्षणस्येति**, पूर्वक्षणस्यैवेत्यर्थः । उत्पादव्ययोस्स्वरूपं मतद्वयेनोपदर्श्य द्रव्यनये ध्रौव्यं कि, पर्यायनये च किं तदित्यपेक्षायामाह—**द्रव्यास्तिकस्येति**, मत इति शेष', एवमग्रेपि । **अन्वयी** पूर्वपरपर्यायानुगतो यः सामान्यांशः स द्रव्यास्तिकस्य मते ध्रौव्यमित्यर्थः, द्रव्यनये ध्रौव्यं पारमार्थिकम् उत्पादव्ययौ चौपचारिकौ। पर्यायनये चोत्पादव्ययौ पारमार्थिकौ ध्रौव्यञ्चौपचारिकमित्यभिप्रेत्याह—**पर्यायस्येति**, पर्यायास्तिकस्येत्यर्थः । **सन्तानमात्रमि**त्यत्र मात्रपदोपादानात्सामान्यस्य व्यवच्छेदः । किमर्थन्तर्हि औपचारिकस्यैकस्य सन्तानस्य कल्पनमित्यत आह—**तद्बलेनेति**, सन्तानात्मकैकविषयावगाहित्वेनेत्यर्थ. । **प्रत्यभिज्ञादिप्रसिद्धिः**, सोऽयं घट इत्यादिप्रत्यभिज्ञायाः परमाणुपुञ्जात्मकपूर्वापरकालवर्त्तिनो घटक्षणयोर्भेदेन तदैक्यरूपविषयाभावेऽपि तत्सन्तानैक्यरूपविषयसद्भावेन प्रामाण्यप्रसिद्धिः । एवं च द्रव्यनये केवले केवले च पर्यायनये न वस्तुगत्योत्पादव्ययध्रौव्यात्मकवस्तुप्रसिद्धि., उभयनयव्यापिप्रमाणावलम्बने च तत्प्रसिद्धिरित्याह—**तदेतत्त्रितयमपीति**। ननु ध्रौव्यमेवास्तु वस्तु ध्रौव्यरहितावुत्पादव्ययौ वाऽस्तु तथा, तथा च तत्प्रतिपत्तिरेकेनापि नयेन सुलभेत्युभयनयसङ्गत्याश्रयणं वस्तुप्रतिपत्त्यर्थमनावश्यकमित्यत आह—**न ध्रौव्यमुत्पादव्ययशून्यमिति**, तथा च केवलस्य ध्रौव्यस्य तद्विनिर्मुक्तयोश्चोत्पादव्यययोश्शशशृङ्गकल्पतया तद्विषययोः परस्परनिरपेक्षनययोर्न वस्तुविषयकत्वमिति न ततो वस्तुप्रतिपत्तिरिति भावः। **सदित्यस्य** व्याख्यानं **विद्यत** इति, तथा च **तत्सदित्यस्य** तदस्तीत्यर्थ. । "उत्पादव्ययध्रौव्ययुक्तं सत्" इति सूत्रे अतोऽन्यदसदिति नोक्तं भाष्ये कथमकस्मादिदमापतितमित्यत आह—**सामर्थ्यादिदमापन्नमिति**, लक्षणस्य लक्ष्यतावच्छेदकसमनियतत्वेन यत्र लक्षणं नास्ति तत्र लक्ष्यतावच्छेदकमपि नास्तीति प्रकृते उत्पादव्ययध्रौव्यलक्षणरहिते सत्त्वाभावादसत्त्वमर्थाक्षिप्तमेवेति । **अत** इत्यत्रेदम्पदेनोत्पादादीनां त्रयाणां प्रत्येकं परामर्शे प्रत्येकमुत्पादादिषु त्रिषु उत्पादिभिन्नत्वस्याभावात्तेषामेकैकशोऽसत्त्वन्न प्राप्नोति येषां च शशशृङ्गादीनां नास्त्युत्पादाद्यन्यतमरूपता तेषां सर्वोपाख्याविधुराणां व्यवहारसामान्यविषयत्वेन नासद्व्यवहारविषयत्वमपीत्यतोऽन्यदसदित्यस्य निर्विषयत्वमेव स्यादित्यत आह—**अत इत्युत्पादादिसमुदितस्वभावादिति । तच्च किम् ?** उत्पादादिसमुदितस्वभावादन्यत्किम् । उत्तरयति—**समुदायेति**, समुदायसमुदायिनोः कथञ्चिद्भेदमवलम्ब्येयमुक्तिः । कथमुत्पादादेरेकैकस्य उत्पादविनाशादियुग्मस्य चासत्त्वमित्यपेक्षायामाह—**इतरनिरपेक्षस्येति**, व्ययध्रौव्यनिरपेक्षस्योत्पादस्योत्पादध्रौव्यनिरपेक्षस्य विनाशस्योत्पादविनाशनिरपेक्षस्य ध्रौव्यस्य ध्रौव्यनिरपेक्षस्योत्पादविनाशयुग्मस्य विनाशनिरपेक्षस्यो-

**असद्विषयत्वमसद्व्यवहारप्रतिवन्धिता चेति नानुपाख्योऽसच्छब्दवाच्यः शब्दव्यवहारायोग्यत्वात् ॥ ननु च द्रव्यपर्यायनयौ स्वतन्त्रत्वाद् द्वावपि विजिगीषू स्वविषयोपमर्दं परस्परं न सहेते, ततश्च पुनरपि सीमन्तितमेव वस्तु न वस्तुतायामवतिष्ठेतेति । उच्यते–पर्यायनयस्य तावदुत्पादव्ययलक्षणस्य स्वातन्त्र्यं नास्ति द्रव्यास्तिकेनाङ्कुशितत्वात् । नह्युत्पादो नाम कश्चिद् धर्मोऽस्त्यभूतभवनात्मकः, स चोत्पादो द्विधा कल्प्येत–प्रायोगिको वैस्रसिकश्च, प्रायोगिकः पुरुषकारनिर्वर्त्यः, सोऽपि द्विधा–अनभिसन्धिकृतोऽभिसन्धिकृतश्च, तत्राद्यः कायवाक्स्वान्तभेदेन पञ्चदशप्रकारः, ते च कायादयः समुदायात्मकाः, समुदायश्चासन् सार्थरथचक्रादिवत्, स्वाङ्गसमुदायमात्रत्वान्न सार्थो नाम कश्चित् परमार्थतोऽस्ति, रथो वा पुरुषकूवरादिव्यतिरिक्तः, स चाभावत्वात् सार्थरथादिः कथमुत्पद्येत ? एवं कायादयोऽपि**

---

त्पादध्रौव्ययुग्मस्योत्पादनिरपेक्षस्य विनाशध्रौव्ययुग्मस्य चाभावादित्यर्थः । **असद्विषयत्वम**सदित्याकारकव्यवहारविषयत्वम् । **असद्व्यवहारवन्धिता चेति,** असदित्याकारको यो व्यवहारो विषयतया तेन सह तादात्म्येन यः प्रतिवन्धो व्याप्तिस्तद्वत्त्वमित्यर्थः, तेषां च समुदायप्रविष्टतया वस्त्वंशानामेव तदप्रविष्टभावविवक्षयाऽसत्त्वमसद्व्यवहारविषयत्वासद्व्यवहारप्रतिवन्धित्वादिरूपं, न तु निरुपाख्योऽसदित्यनेनाभिमत इत्याह–**नानुपाख्योऽसच्छब्दवाच्य इति** । अत्र हेतुः–**शब्दव्यवहारायोग्यत्वादिति,** गामानय गा नय गा पश्य गां दोग्धि पय इत्यादिशब्दव्यवहारयोग्य एव गवादिर्गवादिशब्दवाच्यो भवति, शशश्रृङ्गादिस्तु सर्वक्रियाकर्मत्वकर्त्तृत्वादिविकलो न कस्यापि शब्दव्यवहारस्य योग्य इति न तस्य कस्यापि शब्दस्य वाच्यतेत्यसच्छब्दवाच्यताऽपि तस्य कथं स्यादत उत्पादादीनामेवैकैकशोऽसत्त्वमत्र सम्मतं न तु शशश्रृङ्गादेरित्याशयः । इत्थन्तु न व्याख्येयं शशश्रृङ्गकल्पस्येतरनिरपेक्षस्योत्पादादेश्शब्दव्यवहारायोग्यत्वादसच्छब्दवाच्यत्वासम्भवेनासदित्यस्यासच्छब्दवाच्य इति नार्थः किन्तु असदितिप्रतीतिविषयोऽसदितिव्यवहारप्रतिवन्धी वार्थ इति, यतो घट उत्पद्यते घटो विनश्यति मृद्द्रव्यं ध्रुवमित्यादिशब्दव्यवहारस्याबालगोपालं तत्र भावात्, यदि चोत्पद्यत इत्यादिव्यवहारा न ध्रौव्यादिनिरपेक्षोत्पादादिविषयाः किन्तु तत्सापेक्षोत्पादादिविषया एवेति भवति प्रामाणिकानाम्मतिः, तदा तथा व्याख्यानमपि युक्तमेव, इदन्तु तत्र चिन्त्यं यथाऽलीकस्य शब्दव्यवहारायोग्यत्वेन न शब्दवाच्यत्वाभावान्नासच्छब्दवाच्यत्वं तथाऽसदिति विकल्पविषयत्वासदितिव्यवहारप्रतिबन्धित्वे अपि कथं सर्वव्यवहारायोग्यत्वादिति । ननु स्याद्वादो द्रव्यपर्यायनयद्वयावलम्ब्यपि न परस्परसापेक्षोत्पादादित्रयात्मकवस्तुव्यवस्थापनकुशलः, यतो द्रव्यनयस्योत्पादव्ययवियुतं ध्रौव्यमेव स्वतन्त्रं विषयः, पर्यायनयस्यापि ध्रौव्यवियुतौ स्वतन्त्रावुत्पादव्ययावेव विषयाविति नयद्वयावलम्बनेऽपि स्वतन्त्राणामेवोत्पादव्ययध्रौव्याणामवगतिः, तादृशाश्च ते समुदिता अप्यसन्त एव न हि गगनकुसुमवन्ध्यापुत्रकूर्मरोमशशश्रृङ्गादिसमुदायः सन्निति व्यवहारपथमृच्छतीति न स्याद्वादेऽपि वस्तुव्यवस्था सूपपादेति परः प्रश्नयति–**नन्वित्यादिना** । **स्वतन्त्रत्वात्,** अन्योन्यापेक्षारहितत्वात् । **विजिगीषू** परस्परखण्डनपरौ । अत एव **स्वविषयोपमर्दं परस्परं न सहेते,** द्रव्ये कथंचिदर्थघटने पर्यायप्रवेश एवेति द्रव्यनयस्यैकान्तिकद्रव्यरूपविषयस्य बाधरूपः स्वविषयोपमर्दः, एवमुत्पादव्यययोः कथञ्चिदर्थसमन्वये ध्रौव्यप्रवेश एवेति पर्यायनयस्यैकान्तिकपर्यायरूपविषयस्य बाधरूपः स्वविषयोपमर्दः, तं न सहेते, तत्सहने परस्परखण्डनपरत्वलक्षणस्यासाधारणरूपस्य प्रच्युतिरेव स्यादिति । एवञ्च सति यत्प्रश्नयितुरभिप्रेतं तदाह–**ततश्चेति,** परस्परविषयोपमर्दाभावानुरोधेन सम्मिलनदशायामपि पर्यायस्योत्पादव्ययावेव द्रव्यस्य ध्रौव्यमेव विषयभावमाभेजानमिति नैकान्तत्वापगम इति तादृशस्य वस्तुनो वस्तुतो वस्त्वाभासतैव सर्वोपाख्यारहितत्वादिति न वस्तुताव्यवस्थितिरिति । स्वातन्त्र्यं यदि नयस्य स्वरूपं स्यात्तदा स्यादयमुभयनयनयनोन्मीलनेऽपि वस्तुत्वाव्यवस्थानदोषः, तदेव तु नास्तीत्याशयेन समाधत्ते–**उच्यत इति** । **स्वातन्त्र्यम्,** एकान्तिकत्वम् । **अङ्कुशितत्वादिति,** द्रव्यास्तिकेन सर्वथोत्पादस्य सर्वथा व्ययस्य चासम्भवोद्भावनमेव तत्राङ्कुशः । अस्यैव भावनामाह–**न ह्युत्पादो नामेति** । **अभूतभवनात्मकः,** पूर्वं सर्वथाऽसत उत्तरकाले कारणव्यापारे सति भवनलक्षणः । कथं नेदृशस्योत्पादस्य सम्भव इत्यपेक्षायामाह–**स चोत्पादो द्विधा कल्प्येतेति** । **पुरुषकारनिर्वर्त्यः,** पुरुषप्रयत्नसाध्यः । **सोऽपि** पुरुषकारनिर्वर्त्योऽपि । **अनभिसन्धिकृत इति,** अभिसन्धिः प्रकर्षेणेक्षणादिः, इदम्मदिष्टसाधनं मत्कृतिसाध्यमित्यादिज्ञानजन्यचिकीर्षादिरूप इति यावत्, तदन्योऽनभिसन्धिस्तत्कृत इत्यर्थः । **सार्थो** जनसमुदायः । कायादीनामुत्पत्तौ यद्यप्यस्ति प्रयत्नो निमित्तं तथापि तस्य नेष्टसाधनतादिज्ञानजन्यचिकीर्षाप्रभवत्वमिति भवत्यनभिसन्धिकृतत्वमिति । **तत्रापि** पुद्गलस-

पुद्गलसमुदायरूपाः, समूहश्च समूहिमात्रम्, अतस्तत्रापि न कस्यचिदुत्पादः, कायादेः परमार्थतोऽसत्त्वात्; अभिसन्धिपूर्वकस्तूत्पादः कायादियोगात् समग्रवास्यादिकरणापेक्षात् स्तम्भकुम्भादीनां प्रेक्षापूर्वकारिपुरुषक्रियाजन्यत्वात् प्रयोगजः, सोऽप्येवमेव समुदायविषयः, समुदायश्चासत्त्वादेव नोत्पद्यत इत्युत्पादाभाव एव, अन्वयांशनिरपेक्षत्वान्न प्रायोगिक उत्पादः सम्भवतीत्यर्थः । वैस्रसिकोऽपि नास्त्युत्पादः, विस्रसेति स्वभाववचनसंज्ञाशब्दः; स्वाभाविको वैस्रसिकः, तत्र धर्माधर्मव्योमात्मपुद्गलद्रव्याणामिमा वृत्तयो यथाक्रमं स्थितिगत्यवगाहोपयोगस्पर्शशब्दादिलक्षणाः स्वसद्भावाः, नहि तेषां धर्मादीनां गत्यादयो धर्माः पर्याया वा भवन्ति, यदि भवेयुस्ततस्तेषामेतद्विलक्षणमन्यदेव रूपं स्याद् गत्याद्युत्पादसद्भावे, न चान्यद् रूपं लक्ष्यते भुजगप्रसारणाकुण्डलिकतोत्फणविफणादिवत्, फणिनो हि स्वभावभूताकृतकसंस्थानान्तराभिव्यक्तिमात्रत्वात् प्राच्यफणिरूपानन्यत्वात् तद्द्रव्यावस्थानात् कुत उत्पादः ? किं हि तत्रोत्पन्नं विद्यमानं वा नाभिव्यक्तमित्यत उत्पादाभाव एव, इत्येवं धर्मादीनामपि गत्यादीनामुत्पादाभावः स्वरूपावस्थानान्तरमात्रत्वाज्जलतरङ्गतुहिनपटलादिवत्, कुतः स्वाभाविक उत्पादः ? । न चोत्पादस्यान्यः प्रकारो विद्यत इति, तस्मान्नैवास्त्युत्पादः । एवं द्रव्यपर्यायनयद्वयापेक्षमस्तित्वमुत्पादस्य नास्तित्वं च भावितमात्मपुद्गलद्रव्यविषयम् ॥ अथाकाशधर्माधर्मेष्वविक्रियात्मकेषूत्पादस्याभावात् कुतस्तत्रोत्पादानेकान्त इति ? । उच्यते—तेष्वपि स्वाभाविक उत्पादः समुदायजनित एकत्विकश्च

---

मुदायरूपेषु कायादिष्वपि, तत्किमुत्पादस्य सर्वथाभाव एव, न, अन्वयांशनिरपेक्षस्यैकान्तपर्यायनयकल्पितस्योत्पादस्याभावोऽभिप्रेत इत्यावेदनायोक्तम्—**अन्वयांशनिरपेक्षत्वादिति** । प्रायोगिकस्योत्पादस्याभावमुपदर्श्य वैस्रसिकस्य तस्यासम्भवमुपदर्शयति—**वैस्रसिकोऽपीति** । विस्रसाशब्दस्य पारिभाषिकस्यार्थाज्ञाने तन्निष्पन्नस्य वैस्रसिकस्याप्यर्थज्ञानं न सम्भवतीत्यत आह—**विस्रसेतीति** । **स्वभाववचनसंज्ञाशब्दः** स्वभावस्य वचनं प्रतिपादनं यस्मात्स स्वभाववचनः स्वभाववाचीत्यर्थः, संज्ञाशब्दः स्वभावरूपार्थे सङ्केतितो विस्रसाशब्दः । एवं च सति वैस्रसिक इत्यस्य स्वाभाविक इत्यर्थ इत्याह—**स्वाभाविको वैस्रसिक इति** । स्वाभाविको हि स्वस्मादभिन्न एव भवति, धर्मपर्यायौ च धर्मिस्वरूपाद्भिन्नाविति गत्यादीनां धर्मरूपत्वे पर्यायरूपत्वे वा तदुत्पादान्न धर्मादीनामुत्पादो वैश्रसिको व्यवतिष्ठेत, गत्यादीनाञ्चोत्पादाभ्युपगमे तदुत्पत्तेः पूर्वं धर्मादीनां न तत्स्वभावतेत्यन्यादृश एव धर्मादीनां स्वभावो वाच्यः, न च सोऽभ्युपगमार्हो गत्यादिस्वभावात्मनैव तेषामभ्युपगमादित्येव प्रपञ्चयति—**तत्रेत्यादिना** । **स्पर्शशब्दादीत्य**त्रादिपदाद्गन्धरूपरसानामुपग्रहः, स्पर्शादयः पञ्चापि पुद्गलस्य स्वभावलक्षणम् । **स्वसद्भावाः** स्वभावाः । गत्यादीनां धर्मास्तिकायादिस्वभावत्वमेव तद्धर्मरूपत्वं तत्पर्यायरूपत्वं वा कथन्नेत्यपेक्षायामाह—**नहीति**, अस्य **भवन्ती**त्यनेन सम्बन्धः । **यदि भवेयुरिति,** यदि धर्मादीनां गत्यादयो धर्माः पर्याया वा भवेयुरित्यर्थः । **ततः,** तदा । **तेषां** धर्मादीनाम् । **एतद्विलक्षणं** गत्यादिविलक्षणम् । **अन्यदेव** गत्यादिभ्यो भिन्नमेव । अस्तु गत्याद्युत्पादकाले तत्पूर्वकालावस्थितगत्यादिविलक्षणस्वभावो धर्मादीनां किन्नश्छिन्नमित्यत आह—**न चान्यद्रूपमिति** । **लक्ष्यते** प्रमाणेन विषयीक्रियते । उक्तमर्थं दृष्टान्तेन भावयति—**भुजगेति** । एतदेवोपपादयति—**फणिनो हीति** । दृष्टान्ते उपपादितमुत्पादाभावं दार्ष्टान्तिके समर्थयति—**इत्येवमित्यादिना** । ननु मास्तु प्रयोगजो वैस्रसिको वोत्पादः, आभ्यामन्य एवोत्पाद उपपादनार्हो भविष्यतीत्यत आह—**न चोत्पादस्यान्य इति** । एकनयापेक्षयोत्पादस्य न सम्भवो नयद्वयापेक्षया तु तस्य सम्भव इति स्यादस्ति उत्पादः स्यान्नास्ति चोत्पाद इत्येवमुत्पादानेकान्त एवावतिष्ठत इत्याह—**एवमिति** । अयञ्चोत्पादानेकान्त आत्मपुद्गलद्रव्ययोरेव, तयोः प्रयोगजस्य वैस्रसिकस्य चोत्पादस्य सम्भवो विद्यते, यतोऽन्यरूपेण स्थितस्य तदन्यरूपेण परिणमनलक्षणात्मलाभोऽस्तीत्याह—**आत्मपुद्गलद्रव्यविषयमिति** । धर्माधर्माकाशानां सर्वदाऽविचलितस्वरूपावस्थितानामन्यरूपेण पूर्वमवस्थितस्य तदन्यरूपेण परिणमनमेव नास्तीति तेषूत्पाद एवाप्रसिद्ध इति कस्यानेकान्तत्वं स्याद्वादेन व्यवस्थाप्यते इत्याशङ्कते—**अथेति** । धर्मादिषु प्रयोगजस्योत्पादस्यासम्भवेऽपि वैस्रसिकस्योत्पादस्यास्त्येव सम्भवः, तत्र च स्याद्वादो लब्धावकाश एवेत्युत्तरयति—**उच्यते इति** । **तेष्वपि** आकाशधर्माधर्मास्तिकायेष्वपि । **भजनयेति,** कथञ्चिद्भावेनेत्यर्थः । एतदेवोपपादयन्नाह—

द्विप्रकारोऽप्यस्ति भजनया, यथैव ह्यात्मन्यौपशमिकादीनां भावानामात्मन एव तेन तेनाकारेण वृत्तिरुत्पादः, स्पर्शादीनामणुषु, स्पर्शशब्दादीनां च स्कन्धेषु स्वाभाविक उत्पादस्तथा व्योमादिष्ववगाहगतिस्थितयो व्योमादिस्वभावास्तेषां परिणामाः, त एव ह्याकाशादयोऽवगाहाद्याकारेणोत्पन्नाः, तस्य चावगाहादेरुत्पादस्य प्रदेशरूपता यथाऽऽत्मनोऽसङ्ख्याताः प्रदेशास्तत्समुदायश्चात्मा भवति, आकाशस्य चाकाशत्वं स्वाभाविकमकृत्रिममेव, यस्तस्यावगाहोत्पादोऽसावप्यकृत्रिमत्वात् स्वाभाविक एव, यस्मादाकाशं शुषिरमवकाशदातृत्वस्वभावम्, तथा धर्माधर्मौ गतिस्थित्यनुग्रहहेतुस्वभावौ, आत्माऽपि ज्ञानात्मकत्वादुपयोगस्वभावः, पुद्गलाश्च मूर्तित्वात् स्पर्शादिस्वभावाः । एवमवगाहादेरुत्पादस्य स्यात् स्वाभाविकत्वम्; तथा स्यादस्वाभाविकत्वं समुदायकार्यत्वात्, यथा पटो भूयसां तन्तूनां समुदायेन जन्यते, अवगाहादेरपि यथोक्त उत्पादः समुदायजन्यत्वादस्वाभाविकः, यस्मादवगाहोऽवगाह्यावगाहकद्वयसमुदायात्मकः, गतिरपि गन्तृधर्मद्रव्यद्वयसमुदायात्मिका, स्थितिरपि स्थातृधर्मद्रव्यद्वयसमुदायस्वभावा, उपयोगो विज्ञातृज्ञेयसमुदायात्मकः, स्पर्शादयोऽपि स्पर्शनादिस्पृश्यादिसमुदायात्मकाः, तस्मात् समुदायात्मकत्वात् स्यादस्वाभाविकः समुदायनिरपेक्षाणामेषामवगाहादीनामभावाद्, एवं स्यात् समुदायकृतः; स्यादेकत्विकः, कथम्? उत्पादो ह्यवगाहस्याकाशेऽवगाहकानुप्रवेशे व्यक्तिः, सा च व्यक्तिर्व्योमन्येव नान्यत्रापि, तस्य तु व्यञ्जकमेवावगाहकं नोत्पादकम्, व्यञ्जकं चाकाशादन्यदेव भवति व्यङ्ग्याद् घटादेरिव प्रदीपादि, ततश्चावगाहस्यैकत्विक उत्पादः; स्यादनैकत्विकः प्राक् प्रतिपादितवत्; ततश्च

---

**यथैव हीति । स्पर्शादीनामिति,** अणुषु स्पर्शादीना स्वाभाविक उत्पाद इत्यन्वय', आदिपदाद्रूपरसगन्धानामुपग्रहः । अण्वपेक्षया स्कन्धेषु विशेषमाह–**स्पर्शशब्दादीनामिति । व्योमादिष्विति,** आदिपदाद्धर्माधर्मयोर्ग्रहणम् । **तेषां** व्योमादीनाम् । कथमवगाहादीनामाकाशादिपरिणामत्वमित्यपेक्षायामाह–**त एवेति,** अन्यावगाहादिरूपेण व्यवस्थिता एवेत्यर्थः । **अवगाहाद्याकारेणोत्पन्ना इति,** पूर्वावगाहकादिव्यतिरिक्तावगाहकाद्यावगाहाद्याकारेणोत्पन्ना इत्यर्थ. । **प्रदेशरूपतेति,** आकाशादिप्रदेशरूपतेत्यर्थ. । अतस्तत्समुदायरूपता चाकाशादीनामिति अत्रैव निदर्शनमाह–**यथात्मन इति ।** आकाशस्यावगाहोत्पादे स्वाभाविकत्वं युक्त्या व्यवस्थापयति–**आकाशस्य चेति ।** आकाशस्य स्वाभाविकरूपमुपदर्श्य धर्माधर्मयोस्तदाह–**धर्माधर्माविति ।** आत्मपुद्गलयो. क्रमेण स्वभावावुपदर्शयति–**आत्मापीति ।** आकाशादीनामवगाहादिलक्षणोत्पादस्य स्वाभाविकत्वे कथञ्चिदर्थसङ्घटनामुपदर्शयति–**एवमवगाहादेरुत्पादस्येति ।** अवगाहाद्युत्पादस्य समुदायकार्यत्वेनास्वाभाविकत्वं दृष्टान्तबलतो व्यवस्थापयति–**यथा पटो भूयसां तन्तूनामिति ।** अवगाहादीनां समुदायकार्यत्वमुपपादयति–**यस्मादवगाहविति,** अवगाह्य आकाश. अवगाहकौ जीवपुद्गलौ, गन्तारौ जीवपुद्गलौ, तावेव स्थातारौ । उपयोगस्पर्शादीनामपि समुदायात्मकत्वात्कथञ्चिदस्वाभाविकत्वं प्रपञ्चयति–**उपयोगविति,** उपयोगस्य स्वपरावभासित्वेन घटमहं जानामीत्येवंरूपतया विज्ञातृज्ञेयाभ्यां सह संसर्गित्वेन संसर्गमात्रव्यापककथंचित्तादात्म्यस्यावश्यंस्वीकर्तव्यत्वेन विज्ञातृज्ञेयसमुदायात्मकत्वमित्यभिसन्धिः । **स्पर्शादयोऽपीति,** प्रमेयसत्तायाः प्रमाणाधीनत्वेनाधेयस्य चाधारसापेक्षत्वेन स्पर्शनादीन्द्रियमन्तरेण स्पृश्याद्याधारमन्तरेण न स्पर्शादिव्यवस्थितिरित्यतः स्पर्शादे. स्पर्शनादिसम्बन्धित्वेन कथञ्चित्तादात्मभावेन स्पर्शनादिस्पृश्यादिसमुदायात्मकत्वमिति । उपयोगस्पर्शादीनामुत्पादस्यास्वाभाविकत्वमुपसंहरति–**तस्मादिति ।** एतावता स्यात्समुदायकृतत्वमप्यवगाहादीनामित्याह–**समुदायनिरपेक्षेति ।** अवगाहाद्युत्पादस्यैकत्विकत्वमपि कथञ्चिदर्थानुप्रवेशेनेत्याह–**स्यादेकत्विक इति ।** अवगाह्यावगाहकाभ्यामवगाहस्यात्मलाभ एकमात्रनिबन्धनत्वाभावादेकत्विकत्वमेव दुरुपपादं स्यादर्थघटना तु तत्र दूरोत्सारितैवेत्याशयेन पृच्छति–**कथमिति ।** अवगाहस्योत्पत्तिरभिव्यक्तिरेव, साचावगाहस्याकाशगुणत्वादाकाशगतैव, तज्जनकत्वादवगाहकमवगाहस्य व्यञ्जकमेव नोत्पादकम्, इत्थञ्चाभिव्यक्तेराकाशव्यतिरिक्तावगाहकमात्रनिमित्तकत्वादेकत्विकत्वमित्याशयेनोत्तरयति–**उच्यत इति । नान्यत्रापि,** नावगाहकादौ, अवगाहस्य तद्धर्मत्वात् । **प्राक् प्रतिपादितवदिति,** यथाऽवगाहस्य समुदायकार्यत्वादस्वाभाविकत्वं तथा तत एवानैकत्विकत्वमपीत्यर्थः । एवं सति यन्निष्पन्न तदाह–**ततश्चेति,**

नभोऽवगाहोऽप्यनित्य एव गुणत्वात् पत्रनीलतावत्, नभसोऽवगाहत्वलक्षणमुपकारः, स चावगाढार-मन्तरेण जीवं पुद्गलं वा नाभिव्यज्यत इति अवगाढजीवादिसंयोगमात्रमवगाह इति सिद्धम्, संयोगश्चोत्पादी संयुज्यमानवस्तुजन्यत्वात् द्व्यङ्गुलसंयोगवत्, यथा चावगाह आकाशस्यैवं गतिस्थित्युपयोग-रूपादयो गतिमदादिद्रव्यसंयोगमात्रत्वादुत्पादादिस्वभावा इति सर्वेऽप्युत्पादविगमध्रुवस्वभावा इत्यर्थः । न च पर्यायादात्मीयात् किञ्चिद् द्रव्यमेकान्तभिन्नमुपलभ्यते, यत् सम्भाव्येत तस्मिन् पर्याये परस्वभावभूते विनष्टेऽप्यविनष्टमेकान्ताविष्कृतं नित्यमिति, यस्माच्च पर्यायादनन्यद् द्रव्यं तस्मात् तत्पर्यायनाशे तेना-त्मना तद् द्रव्यं नश्येत् नान्यपर्यायात्मना, अनेकपर्यायानन्यरूपत्वादनेकात्मकत्वादेकेनात्मना नश्य-त्यन्येनात्मनोत्पद्यतेऽन्येन चात्मना ध्रुवमङ्गुलिकत्ववक्रत्वर्जुत्ववद् बहुत्वाच्चात्मनामेकवस्तुविषयाणा-मेकस्य वस्तुनः, तस्मात् कथमिवैकान्तेनाकाशादयो नित्याः प्रतिपत्तुं शक्याः ? स्याद्वादस्य देशवर्तित्व-प्रसङ्गात्, आकाशादिष्वौपचारिकावुत्पादविनाशौ स्यातामिति चेत्, तदयुक्तम्, उपचारो ह्यलीकत्वम्,

---

अवगाहोत्पादस्यैकत्विकत्वादनेकत्विकत्वाच्चेत्यर्थः । प्रामाणिकस्य प्रमाणं विना न परितोष इत्यतोऽवगाहस्यानित्यत्वेऽनुमानं मानमुपन्यस्यति–**नभोऽवगाहोऽपीति** । अवगाहस्य गुणत्वेनानित्यत्वमुपपाद्य संयोगस्वरूपत्वेनानित्यत्वमुपपादयन्नाह–**नभसोऽवगाहत्वलक्षणमुपकार इति** । संयोगरूपत्वेनावगाहस्यानित्यत्वेऽपि कथमुत्पाद इत्यपेक्षायामाह–**संयोगश्चोत्पादीति** । अवगाहवद्गत्यादीनामपि संयोगरूपत्वेनोत्पादस्वभावत्वम्, न च स्थितिविगमावन्तरेण केवलमुत्पाद इति उत्पादविगमस्थितिस्वभावता सर्वेषामित्याह–**यथा चेति** । नन्ववगाहगतिस्थित्युपयोगरूपादीनां पर्यायाणामाकाशधर्माधर्मजी-वपुद्गलात्मकद्रव्यभिन्नत्वात्तेषामुत्पत्तिविपत्त्योरपि न द्रव्यस्योत्पत्तिविपत्ती, ततश्च द्रव्यं नित्यमेवेति नोक्तत्रिलक्षणरूपता तस्येत्यत आह–**न चेति, अस्य उपलभ्यत** इत्यनेन सम्बन्धः । द्रव्यान्तरपर्यायस्य द्रव्यान्तराद्भिन्नत्वेऽपि स्वपर्यायस्य न स्वस्माद्भि-न्नत्वम् अन्यथा तस्यायं पर्याय इति भेदेऽपि भावे स्वपर्यायवत्परद्रव्यपर्यायस्यापि भेदाविशेषादविशेषेण सर्वपर्यायस्य सर्व-द्रव्यपर्यायत्वं स्यादतः स्वपर्यायाद्द्रव्यस्याभिन्नत्वमास्थेयमित्याशयः, यदि पर्यायाद्द्रव्यस्य भिन्नत्वमेव भवेत्तदा प्रकृते काऽनु-पपत्तिरित्यपेक्षायामाह–**यत्सम्भाव्येतेति** । ननु भवत्वात्मीयात्पर्यायाद्द्रव्यस्याभिन्नत्वं ततः किमभीष्टं सिद्ध्यति भवत इत्य-पेक्षायामाह–**यस्माच्चेति** । नन्वेवं यस्मिन्कस्मिँश्चिदपि स्वपर्याये विनष्टे तद्द्रव्यस्यापि विनष्टत्वादनुगामित्वमपि द्रव्यस्य न स्यादित्यत आह–**तस्मादिति** । यतश्च तत्तत्पर्यायात्मनैव नाशो नान्यपर्यायात्मना, तत एव त्रिलक्षणत्वं द्रव्यस्योत्पद्यतेतरामि-त्याह–**अनेकपर्यायेति**, अनेकपर्यायानन्यरूपत्वमनेकात्मकत्वे हेतुः, तच्च एकपर्यायात्मना नाशे तदन्यपर्यायात्मनोत्पत्तौ सहभाविपर्यायात्मना ध्रौव्ये च हेतुः । एतदुपपत्तये निदर्शनम्–**अङ्गुलित्ववक्रत्वर्जुत्ववदिति**, भावना च–एकमेवाङ्गुलि-द्रव्यमृजुतामवलम्बमानं वक्रत्वेन विनष्टमृजुत्वेनोत्पन्नमङ्गुलित्वेन स्थितं तद्वदेकमेवाकाशद्रव्यमवगाढपुरुषविशेषाद्यवगाहन-दशायां तदवगाहात्मनोत्पन्नं तदनवगाह्यभावेन विनष्टं सर्वकालावस्थितावगाह्यसामान्यस्वभावात्मना ध्रुवमेवं धर्मादीनामपीति । यतः पर्यायाणां वस्त्वात्मभूतानां नानात्वमतस्तदात्मकस्यैकस्य वस्तुनोऽपि नानात्वं तत एव चाकाशादेरपि प्रत्येकमनेकात्मत्वत उत्पादव्ययध्रौव्यात्मकत्वमिति तल्लक्षणस्य सत्त्वस्य वस्तुमात्रगतत्वमेव न तु यत्किञ्चिदेकवस्तुमात्रनियतत्वेनाव्यापित्वमित्याह–**बहुत्वाच्चेति, वस्तुन** इत्यनन्तरं **बहुत्वमिति** दृश्यम्, ततश्चैकवस्तुविषयाणामात्मनां बहुत्वाच्चैकस्य वस्तुनो बहुत्वमि-त्यन्वयः कार्यः, एकस्य वस्तुनो बहुत्वादेव चोत्पादव्ययध्रौव्यात्मकत्वमर्थत एव लब्धमिति बोध्यम् । अथवा **वस्तुन** इत्य-नन्तरं **बहुत्वमिति** पूर्त्तिर्न कार्या **बहुत्वाच्चे**त्यारभ्य **शक्या** इत्येतत्पर्यन्तमेकमेव वाक्यम् । **तस्मादि**त्यस्य बहुत्वादित्ये-वार्थः । **एकान्तेने**त्युक्त्या कथञ्चिदर्थसमन्वयेन नित्यत्वमाकाशादीनामनुमतमेवेति सूचितम् । कथमेकान्तेन नित्यत्वमाकाशा-दीनां स्याद्वादिनो नानुमतमित्यपेक्षायामाह–**स्याद्वादस्येति । देशवर्त्तित्वप्रसङ्गादिति**, धर्माधर्माकाशानां सर्वथा नित्यत्वे जीवपुद्गलादिपञ्चप्रभेदस्य द्रव्यस्य देशौ जीवपुद्गलौ तयोरेवोत्पादव्ययध्रौव्यात्मकत्वे तत्र कथमेकस्यानेकात्मकत्वं विरो-धादतो विरोधभञ्जनाय स्याद्वादस्य स्याद्वादार्थसापेक्षाभेदस्वरूपस्य तद्वृत्तित्वमेव स्यादित्यर्थः । ननु परमार्थतो ध्रौव्यमेवाकाशा-दीनामुपचारतस्तूत्पादव्ययावपीति कृत्वा तन्त्रितयस्यापि प्राप्तौ स्याद्वादस्यैवमपि तद्वृत्तित्वं स्यादेवेति स्याद्वादस्य सकलवस्तु-व्यापकत्वं व्योमादीनामेकान्तनित्यत्वेऽपि युज्यत एवेत्याशङ्कते–**आकाशादीति** । वस्तुभूतोत्पादव्ययशून्यस्य ध्रौव्यस्य

एवं सति ध्रौव्यमेवाकाशादिष्ववशिष्यते, न च ध्रौव्यं परमार्थरूपोत्पादविनाशशून्यम्, अपि च–आकाशादिध्रौव्यं पारमार्थिकानुपचरितोत्पादविनाशसम्बन्धि ध्रुवत्वात् पुद्गलजीवध्रुवत्ववत् । अथ व्यवहार उपचारः; तथापि स व्यवहार आगमपूर्वको वा स्याल्लोकप्रसिद्धिपूर्वको वा ?, तद् यदि तावदागमपूर्वकस्ततो भगवताऽऽख्यातं जगत्स्वरूपं प्रश्नत्रितयेनोत्पादादिना, न च क्वचिदुपचारेण क्वचित् परमार्थत इत्यनागममाकाशादौ ध्रौव्यमेवेति; लोकप्रसिद्ध्यङ्गीकरणे धर्मादिद्रव्याप्रसिद्धिरेव कुतस्तदाश्रयावुत्पादविनाशाविति दूरापास्तं धर्मादिद्रव्यध्रौव्यम् । एवमुत्पादव्ययध्रौव्ययुक्तं सत्सर्वमिति व्यवस्थितं लक्षणम् ॥

एवमुत्पादमभिधाय सप्रपञ्चमधुना विनाशविचारः क्रियते । विनाशोऽपि द्विविधः–समुदायविभागमात्रमर्थान्तरभावगमनं च, तत्र समुदायविभागलक्षणो द्विधा–स्वाभाविकः प्रायोगिकश्च, स्वाभाविको जीवव्यापारनिरपेक्षः, प्रायोगिकस्त्वात्मव्यापारादुपजातः । तत्र स्वाभाविको धर्माधर्माकाशजीवपुद्गलद्रव्याणां द्रव्यात्मनाऽवस्थितानामेव, यथा–गतेरधोगतिपरिणामविशेषनाशादूर्ध्वगतिपरिणामेनोत्पादः; तथा क्वचिद् देशेऽवस्थितस्य तद्देशावस्थानविनाशेऽन्यदेशावस्थानोत्पादः; खस्यापि

नास्त्येव सम्भव इति औपचारिकोत्पादव्ययाभ्युपगमे आकाशादौ ध्रौव्येऽपि जलाञ्जलिरेव वितीर्णा स्यात्तथा च शशश्रृङ्गकल्पतैव तेषां स्यादित्याशयेन समाधत्ते–**तदयुक्तमिति** । **एवं सति** उत्पादव्यययोराकाशादावलीकत्वे सति । ननु पुद्गलजीवध्रुवत्वस्योत्पादव्ययसाहचर्येऽनुभवप्रमाणसद्भावेन वास्तविकोत्पादव्ययसाहचर्यसम्भवेऽपि आकाशादिध्रौव्ये तत्साहचर्यसाधकप्रमाणाभावात् कथं तस्य तत्त्वं श्रद्धेयमित्यगत्या स्याद्वादस्य तदव्यापित्वमेवास्थेयमित्यत आह–**अपि चेति,** तथा च तत्राप्यनुमानं प्रमाणमस्त्येवेति भावः । ननूपचारस्य नालीकत्वमर्थः, किन्तु व्यवहार एव, तत्र नोक्तदोषावसर इत्यत आह–**अथ व्यवहार उपचार इति** । **प्रश्नत्रितयेनेति,** 'उप्पेइ वा विगमेइ वा धुवेइ वा' इति प्रश्नत्रितयेनेत्यर्थः । तत्र यादृश उत्पादस्तादृश एव विनाशस्तादृशमेव च ध्रौव्यं महावीरागमबोधितमिति पारमार्थिकध्रौव्यस्य पारमार्थिकोत्पादव्ययसमन्वितत्वमेवेति केवलध्रौव्यस्याकाशादिगतस्यानागमिकत्वेनासम्भव एवेति लोकप्रसिद्धिपूर्वकव्यवहाररूपोपचारपक्षमपाकर्तुमाह–**लोकप्रसिद्ध्यङ्गीकरण इति,** नहि धर्मादिद्रव्याणा लोकसिद्धत्वं प्रत्यक्षप्रमाणसिद्धस्य तत्पूर्वकानुमानादिसिद्धस्य वा लोकसिद्धत्वेन धर्मादीनामस्मदादिप्रत्यक्षाविषयत्वेन तदसम्भवात्, तथा च धर्मादीना लोकसिद्धत्वाभावे तदाश्रितोत्पादव्यययोर्लोकप्रसिद्धिपूर्वकव्यवहारविषयत्वस्य दूरापास्तत्वेन तदविनाभाविध्रौव्यमपि दूरापास्तमेवेति भावः ॥ धर्मादीनामपि उत्पादव्यवस्थितौ तदविनाभूतव्ययध्रौव्यव्यवस्थित्या सर्वस्य वस्तुनस्त्रैलक्षण्यमुपपन्नमित्युपसंहरति–**एवमिति** । विनाशविचारमवतारयितुमाह–**एवमुत्पादमभिधायेति** । स्वाभाविकस्य समुदायविभागलक्षणस्य विनाशस्य क्रमेण धर्मादिषु सङ्घटनामुपदर्शयति–**यथा गतेरिति** । एतेनाधोगतिपरिणामविशेषनाशो धर्मास्तिकायस्य तादृशविशेषपरिणामात्मना नाशः, स च पूर्वमधोदेशावच्छिन्नगमनकर्तृजीवपुद्गलस्योर्ध्वदेशगमने सति भवति, एवञ्चाधोदेशे यद्गन्तृजीवपुद्गलधर्मसमुदायः पूर्वमभवत् तस्य विभाग एव जात इति कृत्वा स विनाशस्समुदायविभागलक्षणोऽभिधीयते, तस्य च नैकान्तिकविनाशरूपत्वं तस्य तुच्छरूपत्वेन शशश्रृङ्गकल्पतैव स्यादत ऊर्ध्वगतिपरिणामेनोत्पाद एव धर्मास्तिकायस्याधोगतिपरिणामविशेषात्मना नाश इत्युत्पादाविनाभूतत्वं विनाशस्येत्यावेदयितुमुकाम्–**गतेरधोगतिपरिणामविशेषनाशादूर्ध्वगतिपरिणामेनोत्पाद इति,** गत्युपग्राहकस्य धर्मस्य गत्यभिन्नत्वमवलम्ब्येयमुक्तिः, अन्यथा गतेरेवोत्पादविनाशावावेदितौ स्याता न धर्मास्तिकस्येति । ऊर्ध्वाधोगत्योः परिणामत्वोक्त्या तदनुगामिनो द्रव्यस्य परिणामित्वमावेदितम्भवतीति द्रव्यात्मनावस्थितत्वमप्यार्थात्प्राप्तमेवेति ध्रौव्याविनाभूतत्वमपि विनाशस्य सूचितम् । विनाशोत्पादयोस्समकालत्वेऽपि व्यावहारिकं प्रयोजकभावमाश्रित्य पञ्चमी विभक्तिः, दृष्टश्च समकालयोरपि कारणाभावकार्याभावयोः प्रयोज्यप्रयोजकभावं परिकल्प्य कारणाभावात् कार्याभाव इति व्यवहारः । एवं विनाशस्योत्पादाभिन्नत्वेऽपि कथञ्चिद्भेदविवक्षया तथोक्तिः, यथा घटज्ञानाद्घटसिद्धिरित्यादीति, एवमग्रेऽपि बोध्यम् । अधर्मास्तिकाये विनाशसङ्घटनामावेदयति–**तथा क्वचिद्देशेऽवस्थितस्येति,** भावना पूर्वदिशा बोध्या । आकाशे विनाशस्योत्पादाविनाभावं प्रकटयति–**खस्या-**

कस्मिंश्चिद् देशेऽवगाहस्य तद्देशावगाहविनाशे देशान्तरावगाहोत्पादः; तथाऽऽत्मनः कैनचिदुपयोगेनोपयुक्तस्य तदुपयोगविनाशादुपयोगान्तरेणोत्पादः; पुद्गलद्रव्यस्यापि वर्णान्तरेण प्राक् परिणतस्यापि तद्विनाशे वर्णान्तरेणोत्पादः; स चैषां पूर्वावस्थाविनाशः समवस्थानान्तरस्योत्पादसंज्ञकस्याभिव्यक्तिकारणम्, समवस्थानान्तरमेव हि तिरोभूतं विनाश उच्यते, नहि तत्र किञ्चिद् विद्यमानमभावीभूतमतो द्रव्यात्मस्थितितायामेवोत्पतनव्यक्त्यर्थं सर्पनिपतनविनाशवद्, उत्पतनव्यक्तये सर्पस्य निपतनमेव विनाशः, तस्माद् द्रव्यस्वतत्त्वोत्पादाविनाभूत एव विगमः, नार्थान्तरम्, यथा पटे तन्तूनां विभागेन पटकार्योत्पत्तावविनष्टं तन्तुद्रव्यं, तदेव प्रत्यक्षीक्रियते यत् तेन पृथक् तन्तुभावेन प्राग् नासीत्, एवं समुदायविभागमात्रं विनाशः । तथाऽर्थान्तरभावगमनमन्यो विनाशः, यदा मनुष्यजन्मन्यात्मपुद्गलसमुदायो विनश्यति तदाऽर्थान्तरभूतेन देवत्वादिना वर्तते नात्यन्ताभावतया, यथाऽर्हद्दत्तस्य स्थातृक्रियाविशिष्टस्य तत्क्रियाविनाशे गन्तृतयोत्पादोऽर्थान्तरगमनं विनाशः, यथा वा घटोपयुक्तस्यात्मन-

---

पीति । आत्मनस्तमावेदयति—**तथात्मन इति** । पुद्गले तं सङ्घटयति—**पुद्गलद्रव्यस्यापीति** । उत्पादविनाशयोरभेदेऽप्युत्पादाभिव्यक्त्योत्पादस्याभेदमुपचर्य तत्कारणस्य विनाशस्योत्पादकारणत्वमुपचर्य पञ्चमीप्रयोग उपपद्यते इत्यभिप्रायेण पञ्चमीप्रयोगसमर्थनायाह—**स चैषामिति**, स च स्वाभाविकः समुदायविभागलक्षणो विनाशश्च । **एषां** धर्मादिद्रव्याणाम् । **पूर्वावस्थाविनाशः**, अधोगतिपरिणामविशेषादिनाशः । **समवस्थानान्तरस्य** ऊर्ध्वगतिपरिणामादेः । **अभिव्यक्तिकारणं** प्राकट्यप्रयोजकम् । तत्किमुत्तरावस्थाविर्भावसमये पूर्वपरिणामावस्था नास्त्येव ? नेत्याह—**समवस्थानान्तरमेव हीति**, पूर्वपरिणामाख्यावस्थान्तरमेव यत उत्तरपरिणामाविर्भावसमये तिरोभूतं विनाश इति गीयते । एवञ्च स्वमेवाविर्भूतावस्थं स्वस्योत्पादः स्वमेव तिरोभूतावस्थं स्वस्य विनाश इति कृत्वैकस्यैवाविर्भावतिरोभावरूपापेक्षानिमित्तभेदेनोत्पादविनाशरूपत्वं सुदृढनिरूढम् । तत्र च यदैवोत्तरस्योत्पादाभिव्यक्तिस्तदैव पूर्वावस्थायास्तिरोभाव इति समसमयत्वात्कथं कार्यकारणभाव इति न चोदनीयम्, पूर्वोत्तरपर्यायानुगतस्य द्रव्यस्यैव परिणामित्वेन कारणत्वम्, तदभेदाच्च विनाशस्यापि कारणत्वमेवमुत्तरपर्यायोत्पादोऽपि पूर्वपर्यायविनाशे निमित्ततामनुभवति । अत एव द्विविधोऽप्यनुभवो व्यवहारवीथीमवतरति, उत्तरोत्तरपर्यायात्पूर्वपूर्वपर्यायनाश इति पूर्वपूर्वपर्यायनाशे सति उत्तरोत्तरपर्यायोत्पाद इति च । पूर्वपरिणामस्य तिरोभूतावस्थोत्तरपर्यायरूपैव, अवस्थाम्प्रति अवस्थातुः कारणत्वेनोत्तरपर्यायम्प्रति पूर्वपर्यायस्य कारणत्वम्, अभिव्यक्तेरप्यभिव्यक्तिमतोऽभिन्नत्वेन ताम्प्रत्यपि कारणत्वम्, सर्वथा कार्यकालेऽसतो न कारणत्वमिति द्रव्यरूपेण पूर्वपरिणामस्योत्तरपरिणामकाले सत्त्वमभ्युपेयम्, सर्वथाऽसतः शशशृङ्गादेरिवोत्पादासम्भवादुत्तरपर्यायस्यापि द्रव्यरूपेण पूर्वपर्यायकाले सत्त्वमिति पूर्वोत्तरपर्याययोः कार्यकारणभावानुरोधेनापि द्रव्यरूपेणावस्थितिरावश्यकीति ध्रौव्यमुत्पादव्ययानुगतं समस्त्येवेति तदेतत्सर्वमभिप्रेत्याह—**नहीति** । **तत्र**, विनाशसमये । **किञ्चित्**पूर्वपरिणामादिकम् । **विद्यमानं** पूर्वसमये विद्यमानमपि । **अभावीभूतं** तुच्छरूपं सम्पन्नम्, तथा सति तस्य तम्प्रति कारणत्वमेव न निर्वहेदित्यभिसन्धिः । उपसंहरति—**अत इति** । **द्रव्यात्मस्थिततायामेव** द्रव्यरूपेणावस्थितौ सत्यामेव । **उत्पतनव्यक्त्यर्थं सर्पनिपतनविनाशवदिति** । एतदेव स्पष्टयति—**उत्पतनव्यक्तय इति**, निपत्योत्पतति सर्प इत्येवं सर्पस्य स्वभावो लोकप्रसिद्ध इति दृष्टान्तस्य नासिद्धता । प्रकृते समुदायविभागलक्षणं विनाशं निगमयति—**तस्मादिति** । **यथेति**, अत्रोदाहरणे शततन्तुकपटात्त्रिचतुरादितन्तुविश्लेषे सति खण्डपटरूपकार्योत्पादो महापटनाशाज्जायत इति स खण्डपटोत्पादो महापटनाशस्तथा पृथग्भूतास्तन्तवोऽपि महापटनाशः, तत्र पृथग्भूतास्तन्तव एवापृथग्भूततन्तुरूपपूर्वपरिणामविनाशात्तथोत्पन्ना अपि तन्त्वात्मनावस्थिता एवेति । प्रायोगिकस्तु समुदायविभागलक्षणविनाशः पुद्गलद्रव्ये सम्भवन्नपि धर्मादिद्रव्ये न सम्भवतीति तमिदानीमनिरूप्यैवार्थान्तरभावगमनलक्षणं विनाशं निरूपयितुमाह—**तथाऽर्थान्तरभावगमनमन्यो विनाश इति** । **अन्यः** समुदायविभागलक्षणविनाशाद्भिन्नः । उक्तविनाशस्थलमुदाहरति—**यदेति** । मनुष्यादेर्न केवलात्मरूपत्वं नापि केवलपुद्गलरूपत्वं किन्त्वन्योन्यानुविद्धतदुभयरूपत्वमित्यनुसन्धायोक्तम्—**आत्मपुद्गलसमुदाय इति** । **नात्यन्ताभावरूपतया** न भावातिरिक्ततुच्छाभावस्वरूपतया, तेनातिरिक्तध्वंसाभ्युपगमवादिनोऽपि ध्वंसस्यात्यन्ताभावरूपत्वानभ्युपगमेऽपि नासङ्गतिः । **अर्हद्दत्तस्येति**, अर्हद्दत्ताभिधानस्य कस्यचित्पुंस इत्यर्थः । समुदायात्मनोऽर्थान्तरभावगमनलक्षणं विनाशमुदाहृत्य जीवादीनां प्रत्येकं तमुदाहरति—**यथा वेत्यादिना** । **घटोपयुक्तस्या-**

तदुपयोगविनाशे पटोपयोगोऽर्थान्तरभावगमनम्, अण्वादेश्च शुक्लवर्णविनाशे कृष्णतयोत्पादो विनाशः, तथाऽऽकाशादीनां पूर्वावगाहगतिस्थितिविनाशेऽवगाहान्तराद्यर्थान्तरभावलक्षणो विनाशः, अत एव भावान्तरोत्पत्तितो न विगमो विगम एवैकान्तेन, नाप्युत्पाद एवोत्पादः । इत्थमुत्पादविगमौ तत्त्वेनानेकान्तात्मकेन निरूपितावन्वयांशापेक्षावेवात्मलाभं प्रतिपद्येते प्रायोगिकस्वाभाविकौ नान्यथा, इत्येवमुक्ते कश्चिन्मृषाभिमानी महामोहनिबिडवृद्धबुद्धविप्रलब्धबुद्धिराचक्षीत–अस्तु स्वाभाविक एव विनाशो निर्हेतुकः, प्रायोगिकस्तु नोपपद्यते विनाशहेत्वयोगात्, विनश्यतां हि घटादीनां विनाशस्य हेतुर्न युज्यते, यस्मात् स्वरूपत एव भावा नश्वराः स्वहेतुभ्यो यथास्वमुपजायमाना भङ्गुरप्रकृतय उपजनक्षणानन्तरकालानवस्थानास्त एव जायन्ते, नैषां स्वकारणसामग्रीतः प्रतिलब्धात्मनां सतां प्रकृतिभङ्गुरभावमपहायान्यस्मान्मुद्गरादेः कारणविशेषान्नाशस्य वस्तुन इवोत्पत्तिः, न चेदं स्वप्रक्रियाप्रकाशमात्रम्, किं तर्हि ? उपपत्त्या निभाल्यते–विनाशहेतुत्वेनाभिमतस्य नाशकारणं प्रति मुद्गरादेरसामर्थ्यम्, कथं पुनरसामर्थ्यमिति ?, उच्यते, विनाशकरणे हि विनाशस्य त्रयी गतिः–विनश्यमानभावस्वभावं वा कुर्यादथवा स्वभावान्तरमभावं वा, तत्राव्यतिरेकपक्षस्तावदतिस्थूल एव, नहि विनाशहेतुर्मुद्गरादिः घटादिकं भावस्वभावमेव करोति, स्वकारणेभ्य एव कुलालादिभ्यस्तस्य प्रथममेव निर्वृत्तत्वात्, निष्पन्नस्य चाकिञ्चित्कार्यत्वात्, नापि स्वभावान्तरे कर्तव्ये तदवस्थस्य घटादेरविचलस्य विनशितुर्विकारोऽपि सम्भाव्यते, कुत एव तत्स्वभावप्रच्युतिः ?, तदवस्थश्च घटः पूर्ववदुपलभ्येत, अर्थक्रियां जलहरणादिकां कुर्वीत ॥ ननु चानित्याद् घटादेरर्थान्तरं कपालाद्येव विनाशस्तेन च विनाशहेतुनिष्पादितेन भावस्या-

---

त्मन इत्यादिना जीवस्यार्थान्तरभावगमनलक्षणं विनाशं स्पष्टीकृतवान् । **तदुपयोगेति,** घटोपयोगेत्यर्थः । **अण्वादेश्चे-त्यादिना** पुद्गलस्य तथाभूतं विनाशमाह । व्योमादीनां तमुदाहरति–**तथाऽऽकाशादीनामिति । पूर्वावगाहेति,** पूर्वावगाहविनाशेऽवगाहान्तरतयोत्पाद आकाशस्य विनाशः, पूर्वगतिविनाशे गत्यन्तरतयोत्पादो धर्मस्य विनाशः । पूर्वस्थितिविनाशे स्थित्यन्तरतयोत्पादोऽधर्मस्य विनाशः, सोऽयमर्थान्तरभावगमनलक्षणो विनाशः । **अत एवेति,** अत एवोत्पादविनाशयोरन्योन्यस्वरूपत्वं तत एवेत्यर्थः । **न विगमो विगम एवैकान्तेनेति,** विगम एकान्तेन न विगमरूप एव किन्तूत्पादरूपोऽपीत्यर्थः । **नाप्युत्पाद एवोत्पाद इति,** उत्पाद एकान्तेनोत्पाद एव न किन्तु विनाशरूपोऽपीत्यर्थः । अत्र प्रायोगिकविनाशसमर्थनाय प्रायोगिकविनाशापलापिनं बौद्धं पराभवितुं तत्पूर्वपक्षावकाशदानाय भूमिकामाह–**इत्थमुत्पादविगमाविति, अन्वयांशापेक्षौ** ध्रौव्यसमन्वितौ । विनाशस्य स्वाभाविकत्वं निर्हेतुकत्वतस्सिध्यतीत्यभिसधानेन **निर्हेतुक** इत्युपात्तम् । **प्रायोगिकस्त्विति,** पुरुषव्यापारजन्यो विनाशः पुनरित्यर्थः । **विनाशहेत्वयोगादिति** यदुक्तं तस्यैवोपपादनायाह–**विनश्यतां हीति । भङ्गुरप्रकृतयः,** विनश्वरस्वभावाः । **उपजनक्षणेति,** उत्पत्तिक्षणेत्यर्थः, **त एवेति,** स्थाने **तत एवेति** पाठो युक्तः, **तत एवेति,** स्वहेतुभ्य एवेत्यर्थः । **नैषामिति, नभोनाशस्योत्पत्तिरि**त्यनेन सम्बन्धः, **एषां** भावानाम् । कथम्भूतानामेषामित्यपेक्षायामाह–**स्वकारणेत्यादि । प्रकृतिभङ्गुरभावमिति,** प्रकृतिः स्वभावभूतो यो भङ्गुरभावो विनश्वरत्वं तमित्यर्थः । **वस्तुन इवेति,** व्यतिरेकदृष्टान्तः, वस्तुन उत्पादे कारणस्य बौद्धैरप्यभ्युपगमात् । वाङ्मात्रत्वान्न परीक्षकाणां मानार्हमित्थं बौद्धस्य विनाशकारणापलपनमिति न चेतसि निधेयमित्याह–**न चेदमिति । त्रयी गतिरिति,** ध्वंसस्य विनश्यमानभावस्वभावत्वं स्वभावान्तरत्वमभावरूपत्वश्चेति भेदात्प्रकारत्रयमित्यर्थः । एतदेवाह–**विनश्यमानेति । तत्र** तेषु प्रकारेषु । **अव्यतिरेकपक्षः,** विनाशस्य विनश्यमानस्वभावतापक्षः, तत्पक्षस्य विनाशतत्प्रतियोगिनोरभेदमवलम्ब्यैव प्रवृत्तेः । **तस्य** घटादेः, **प्रथममेव** मुद्गरपातात्प्रागेव, **निर्वृत्तत्वात्** सम्पन्नत्वात् । विनाशस्य स्वभावान्तररूपतारूपद्वितीयपक्षमपाकरोति–**नाऽपीति ।** घटस्य पूर्ववदवस्थाने को दोष इत्यत आह–**तदवस्थश्चेति ।** एवंवादिन बौद्धं प्रति प्रतिवादी तद्दोषपरिहारमाशङ्कते–**नन्विति । तेन च,** कपालादिना च, **भावस्य** घटादेः । **तथोपलब्धीति,** पूर्ववदु-

वृत्तत्वान्न तथोपलब्ध्यादिप्रसङ्ग इति, उच्यते—न स्वभावान्तरं कपालादिकं विनाशहेतुना क्रियमाणमस्यानित्यस्य घटादेरावरणं युज्यते, कृतेऽपि तस्मिन् कपालादिके विनाशहेतुना घटे च तदवस्थ एव दृश्यात्मनि कुतस्त्य आवरणसम्भवः ?, न चैकत्रैकदा युज्येते दर्शनादर्शने विरुद्धत्वात् । नापि विनाशहेतुना तृतीयपक्षापतितो भावाभावः क्रियते, तत्र यद्येवं विकल्प्यते—न विवक्षितो भावः अभाव इति, ततोऽन्यः स्याद् भाव एव, एवं चाभावस्य विधिना पर्युदासरूपेण कार्यत्वाभ्युपगमे व्यतिरेकाव्यतिरेकविकल्पानतिक्रमः सम्भाव्यते—यदि व्यतिरिक्तमन्यं भावं करोति ततस्तथोपलब्ध्यादिप्रसङ्गस्तदवस्थः, अथाव्यतिरिक्तं तमेव भावं करोतीति, तदप्ययुक्तम्, तस्य प्रथमतरमेव स्वकारणैर्निर्वर्तितत्वात् ॥ अथ क्रियाप्रतिषेधमात्रमालम्ब्यते, एवं सति अभावस्य भावप्रतिषेधरूपत्वेऽभ्युपेयमाने अभावं करोतीत्यसमर्थसमासेनोक्तं भावं न करोतीत्ययमर्थः सम्पद्येत, तथा च सति अकर्तुर्नाशहेत्वभिमतस्याहेतुत्वमकारकत्वमिति न विनाशहेतुर्नाम कश्चन सम्भवत्यन्यत्र विनष्टुस्तद्धर्मताया इत्युपसंहारः, वैयर्थ्याच्च न विनाशहेतुरस्ति, यस्य भावस्य विनाशाय विनाशहेतुः कल्प्यते स भावः स्वभावतो नश्वरः स्यान्न—वा ?, यदि नश्वरः स्वभावत एव भावस्तन्न किञ्चिद्विनाशहेतुनाऽस्य प्रयोजनम्, स्वयं तत्स्वभावतयैव नाशात्, यस्य हि घटादेर्यः स्वभावः स स्वहेतोरेव मृदादिसामग्र्यादिकाद्रुपजायमानस्तादृशो विनाशस्वभावो भवति, न जातुचिद् विनाशे हेत्वन्तरमपेक्षते मुद्गरादिकम्, तत्स्वभावो ह्यात्मलाभानन्तरं स्वयमेव भवत्यन्यथा तत्स्वभाव एव न स्यात्, यश्च यत्स्वभावः स स्वनिष्पत्तिहेतुमपहाय हेत्वन्तरं नापेक्षते प्रकाशादिवत्, प्रकाशादयो हि प्रकाशादिस्वभावाः स्वहेतोरुत्पन्नाः सन्तः पुनरुत्पत्तेः पश्चात् प्रकाशादिस्वभावतायां स्वजन्मव्यतिरिक्तं न हेत्वन्तरमपेक्षन्ते ॥ अथ नैव स्वभावतो नश्यति भाव उत्पन्नः, ततः पश्चादपि न नश्येदनश्वरस्वभावत्वात्, न च तादृशोऽर्थक्रियासु सामर्थ्यं सम्भाव्यते ।

पलब्धीत्यर्थः । बौद्ध उक्ताशङ्कां प्रतिक्षिपति—**उच्यत** इत्यादिना । विनाशस्याभावरूपतारूपतृतीयपक्षमपाकरोति—**नापि विनाशहेतुनेति**, भावो विधिरूपो न कारणसहस्रेणाभावीभवितुमर्हतीति खण्डनाभिप्रायः, विनाशोऽभाव इत्यस्य न भावोऽभाव इति व्युत्पत्तौ भावपदं विवक्षितभावपरं नञश्च न प्रसज्यरूपत्वं किन्तु पर्युदासरूपत्वमित्यभिप्रायेणाह—**तत्रेति**, अभावपदे इत्यर्थः । **ततो** विवक्षितभावात् । **व्यतिरेकाव्यतिरेकेति**, विवक्षितप्रतियोगिस्वरूपभावव्यतिरिक्तः स भावः, तदव्यतिरिक्तो वा स भाव इति विकल्पानतिक्रम इत्यर्थः । भवतूक्तविकल्पानतिक्रमस्तत्र को दोष इत्यत आह—**यदीति** । **तमेव** प्रतियोगितयाऽभिमतं घटमेव । **तस्य** घटस्य **प्रथमतरमेव** मुद्गरपातात्पूर्वमेव । तृतीयपक्षेऽभावपदे नञः प्रसज्यरूपत्वमेवेत्यभिप्रेत्याह—**अथेति**,—

"पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् । प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥ १ ॥"

इति वचनान्नञः प्रसज्यरूपत्वे अभाव इत्यस्य भावो न भवतीत्येवंस्वरूपता स्यात्, प्रसज्यार्थकस्य नञोऽसमर्थत्वेन 'समर्थः पदविधिः' इत्यनुमोदितसमासस्वरूपघटकता न स्यादेवेत्यभ्युपगममात्रेणासमर्थस्यापि तस्य समास इत्यभिसन्धायोक्तम्—**असमर्थसमासेनेति** । यद्यपि "अमानोनाः प्रतिषेधवचना" इति वचनादभावं करोतीत्यत्राकारः समासानिविष्टोऽपि सम्भवति, तथापि तस्य प्रयोगो न प्राय उपलभ्यत इति बोध्यम् । **तथा च सति**, भावं न करोतीत्यर्थे च सति । **न विनाशहेतुरिति**, विनष्टुस्तद्धर्मताया अन्यत्र कश्चन विनाशहेतुर्न सम्भवतीति योगः, **विनष्टुर्**विनशनशीलस्य, **तद्धर्मताया** अन्यत्र विनश्वरस्वभावतां विहाय । **वैयर्थ्याच्चे**त्युक्तं तदेवोपपादयति—**यस्येत्यादिना** । **अस्य** विनश्वरस्वभावस्य भावस्य, **तत्स्वभावतयैव** विनश्वरस्वभावतयैव । पूर्वोक्तमेव प्रपञ्चयति—**यस्य हीत्यादिना** । **प्रकाशादिवदिति**, एतद्दृष्टान्तोपपादनायाह—**प्रकाशादयो हीति** । ननु भावस्य विनश्वरस्वभावतैव नास्माभिरङ्गीक्रियते तत्राह—**अथेति** । **तादृशो**ऽनश्वरस्वभावस्य, अक्षणिकस्येति यावत्, अर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य नित्ये प्रसङ्गविपर्ययाभ्यां क्रमयौगपद्यरूपव्यापकनिवृत्त्या

तदेदयुक्तं स्वगोष्ठरमणीयं प्रकाशनमात्रत्वात्, न ह्यनुपपत्तिकमभिधीयमानं विचित्रमपि प्रतिपत्तुमुत्सहन्ते विद्वांसः, प्रकृत्यैव भङ्गुराः सर्वभावा विनाशहेत्वयोगादित्यसिद्धता हेतोः, यस्मादयं विनाशः कदाचिदेव भवत्युपजनक्षणोत्तरकालं नोपजनक्षण एव, उपजनक्षणश्चात्मलाभकालस्तत्र विनाशाभावात् कादाचित्कत्वं विनाशस्य निर्हेतुकविनाशवादिनोऽपि प्रसिद्धम्, न ह्यलब्धात्मलाभं वस्तु विनश्यति, व्योमकुसुमादीनामपि विनाशप्रसङ्गात्, ये च कादाचित्काः पटादयस्ते प्रतिविशिष्टहेतुजन्या एव दृष्टास्तथा विवादास्पदास्कन्दी विनाशोऽपि प्रागविद्यमानः पश्चादात्मलाभहेतुमपेक्षमाण एवात्मानमासादयति । ननु चैवमभ्युपेयमाने विनाशस्यापि हेतुमत्त्वात् पटादेरिव विनाशेन भवितव्यम्, असत्त्वाच्च निष्कारणो विनाशः खकुसुमादिवदित्यनुमानविरोधिनी प्रतिज्ञेयं–कारणवान् विनाश इति । अत्रोच्यते—पूर्वावस्थाप्रच्युतिरुत्तरावस्थोत्पत्तिः, उत्तरावस्थापत्तिश्च पूर्वावस्थाप्रच्युतिः, अयमेव विनाशशब्दवाच्योऽर्थो नात्यन्ताभाव इति प्राक् प्रत्यपादि प्रपञ्चेन, ततश्च विनाशस्यापि विनाश इति प्रसिद्धमेव प्रसाध्यते, विनष्टे च विनाशे पुनरवस्थान्तरोत्पत्तिक्रमवृत्त्या न किञ्चिदनिष्टमस्ति स्याद्वादप्रक्रियायाम्, अत एव चासत्त्वान्निष्कारणो विनाश इत्येतदप्यपास्तमेव, असत्त्वस्यासिद्धतादिदोषा-

---

क्षणिकत्वेनैव व्याप्तेरित्यभिसन्धिः । एतावता बौद्धमतमुपपाद्य तत्प्रतिक्षिपति–**तदेतदयुक्तमित्यादिना । विनाशहेत्वयोगादित्यसिद्धताहेतोरि**त्यत्र विनाशहेत्वयोगादिति हेतोरसिद्धतेत्येव योग । तत्र हेतुमाह–**यस्मादिति । उपजनेति,** उत्पत्तीत्यर्थः । कथं नोपजनक्षण एव विनाश इत्यपेक्षायामाह–**उपजनक्षणश्चेति । आत्मलाभकाल इति,** आत्मनो वस्तुखरूपस्य लाभः सत्त्वप्राप्तिर्यस्मिन्स आत्मलाभ तादृशश्चासौ कालश्चेति आत्मलाभकाल, आद्यक्षणसम्बन्ध इति यावत् । **तत्र** उत्पत्तिक्षणे एवं सति तस्मिन्क्षणेऽसतो विनाशस्योत्तरकाले सत्त्वात्किञ्चित्कालासत्त्वे सति किञ्चित्कालसत्त्वरूपं कादाचित्कत्वं सिद्धं, ततश्च सहेतुकत्वमपि सिद्ध्यति उत्पत्तौ तस्य हेतुमत्त्वेन सहाविनाभावस्य गृहीतत्वात् । न च प्रागभावे व्यभिचारः, तस्य जैनमते पूर्वपर्यायरूपतयैव स्वीकारेण तत्र सहेतुकत्वस्य सद्भावात् पूर्वपूर्वपर्यायात्मकप्रवाहस्यानादिकालतयैव तदात्मत्वमाश्रित्य तत्रानादित्वव्यवहारात्, क्षणिकवादिनस्तवापि पूर्वपूर्वक्षणस्यैवोत्तरोत्तरक्षणप्रागभावतयाऽभ्युपगम इति तस्य स्वकारणजन्यत्वमस्त्येव, येषा चानादिस्सान्त॰ प्रागभावस्तन्मताश्रयणेन तत्र व्यभिचारस्तु पूर्वकालावृत्तित्वे सति उत्तरकालवृत्तित्वरूपतां कादाचित्कत्वस्य स्वीकृत्य परिहरणीय इत्याशयेनाह–**कादाचित्कत्वं विनाशस्येति ।** अनुत्पन्नस्यैव विनाशाभ्युपगमोऽनुभवबाधित इति तस्य पूर्वकालेऽसत्त्वमावश्यकमित्याह–**नह्यलब्धात्मलाभमिति ।** कादाचित्कत्वस्य सहेतुकत्वेन सहाविनाभावग्राहकमुदाहरणमुपदर्शयति–**यच्चेति ।** उपनयमुपदर्शयति–**तथेति,** यद्धि हेतुमत्तद्विनाशप्रतियोगीतिव्याप्तेर्विनाशस्य हेतुमत्त्वे विनाशित्वप्रसङ्ग॰, न चैवमभ्युपगन्तुं शक्यः, तथा सति विनाशस्य विनाशे प्रतियोग्युन्मज्जनप्रसङ्ग । एवं ध्वंस सहेतुकः कादाचित्कत्वादित्यनुमानं ध्वंसो निष्कारणकोऽसत्त्वात् खपुष्पवदित्यनुमानबाधितमिति पर॰ शङ्कते–**नन्वित्यादिना । अनुमानविरोधिनी,** अनुमानं विरोधि बाधकं यस्या इति व्युत्पत्त्याऽनुमानबाधितेत्यर्थ॰ । **कारणवान् विनाश इति** प्रतिज्ञास्वरूपकथनम् । विनाशस्यापि विनाशोऽभ्युपगम्यत एव प्रतियोग्युन्मज्जनदोष उत्तरोत्तरपर्यायाणामशेषाणामेव पूर्वपूर्वपर्यायविनाशरूपत्वेनैकपर्यायरूपविनाशविनाशेऽप्युत्तरपर्यायरूपविनाशसद्भावात्, उत्तरपर्यायस्य भावरूपतया सत्त्वेन नासत्त्वं विनाशस्येति नानुमानबाधापीत्याशयेन समाधत्ते–**अत्रोच्यत इति । नात्यन्ताभावः,** न तुच्छरूपो ध्वंस॰ । प्रतियोग्युन्मज्जनप्रसङ्गस्यापि नावतार इत्याशयेनाह–**विनष्टे चेति । क्रमवृत्त्या** प्रवाहानुवृत्त्या । **किञ्चित्** प्रतियोग्युन्मज्जनादि । न चैवं ध्वंसस्यानन्तत्वमिति लोकप्रसिद्धिर्भज्येतेत्यत आह–**स्याद्वादप्रक्रियायामिति,** नहि सर्वथा कस्यचित्सान्तत्वमनन्तत्वम्वा सम्भवति किन्तु कथञ्चिदेव, कथञ्चिदनन्तत्वं च व्यक्त्यपेक्षया सान्तत्वेऽपि उत्तरोत्तरप्रवाहात्मनाऽस्त्वेवेति न किञ्चिदनुपपन्नम् । असत्त्वहेतोरसिद्धत्वादेव निष्कारणत्वानुमानं परस्य न प्रवर्तत इत्याह–**अत एवेति,** ध्वंसस्योत्तरपर्यायात्मकभावरूपत्वादेव । न चोत्पत्तिमतो भावस्य विनाश इति नियमो नैयायिकादिपरिकल्पितोऽस्माभिरभ्युपगम्यते येन तस्यानन्तत्वान्यथानुपपत्त्याऽभावरूपताऽऽश्रीयेतापीत्याह–**न चावश्यमिति । सर्वेणैवे**त्यनन्तरं **भावेनेति** द्रष्टव्यम् । निषेधे हेतुमाह–

घातत्वात्। न चावश्यं सर्वेणैव हेतुमता विनष्टव्यम्, असत्पक्षे स्वात्मावस्थानलक्षणस्य मोक्षस्य सम्यग्ज्ञानादिहेतुकस्याप्यविनाशाभ्युपगमात्। यद्यपि सम्यग्ज्ञानादिहेतुः कर्मक्षपणाभ्युपायस्तथापि स्वात्मावस्थानस्य कर्मक्षयरूपत्वाददोषः। विनाशवान् विनाश इति चाभ्युपयतः **सौगत**स्याभ्युपगमविरोधः। निष्कारणविनाशवादी चेदं प्रष्टव्यः—किं निष्कारणत्वान्नित्यो विनाशः उतासन्निति? । तत्र यदि नित्यः, कार्योत्पादाभावप्रसङ्गः, द्वितीयविकल्पे विनाशाभावात् सर्वपदार्थानां नित्यत्वप्रसङ्गः। न चासन् सर्व एव निष्कारणः, स्तम्भकुम्भादीनामसत्त्वेऽपीतरेतरात्मना हेतुमत्त्वमस्तीत्यनेकान्तात्, यथा चानादित्वात् प्रागभावो निर्हेतुकोऽपि विनश्यत्येवं विनाशोऽसन्नपि हेतुमान् किमिति नेष्यते? । एवं द्रव्यपर्यायात्मकप्रक्रियाप्रपञ्चे विश्वमुखे सर्वमेवैकान्तवाद्युत्प्रेक्षितमसाधनमेव जायते स्याद्वादिनं प्रति। विनाशे च सहेतुके प्रतिपादिते यदुक्तं—मुद्गरादेरसामर्थ्यं विनाशकरणं प्रति तदयुक्तम्, अस्त्येव हि सामर्थ्यं तद्भावभावितया कपालाद्युत्पत्तेः। विकल्पत्रयं च सुकुमारप्रज्ञेन प्रमाणविचारपरिक्लेशासहिष्णुना यथाकथञ्चिदुपन्यस्य प्रथमविकल्पोऽतिस्थूल इत्येवोपेक्षितो मनागागतत्रपेण, तथा द्वितीयवि-

---

**असत्पक्ष इति,** जैनसिद्धान्त इत्यर्थः। परकल्पितात्यन्तिकदुःखनिवृत्तिरूपमोक्षस्याभावरूपत्वादेव न नाश इत्यत उक्तम्—**स्वात्मावस्थानलक्षणस्येति**। अनेन मोक्षस्य भावरूपत्वमाविष्कृतम्, तस्य निर्हेतुकत्वादेव न नाश इति न भ्रमितव्यमित्याह—**सम्यग्ज्ञानादिहेतुकस्येति,** आदिपदात्सम्यग्दर्शनचारित्रयोरुपग्रहः। ननु सम्यग्ज्ञानाद्यनन्तरं निखिलकर्मणामेव क्षयः, तस्य निखिलकर्मविगमस्य मोक्षत्वपक्षे मोक्षरूपताऽपि, तत्कारणत्वात्सम्यग्ज्ञानादीनां मोक्षमार्गत्वमप्युपपद्यते, तस्य चाभावरूपत्वादेव न हेतुमता सर्वेण भावेन विनष्टव्यमिति नियमविघातकत्वमित्यत आह—**यद्यपीति**। **सम्यग्ज्ञानादिहेतुरिति,** सम्यग्ज्ञानादिश्चासौ हेतुश्चेति कर्मधारय, यद्यपि स्वावरणीयकर्मक्षयात्सम्यग्ज्ञानादीनामाविर्भाव इति सम्यग्ज्ञानादिकम्प्रत्येव कर्मक्षयस्य हेतुता न तु कर्मक्षयम्प्रति सम्यग्ज्ञानादेरिति कार्यकारणभाववैपरीत्यमेव, तथापि कृत्स्नकर्मक्षयलक्षण एव स न तु कतिपयज्ञानाद्यावरणक्षयः, स च सम्यग्ज्ञानाद्यनन्तरमेव सम्पद्यत इति कर्मक्षपणाभ्युपाय इत्यत्र तत्पुरुषः, न तु सम्यग्ज्ञानादिहेतुरित्यत्र तत्पुरुषः, तथा सति कर्मक्षपणहेतुना सम्यग्ज्ञानादेर्जन्यत्वमेव लभ्येत, तेन स्वात्मावस्थानलक्षणस्य मोक्षस्य सम्यग्ज्ञानहेतुकत्वं न प्रत्यादिष्टं स्यादिति **यद्यपी**त्युक्तेः साफल्यं न भवेदिति विभावनीयं सुधीभिः। निखिलकर्मक्षयस्य सम्यग्ज्ञानादिहेतुकस्य मोक्षत्वेऽपि स्वात्मावस्थानस्य मोक्षत्वमागतमेव तस्य तद्रूपत्वात्तत एव च सम्यग्ज्ञानादिहेतुकत्वमपीत्याह—**तथाऽपीति**। न चैवं सत्यभावरूपत्वमेवापतितमिति शङ्क्यम्, कर्मक्षयस्य न तुच्छरूपता किन्तु स्वात्मावस्थानलक्षणभावरूपतैवेत्यत्रोक्तग्रन्थस्वारस्यादिति। सर्वस्य क्षणिकत्वमभ्युपगच्छता सौगतेन विनाशस्यापि विनाशोऽभ्युपेय एवेति विनाशो न विनश्यतीत्युपगमस्स्वाभ्युपगमविरुद्ध इत्याह—**विनाशवान्विनाश इति चेति**। सौगतं पुनरास्कन्दन्नाह—**निष्कारणविनाशवादीति,** बौद्ध इत्यर्थः। **इदं, किं निष्कारणत्वा**दित्यादिवक्ष्यमाणं बुद्धौ विपरिवर्त्तमानत्वात्प्रत्यक्षम्। नित्यत्वपक्षे ध्वंसस्यैव सर्वदा सत्त्वेन तत्प्रतियोगिनः कार्यस्य कदापि सत्त्वं न स्यादित्याह—**कार्योत्पादाभावप्रसङ्ग इति**। **द्वितीयविकल्पे** ध्वंसोऽसन्निति पक्षे, ध्वंसाभावे ध्वंसप्रतियोगित्वरूपानित्यत्वस्याप्यभाव इति ध्वंसप्रतियोगित्वाभावरूपनित्यत्वमेव स्यादित्यर्थः। यदसत्तन्निष्कारणकमिति व्याप्तिरपि व्यभिचारान्न सम्भवतीत्याह—**न चासन्निति**। **इतरात्मनेति,** परद्रव्यक्षेत्रकालभावात्मनेत्यर्थः। **अनादित्वादिति,** न्यायादिमते स्वरूपत एव प्रागभावस्यानादित्वं बौद्धमते पूर्वक्षणे सन्तानत्वमेव प्रागभावत्वमिति तद्रूपेणानादित्वमिति बोध्यम्। यद्यपि सन्ततिपतितस्य पूर्वपूर्वक्षणस्य बौद्धमते सहेतुकत्वमेव, तथापि उक्तलक्षणप्रागभावत्वेन न सहेतुकत्वमिति निर्हेतुकत्वस्य तत्र नासिद्धिः। **असन्नपि** विध्यात्मनाऽसन्नपि। **विश्वमुखे,** सर्ववस्तुनि। विनाशकरणम्प्रति मुद्गरादेस्सामर्थ्यं व्यवस्थापयति—**विनाशे चेति**। **तद्भावभावितयेति,** मुद्गरादीनां निपतनादिव्यापारसद्भावे कपालादिलक्षणघटध्वंसोत्पत्तेर्भावितत्वेनेत्यर्थः, कपालाद्युत्पत्तेस्तद्भावभावितया मुद्गरादेः विनाशकरणम्प्रति सामर्थ्यमस्त्येवेत्येवमन्वयार्थोऽत्र बोध्यः। **विकल्पत्रयमिति,** विनाशकरणे हि विनाशस्य त्रयी गतिः—विनश्यमानभावस्वभावं वा कुर्यादथवा स्वभावान्तरमभावं वेति ग्रन्थोक्तविकल्पत्रयमित्यर्थः, यत एव बौद्धः सुकुमारप्रज्ञोऽत एव प्रमाणविचारपरिक्लेशासहिष्णुरिति हेतुहेतुमद्भावेन व्याख्येयम्। अस्यैवोपोद्बलनाय **यथाकथञ्चिदुपन्यस्ये**त्युपात्तम्, यदयं

कल्पः—स्वभावान्तरं किल क्रियते विनाशहेतुना, घटतादवस्थ्ये तु सकलघटनिष्पाद्यजलधारणादिक्रियाप्रसङ्ग इति शापदानमुदघोषि । एतच्च विकल्पद्वयं न जाने किं प्रथमतरमेव मायासूनुनोत्खातमुत्पन्नसर्वार्थज्ञानेनाहोस्विद् भिक्षुवरधर्मकीर्तिनैव स्वयमुत्प्रेक्षितमिति ?, यत् सत्यं विस्मिताः स्मोऽनया वाचोयुक्त्या—किं विनाशहेतुर्घटमेव करोति उत स्वभावान्तरमिति ?, यद् विनाशहेतुना क्रियते तदेवैकं न व्यपादेशि गलितधिषणेन; घटविनाशहेतुर्घटविनाशमेव करोति, स चोक्तोऽवस्थान्तरापत्तिलक्षणः प्रथममेव । अभावविकल्पेऽपि पर्युदासाभ्युपगमे किल विवक्षिताद् भावादन्यं भावमेव करोति, ततश्च पूर्ववद् व्यतिरेकाव्यतिरेकविकल्पानतिक्रमः, व्यतिरेकाव्यतिरेकविकल्पौ च विहितप्रतिक्रियौ प्राग् विकल्पाभासत्वाच्चायुक्तौ, प्रसज्यप्रतिषेधपक्षे त्वभावं करोति—भावं न करोतीति वाक्यार्थः । तदेतदयुक्तम्, असत्प्रक्रियानवबोधात्, जैनी प्रक्रिया द्रव्यपर्यायावुभौ वस्तु भावाभावस्वभावम्, न चाभावः कश्चिद् भावान्निर्लुठितः सम्भवति यं विनाशहेतुः करिष्यति, न चास्ति काचित् क्रिया द्रव्यादत्यन्तव्यतिरिच्यमानस्वभावा यस्याः प्रसज्यप्रतिषेधेन निवारणा क्रियेत, द्रव्यमेव हि तथोद्भूतपरिणामं क्रियाव्यपदेशमश्नुते द्रव्यनयस्य, पर्युदासो हि विधिरूपत्वाद् द्रव्यास्तिकः, इतरः पर्यायनयः प्रतिषेधमात्रत्वात्, एतौ च परस्परापेक्षावेव च वस्तु नैककौ, ततश्च विभागाभावादसद्वि-

---

प्रौढप्रज्ञः स्याच्चैवं यथाकथञ्चिदुपन्यस्येदिति । **प्रथमविकल्पः,** विनश्यमानभावस्वभावं कुर्यादिति पक्ष. । **द्वितीयविकल्प इति ।** एतत्स्वरूपाख्यानम्—**स्वभावान्तरं किल क्रियते विनाशहेतुनेति ।** तत्पक्षोद्भावितदोषस्य सक्षेपेणोत्कीर्त्तनम्—**घटतादवस्थ्ये त्वित्यादि ।** तद्दोषस्य शापदानत्वेनोपन्यसनं निस्सारत्वख्यापनाय । **उत्खातं** खण्डितम्, **मायासूनुना** बुद्धेन । **उत्पन्नसर्वार्थज्ञानेनेति ।** विशेषणं मायासूनोरुपहासाय—इदानीं पर्यन्तं कोऽपि बुद्धेतरो विद्वान्नेदृग् विकल्पमकार्षीदयं च कृतवानतो नूनमस्य विज्ञानं सर्वार्थविज्ञानमिति । **स्वयमिति,** न तु बुद्धतच्छिष्यपरम्परागतमिति । **अनया** उक्तविकल्पद्वयोद्भावनरूपया । का च सा वाचोयुक्तिरित्यपेक्षायां **किं विनाशहेतुर्घटमेव करोति उत स्वभावान्तरमितीति ।** तत्स्वरूपानुवादः—**गलितधिषणेनेति,** गलिता पतिता धिषणा बुद्धिर्यस्य स गलितधिषणस्तेन बुद्धिशून्येन धर्मकीर्तिनेत्यर्थः । विनाशहेतुना किं क्रियते तद्भवतैव वाच्यं यदनवबोधाद्धर्मकीर्त्तेर्गलितधिषणत्वं जानीम इत्याक्षिप्त एवाह—**घटविनाशहेतुरिति । स च** घटविनाशश्च । **प्रथममेवेति,** उक्त इति पूर्वतनेन सम्बन्धः । **तत्र यद्येवं विकल्प्यते—न विवक्षितो भावोऽभाव** इत्यादिग्रन्थ एवोक्तः । अत्र बौद्धः पूर्वग्रन्थस्थदोषमेव स्मारयति—**अभावविकल्पेऽपीति,** अस्तु व्यतिरेकविकल्पानतिक्रम. किन्नश्छिन्नमिति । ग्रन्थकृत्समाधत्ते—**व्यतिरेकाव्यतिरेकविकल्पौ चेति । विहितप्रतिक्रियौ** दत्तोत्तरौ, तथा च न पिष्टपेषणमस्माभिः करणीयं प्रेक्षावद्भिरिति । प्रामाणिको हि विकल्प उत्तरार्हो भवति, भवदुक्तौ च विकल्पौ विकल्पाभासत्वान्नोत्तरार्हावित्याह—**विकल्पाभासत्वाच्चायुक्ताविति ।** ननु पर्युदासपक्षाश्रितो विकल्पोऽस्तु विकल्पाभासः, प्रसज्यप्रतिषेधपक्षीयस्तु दोषः स्यादेव भवत इत्यत आह—**प्रसज्यप्रतिषेधपक्ष इति ।** अत्र पक्षे नाशहेतुत्वेनाभिमतस्याहेतुत्वमकारकत्वमापादितं तत्तदा स्याद्यद्यभावोऽभाव एव स्यात्तुच्छरूप., तस्य करणासम्भवात् भावं न करोतीत्यर्थपर्यवसानमस्माकमनुमतं स्यान्न चैवमित्याह—**तदेतदयुक्तमिति,** न द्रव्यं पर्यायवियुतं न पर्याया द्रव्यवर्जिता न तौ भावरूपावेव नाप्यभावरूपावेव किन्तु भावाभावस्वभावं द्रव्यपर्यायात्मकमेकं वस्तु, तत्राभावांशस्यापि भावात्मकत्वेन तत्करणं नानुपपन्नं ततस्तत्कर्त्तुर्हेतुत्वं कारकत्वञ्च घटत एवेत्यभिप्रायवान् जैनीं प्रक्रियामुपदर्शयति—**जैनी प्रक्रियेति ।** भावं न करोतीति क्रियाप्रतिषेधोऽप्यैकान्तिको जैनप्रक्रियाया न घटत इत्याह—**न चास्ति काचित्क्रियेति ।** द्रव्यस्वरूपता क्रियायाः क नयमाश्रित्येत्यपेक्षायामाह—**द्रव्यनयस्येति ।** ननर्थप्ररूपणे द्रव्यनयस्य कोऽवकाश इत्यत आह—**पर्युदासो हीति । द्रव्यास्तिक इति,** विषयविषयिणोरभेदं विवक्षित्वेत्थमुक्तिः, शब्दार्थज्ञानानां त्रयाणामपि नयत्वमिति पक्ष वाश्रित्येत्थमभिधानम् । **इतरः** प्रसज्यप्रतिषेध. । **एतौ** द्रव्यपर्ययनयविषयौ भावाभावौ । **विभागाभावात्,** अभावस्य भावात्पृथक्करणासम्भवात् । **असद्विकल्पतेति,** विषयसद्भावे हि विकल्पः प्रवर्त्तते, विषयाभावे हि निर्निबन्धना विकल्पप्रवृत्तिरपि न सम्भवतीत्यसद्विकल्पता,

कल्पता। अपि च भावो वस्तु परिनिष्पन्नम्, तस्य कुतः करणेनाभिसम्बन्धः? अपूर्वोत्पादार्थत्वात् करोतेः, अथ पृष्ठं कुर्वित्युपचारः, तथापि यत् किञ्चिद् भावस्य करणम्, अभावश्चापरिनिष्पन्नम-वस्थान्तररूपं वस्तु, तन्निष्पादनाय यत्नः क्रियते, तच्च नात्यन्तमसन्न सर्वथा सदित्यभावविशिष्टस्यैव वस्तुनो वस्तुत्वात्। यदप्युक्तम्—वैयर्थ्याच्च न विनाशहेतुरिति तदप्यसमीक्षिताभिधानम्, अस्मत्प्रक्रि-यानवगमात्। वैस्रसिकः प्रायोगिकश्च द्विधा विनाशः, तत्र प्रायोगिकः कादाचित्कत्वात् पटादिवत् सहेतुकः, न च दृष्टमपह्नोतुं शक्यं प्रमाणतः पदार्थस्वरूपावबोधात्, आत्मलाभसमनन्तरमेव च सर्वथा विनश्यन्ति पदार्था इति न किञ्चिदस्मिन्नर्थे प्रमाणमस्ति, कालान्तरावस्थायिनि च विनाशे प्रत्यक्षबुद्धेर्व्यापारः। यच्चावाचि—प्रकाशादयो लब्धात्मलाभाः प्रकाशादिस्वभावतया स्वजन्मैवापेक्षन्ते, नापरं हेत्वन्तरम्, एतदप्यसङ्गतम्, यदि प्रकाशादय उत्पन्नाः पुनरुत्पत्तौ हेत्वन्तरं नापेक्षन्त इति वाक्यार्थः ततः किं केन सङ्गतम्? न ह्युत्पन्नः पदार्थस्तेन रूपेण पुनर्हेतुमभिलषति, लब्धात्मलाभः कालान्तरे हेतुमपेक्ष्य विनश्यतीति जागद्यामहे। ननु च स स्वहेतोरेवोत्पद्यमानस्तादृशो भवति येनोत्पत्तिसमनन्तरमेव विनश्यतीति, अयुक्तमिदम्, प्रतिज्ञामात्रत्वात्, वयमपि ब्रूमः—स स्वहेतोरेव तादृश उपजायते येन कालान्तरमवस्थाय विनश्यतीति, अत्र च पक्षे प्रत्यक्षाद्यपि प्रमाणं सहायीभ-वति। ननु च निष्कारणविनाशवादिनामियं युक्तिः—"नष्टा चेन्नाशविघ्नः कः? न चेन्नैव विन-

---

व्यतिरेकाव्यतिरेकविकल्पयोरिति सुष्ठूक्तम्—**विकल्पाभासत्वाच्चायुक्ताविति**। यत्तु अभावस्य तुच्छरूपत्वात् करणमयुक्त-मिति कृत्वा भावं न करोतीति व्याख्यानं तन्न समीचीनमभावस्यासद्रूपत्वाभावेन तत्करणसम्भवात् प्रत्युत भावस्यैव करणं न सम्भवतीति प्रपञ्चत उपदर्शयति—**अपि चेति**, परिनिष्पन्नं वस्तु भाव इत्यभिसम्बन्धः। **तस्य** परिनिष्पन्नस्य। परिनिष्पन्नस्य कुतो न करणेनाभिसम्बन्ध इत्यतस्तत्र हेतुमाह—**अपूर्वोत्पादार्थत्वात्करोतेरिति**। ननु परिनिष्पन्नेऽपि करोतेः प्रयोगो दृश्यते, यथा—पृष्ठं कुरु इत्यत्र तथा भावेऽपि परिनिष्पन्ने करोतेः प्रयोगस्सुघट इत्याह—**अथेति**। एवमपि भावे औपचारि-कोऽयं प्रयोगो न वस्तुनियतः, अभावेत्वपरिनिष्पन्नस्वरूपे यथार्थ इति अभावं करोतीति युक्त एवेत्याह—**तथापीति**। **यत् किञ्चित्**, औपचारिकम्। **तन्निष्पादनाय** अभावनिष्पादनाय। **तच्च** अवस्थान्तररूपमभावात्मकं वस्तु च। **नात्यन्तम-सदिति**, तथात्वे शशशृङ्गादिवन्न प्रामाणिकव्यवहारवीथीमवतरेदिति। **न सर्वथा सदिति**, तथात्वे अभावरूपेणेव विधिरूपेणाप्यभाव एव स्यादिति निषेधात्मनैव सर्वसाध्यवसितिः स्याद्, एवं पूर्वकालादिवृत्तितयाऽपि सत्त्वप्रसक्तौ निष्पन्नस्य न करणमित्यभावं करोतीत्यपि दुर्घटं प्रसज्येतेत्यादि बोध्यम्। यदि नात्यन्तमसच्च सर्वथा सदवस्थान्तररूपमभावात्मकं वस्तु तर्हि किमात्मकं तद्वस्त्वभ्युपेयमित्यपेक्षायामाह—**अभावविशिष्टस्यैवेति**, अत्राभावपदमसत्त्वपरम्। **वस्तुन** इत्यत्र प्रकृति-भूतं वस्तुपदं सत्ताविशिष्टपरम्, तथा च सदसदात्मकस्यैव वस्तुत्वादित्यर्थः। यच्चोक्तं "वैयर्थ्याच्च न विनाशहेतुरस्ति, यस्य भावस्य विनाशाय विनाशहेतुः कल्प्यते स भावः स्वभावतो नश्वरः स्यान्नवा" इत्यादि तदपहस्तयति—**यदप्युक्तमित्यादि**। **असत्प्रक्रियेति**, जैनप्रक्रियेत्यर्थः। जैनप्रक्रियामेव दर्शयति—**वैस्रसिक** इत्यादि। प्रामाणिकी चेयं प्रक्रिया न कुयुक्तिश-तैरप्यपनेया, नैतन्निषेधे प्रमाणमात्मलाभमासादयति, परप्रक्रिया त्वप्रामाणिकत्वान्नोपादानार्हेत्याशयेनाह—**आत्मलाभसम-नन्तरमेवेति**। न तु किञ्चित्कालं स्थित्वा भावो विनश्यतीत्यत्रापि प्रमाणं नास्तीत्यत आह,—**कालान्तरावस्थायि-नीति**, षष्ठ्यर्थे चात्र सप्तमी, षष्ठीसप्तम्योरेकार्थे बहुलं प्रयोगदर्शनात्, तथा च कालान्तरावस्थायिनश्च विनाशे इत्यर्थः, विनाशे सामानाधिकरण्येनैव कालान्तरावस्थायिनीत्यस्यान्वये वा कालान्तरेत्यस्य उत्पत्तिस्थितिकालादन्यकालः कालान्तरमित्यर्थः, तदवस्थायिनि तद्वर्त्तिनि विनाश इति व्याख्येयम्। **प्रत्यक्षबुद्धेर्व्यापार इति**, किञ्चित्कालस्थायिनो घटस्य कालान्तरे मुद्गरपाताद्विनाशे सति मुद्गरपाताद्विनष्टो घट इति प्रत्यक्षेणैव विनाशस्यानुभवात्किमतोऽपि प्रमाणान्तरमन्वेषणीयमिति भावः। स्वभाववादमाश्रित्य बौद्धः शङ्कते—**ननु चेति**। प्रतिज्ञामात्रेणापि वस्तुसिद्धौ दण्डमाह—**वयमपीति**, स्थिरवादिनोऽपी-त्यर्थः। **अत्र च पक्षे** स्थिरवादिजैनाद्युपगतोक्तस्वभावपक्षे, दुर्दुटो बौद्धः पुनराशङ्कते—**ननु च निष्कारणेति**। **नष्टा**

क्ष्यति" इति, प्रतिकृतविधानैषा युक्तिः—"प्रागभूतात्मलाभत्वान्नाशः कारणवान् भवेत्" इति। स्वभावश्च वस्तुनो धर्मः परिणतिविशेषः, स च कश्चित् सादिर्वर्णादिपरिणामः, कश्चिदनादिः सत्तामूर्तत्वामूर्तत्वादिपरिणाम इति, अतोऽनेकान्तेनैव यो यत्स्वभावः स सर्वदा तत्स्वभाव एव कदाचिन्नश्यति कदाचिदवतिष्ठते कदाचिदुत्पद्यत इत्यलमतिप्रसङ्गेन। स्थितमिदम्—प्रायोगिकोऽप्यस्ति विनाश इति॥ एतेऽवस्थित्युत्पादविनाशास्त्रयोऽप्येककाला विभिन्नकालाश्च परस्परतोऽनर्थान्तरमर्थान्तरं च, तत्रोत्पादविनाशयोरेककालतायां सिषाधयिषितायां स्वात्मत्वापृथग्भावः कारणम्, नहि उत्पादविनाशयोः स्वात्मा भिद्यते, यथैकस्मिन्नेकक्षणवर्तिनि रूपे विभागाभावात् स्वात्मलाभकाल एवैकः कालो नान्यः समस्ति, यच्चैककालं न भवति तदेकमपि नियमेन न भवति, यथा—गवाश्वयोर्जन्मविनाशाविति। एवमुत्पादविनाशयोरेककालता, एवमुत्पादविनाशाभ्यां द्रव्यमभिन्नकालं साध्यम्, तथोत्पादविनाशौ द्रव्यादभिन्नकालौ ताभ्यामेव हेतुदृष्टान्ताभ्यां वाच्यौ॥ ननु चैकान्तवादी स्वात्मत्वापृथग्भूतत्वमुत्पादविनाशयोर्न प्रतिजानीते, तत्प्रसाधनाय परिकरः—सर्पद्रव्यस्यात्मन्युत्पतनाकारेणोत्पादः, तस्यैवात्मनि पतनाकारेण विगमः, सर्पद्रव्यात्मैवोभयाकारः, नहि सर्पात्मा भिद्यते, न चेद् भिद्यते ततः

---

**चेत्** विनशनशीलश्चेत्। **नाशविघ्नः क इति,** नाशप्रतिबन्धक क ? येनोत्पत्त्यनन्तरमेव न नश्यति, तादृशस्य प्रतिबन्धकस्योपदर्शयितुमशक्यत्वादुत्पत्त्यनन्तरमेव विनशनशीलो भावो नश्येदेवेति भाव·। **न चेदिति,** भावो विनश्वरस्वभावो नाभ्युपगम्यते चेदित्यर्थ·। **नैव विनङ्क्ष्यतीति,** विनश्वरस्वभावस्यैव विनाशो भवति नाविनश्वरस्वभावस्य, अन्यथा नित्यत्वेन भवदभिमतानामपि कदाचिन्नाशः स्यात्, तथाचोत्तरकालेऽपि न नश्येदित्यर्थः। एता युक्तिं प्रतिकृत्या प्रतिक्षिपति—**प्रतिकृतेति**। उक्तयुक्ते· प्रतिपक्षभूता युक्तिमेवोपदर्शयति—**प्रागभूतेति,** प्रागभूतस्य कारणव्यापारात्पूर्वमसतो विनाशस्य यो मुद्गरपाताद्यनन्तरमात्मलाभ उत्पत्तिस्तत्त्वात् प्रागसत्त्वे सति सत्त्वलक्षणकादाचित्कत्वादित्यर्थः। स्वभावत्वादेव स्वभाववता सह समानकालतानियम· स्वभावस्येत्यपि नास्ति, तस्य वैचित्र्यादित्याह—**स्वभावश्चेति**। **स च** परिणतिविशेषश्च। परिणामद्वैविध्योपदर्शनेन यदभिमतं तदाह—**अत इति**। वाच्यस्तर्हि कीदृग्भाव इत्यपेक्षायामाह—**कदाचिन्नश्यतीत्यादि**। उपसंहरति—**स्थितमिदमिति**। स्थित्यादीना त्रयाणामेककालत्वादिकं व्यवस्थापयति—**एत इत्यादिना**। तत्रोत्पादविनाशयोरेककालतां व्यवस्थापयति—**तत्रोत्पादेति**। स्वात्मत्वापृथग्भाव एव तयोः कथमित्यपेक्षायामाह—**नहीति**। स्वात्माभेदे। एककालत्वं स्यादेवेति दृष्टान्तेन भावयति—**यथैकस्मिन्निति,** एतच्च क्षणवादाभ्युपगमेन, स्याद्वादे तस्यापि कथञ्चिदभ्युपगमात्, परमनिरुद्धसमयस्यैव क्षणत्वेन तन्मात्रस्थायिनो रूपस्यापि विभागो न सम्भवतीति। अन्वयदृष्टान्तमुपदर्श्य व्यतिरेकदृष्टान्तमुपदर्शयति—**यच्चैककालं न भवतीति**। उत्पादविनाशयोरेककालतां प्रसाध्य ताभ्या ध्रौव्यात्मकस्य द्रव्यस्य तयोश्च ध्रौव्यात्मकेन द्रव्येण सहाभिन्नकालत्वं साधयति—**एवमुत्पादविनाशाभ्यामिति**। **ताभ्यामेवेति,** स्वात्मत्वापृथग्भावरूपहेत्वेकक्षणवर्त्येकरूपदृष्टान्ताभ्यामित्यर्थः, पूर्वमुत्पादविनाशौ परस्परमेककालौ स्वात्मत्वापृथग्भूतत्वादेकक्षणवर्त्येकरूपवत्, ततो ध्रौव्यात्मकं द्रव्यमुत्पादविनाशैकक्कालं स्वात्मत्वापृथग्भूतत्वात्, उत्पादविनाशौ द्रव्यैककालौ स्वात्मत्वापृथग्भावात्, एकक्षणवर्त्येकरूपवदिति प्रयोगोऽनुसन्धेयः। न च सिद्धसाधनादिदमनुमानं नावतरतीति शङ्क्यम्, एकान्तवादिभिस्तेषां भिन्नकालतया विभिन्नतयैव चैकान्तेनाभ्युपगमेन तान्प्रत्येवोक्तसाधनस्यावतारात्सिद्धसाधनाभावादित्याशयः। नन्वेवं सति स्वरूपासिद्धतैव हेतोः, एकान्तवादिभिरुत्पादादीनां स्वात्मत्वापृथग्भावस्यानङ्गीकारादित्याह—**ननु चेति,** उत्पादविनाशयोरित्युपलक्षणं द्रव्यस्यापि ताभ्या सह तयोश्च द्रव्येण सह स्वात्मत्वापृथक्त्वञ्च प्रतिजानीत इत्यपि बोध्यम्, न प्रतिजामीते इत्यस्य नाभ्युपेतीत्यर्थः। ग्रन्थकार आह—**तत्प्रसाधनायेति,** अत इति दृश्यम्, यतस्तदनभ्युपगमात्स्वरूपासिद्धिर्मा प्रापदित्येतस्मात्कारणादिति तदर्थ·, **तत्प्रसाधनाय** स्वात्मत्वापृथक्त्वसिद्धये। **परिकर** उपायः। परिकरमेव दर्शयति—**सर्पद्रव्यस्येत्यादिना**। **आत्मनि** स्वरूपे। **तस्यैव** सर्पद्रव्यस्यैव। **उभयाकार** उत्पतनाकार पतनाकारश्च। **सर्पद्रव्यात्मेत्यत्र** द्रव्यपदोपादानात्पूर्वापरपर्यायानुस्यूतता सर्पस्यावेदिता, नहि उत्पन्नाकारकाले यः सर्पः-स न निपतनताकारकाले अनुभवविरोधादित्याह—**नहीति**। एवं

सर्पस्वभावतैव । अत एवानर्थान्तरताऽपि ग्राह्या, अनर्थान्तरमुत्पादविनाशौ परस्परावधिकौ तत्प्रतिपत्तेरभिन्नकालत्वात्, तस्योत्पादस्यारम्भो विशिष्यते अभिन्नकालत्वेन, केन सहाभिन्नकालः ? इति चेत्, सामर्थ्याद् विनाशेन, यस्माद् विनश्यतो हि योऽन्त्यक्षणो यश्चोत्पादस्याद्यक्षणस्तदेतावुत्पादविनाशावेककालावनर्थान्तरं च, यदि चान्यो विनाशकालः स्यात् पूर्वस्यान्यश्चोत्पादकालः स्यादुत्तरस्य, ततः प्रागेतनं विनष्टमुत्तरमनुत्पन्नम्, एवं च वस्तुशून्यः कालो भवेन्निर्बीजं चोत्तरमुत्पद्येत, तस्मादभिन्नकालावनर्थान्तरं च ताविति, यथैकक्षणवर्तिनो रूपस्यैकत्वादेव तत्प्रतिपत्त्यभिन्नकालतेत्येतत् प्रतिपादयति–अन्यस्य ह्यन्येन भिन्नकालता सम्भाव्येत, न पुनस्तस्य तेनैवेति वाक्यार्थः । एवमितरत्रापि द्वयेऽनर्थान्तरता भावनीया, हेतुदृष्टान्तौ तु तावेव । नैगमनयाभिप्रायेण तूत्पादविनाशद्रव्याणां भिन्नकालता, उत्पादो हि प्रागभावः, स च द्रव्यधर्मत्वाद् द्रव्यवृत्तिः, प्रध्वंसाभावोऽपि विनाशः सोऽपि द्रव्यधर्म एव, द्रव्यमपि द्रव्यात्मरूपमजहत् स्वात्मनि वर्तते, ततश्चोत्पद्य कञ्चित् कालं

---

सति तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमेनोत्पतनाभिन्नसर्पाभिन्नस्य निपतनस्योत्पतनाभिन्नत्वं ततश्च स्वात्मत्वापृथग्भाव उभयावस्थस्य सर्पस्येत्याह–**न चेद्भिद्यत इति** । एककालत्वसिद्धौ ततोऽनर्थान्तरताऽप्युत्पादविनाशयोस्सिध्यत्येवेत्याह–**अत एवेति**, एककालत्वादेवेत्यर्थः । अत्रानुमानप्रयोगमुपदर्शयति–**अनर्थान्तरेति । तत्प्रतिपत्तेः**, उत्पादारम्भस्य । अभिन्नकालत्वादिति हेतौ केन सहाभिन्नकालत्वमुत्पादारम्भस्येति पृच्छति–**केन सहेति** । उत्पादस्य विनाशेन सममनर्थान्तरत्वं साध्यं नान्येन सममुत्पादारम्भस्याभिन्नकालत्वेन सेद्धुमर्हत्यतिप्रसङ्गादतो विनाशेन सममभिन्नकालत्वमेव तन्नियतमिति तदेवाक्षिप्यत इत्याह–**सामर्थ्याद्विनाशेनेति** । कथमुत्पादविनाशयोरेककालत्वमनर्थान्तरत्वं च सङ्घटनामियर्तीत्यपेक्षायामाह–**यस्मादिति** । एवमनङ्गीकारेऽनिष्टमासञ्जयति–**यदि चेति**, पूर्वस्य विनाशकालोऽन्यः स्यादुत्तरस्य चोत्पादकालोऽन्यः स्यादिति सम्बन्धः । **ततः**, तदा । **एवं च** यस्मिन्क्षणे पूर्वपदार्थो नष्टः तस्मिन्नोत्तरपदार्थ उत्पन्न इत्यभ्युपगमे च । **कालः** पूर्वविनाशक्षणः । **वस्तुशून्यः** पूर्वस्य तस्मिन्क्षणे विनाशादेव न सत्त्वम् उत्तरस्य चानुत्पादादेव च न सत्त्वम्, ध्वंसानुत्पादयोस्सत्त्वेऽपि तस्याभावरूपत्वादेव न वस्तुत्वमिति वस्तुशून्यः स कालः स्यात् । एवमपि कदाचित्पर उपेयात्तदाप्याह–**निर्बीजं चेति**, ध्वंसस्य तुच्छत्वादेव न जनकत्वं वस्तु च किञ्चिदव्यवहितपूर्वं तस्मिन्क्षणे नास्त्येवेति । अतः पूर्वस्य यस्मिन्क्षणे नाशस्तस्मिन्नेव क्षणे उत्तरस्योत्पादारम्भ आस्थेय इति । उपसंहरति–**तस्मादिति । तौ** उत्पादविनाशौ । पूर्वोपदर्शितं दृष्टान्तं स्मारयति–**यथैकक्षणवर्तिन इति** । एतदुक्तिस्वारस्यमुद्भावयति–**एतत्प्रतिपादयतीत्यादिना, एतदिति**, अनन्तरं वक्ष्यमाणमन्यस्य ह्यन्येनेत्यादीत्यर्थः । उत्पादविनाशयोरभिन्नकालत्वानर्थान्तरत्वे प्रसाध्य ध्रौव्यस्याप्युत्पादेन सह विनाशेन च सहाभिन्नकालत्वानर्थान्तरत्वयोः प्रसाधनप्रकारमतिदिशति–**एवमितरत्रापि द्वये इति**, ध्रौव्योत्पादध्रौव्यविनाशात्मकद्वये इत्यर्थः । **तावेव** स्वात्मत्वापृथग्भावैकक्षणवर्तिरूपात्मकावेव । एवमुत्पादविनाशध्रौव्याणामभिन्नकालतां व्यवस्थाप्य तेषां भिन्नकालतामपि व्यवस्थापयति–**नैगमनयाभिप्रायेणेति । स च** प्रागभावश्च । **द्रव्यधर्मत्वादिति**, प्रतिपादितञ्च नैगमनयप्रसूते कणभक्षाक्षपादनये ध्वंसप्रागभावयोः प्रतियोगिसमवायिकारणवर्तित्वम्, प्रतियोगिसमवायिकारणञ्च द्रव्यमेवेति । ननु अनुत्पाद एव नैयायिकादिमते प्रागभाव इति व्यपदिश्यते, प्रागभावश्च प्रतियोगिकारणं प्रतियोग्युत्पत्तेः पूर्वं वर्तते, स हि उत्पादस्य कारणं तस्योत्पादरूपताभिधानमसङ्गतमेव नैगमनस्येति चेन्न, यतोऽभूत्वा भवनमुत्पादः, तत्र भवनं स्थित्यंश एव भवति, तस्य चोत्पादत्वमभवनाव्यवहितोत्तरत्वादेव, अन्यथा द्वितीयादिक्षणेऽपि भवनस्य सद्भावेन तदापि तस्योत्पादत्वं स्यादतो भवनाऽव्यवहितपूर्वकालवर्तिनोऽभवनस्यैव मुख्यमुत्पादत्वम्, तस्य च स्वाव्यवहितोत्तरक्षणवर्तिभवने प्रतियोगिस्वरूपे फलोपधानरूपकारणत्वमपि, स्थितेः प्रागभवनस्य प्रागभावरूपता युक्तैवेति नैगमाभिप्रायः । ननु प्रागभवनं घटस्य पर्यायस्य न त्वनुगामिनो मृद्द्रव्यस्य, तस्य कालत्रयेऽपि स्थितिलक्षणभवनाश्रयतयैव प्रतीतेरिति रिक्तमुच्यते द्रव्यधर्मत्वाद्द्रव्यवृत्तिरिति चेन्न, समानकालीनयोरेवाधाराधेयभावस्य वास्तविकत्वेन पूर्वमसतः पर्यायस्य प्रागभावरूपोत्पादाश्रयत्वासम्भवेन द्रव्यस्यैव तदानीं वर्तमानस्य तदाश्रयत्वौचित्यात्तदभेदमुपचर्यैव पर्याये तथाविधोत्पादाश्रयत्वव्यवहारादित्याशयात् । नन्वेवमुत्पादविनाशयोर्द्रव्यरूपत्वेऽपि ध्रौव्यस्य द्रव्यस्वरूपस्य स्वात्मनि वृत्तिविरोधात्कथं द्रव्यधर्मत्वमित्यत आह–**द्रव्यमपीति**, स्थित्या-

स्थित्वा प्रध्वंसद् विनश्यति, एवं भिन्नकालाः प्रत्येकात्मकालवृत्तित्वात् परस्परविभिन्नात्मानोऽर्थान्तरभूता इति यावत्, पटव्योमादीनां चात्यन्तपृथग्भूतरूपाणामत्यन्तभिन्नकालानां च नैकत्वं दृष्टम्, यो वाऽद्य जनित्वा म्रियते यश्च वर्षशतं जीवित्वा मरणमनुभवति न तयोस्तुल्यकालता युक्ता । तथा न घटोत्पादकाल एव विनाशकालः क्रियाफलानाश्वासप्रसङ्गात्, यदि घटरूपनिर्वृत्त्यनन्तरमेव घटस्य विनाशस्ततः क्रियाफले घटे स्यादनाश्वासो विनष्टेन तेन घटकार्याकरणात्, तस्माद् भिन्नकालावुत्पादविनाशौ । तथाऽर्थान्तरमुत्पादस्थितिभङ्गाः परस्परतः स्वलक्षणभेदात्, आत्मलाभात्मावस्थानात्महानिस्वभावाः खल्वेते, यत्र च स्वलक्षणभेदस्तत्रार्थान्तरता दृष्टा घटपटादिषु, यत्र चानर्थान्तरता न तत्र स्वलक्षणभेदः, यथैकक्षणवर्तिनि रूप इति । एवं भिन्नाभिन्नकालतोत्पादादीनामर्थान्तरत्वमनर्थान्तरता च स्याद्वादप्रक्रियायां सकलप्रमाणाविरोधिनी सिध्यति, नैकान्तवादेषूत्पादादयः सम्भवन्ति, भेदाभेदादिलक्षणानभ्युपगमात् । तस्मादवस्थितमिदम्—उत्पादव्ययध्रौव्ययुक्तं सदिति ॥ २९ ॥

एवं प्रपञ्चतः सल्लक्षणमुपपाद्योत्तरसूत्रसम्बन्धाय ग्रन्थमुपचिक्षेप भाष्यकारः—

[भाष्यम्–] **अत्राह—गृह्णीमस्तावदेवंलक्षणं सदिति, इदं तु वाच्यम्–तत् किं नित्यमाहोस्विदनित्यमिति ? । अत्रोच्यते—**

**अत्राहे**त्यादि । अत्रावसरे परः प्रश्नयति प्रतिपादितसल्लक्षणानुमोदनाद्वारेण–**गृह्णीमस्तावदेवंलक्षणं सदिति,** एवंविधस्य सत्त्वमनुमन्यामहे युक्त्यागमभाजः । **ताव**च्छब्दः प्रक्रमावद्योतनार्थः, पूर्वमेव सत्त्वं निश्चेयम्, निश्चिते सत्त्वे पश्चान्नित्यताऽनित्यता च चिन्त्या । एवं लक्षणमस्येत्युत्पादादित्रययोगमुल्लिङ्गयति । **इति**शब्दो हेत्वर्थः । यस्माद् सत् तस्मात् **इदं तु वाच्यम्–तत् किं**

---

त्मकध्रौव्यमपीत्यर्थः । **द्रव्यात्मरूपमजहदिति,** पर्यायात्मनोत्पादविनाशेऽपि द्रव्यात्मना स्थितिस्वरूपमत्यजदित्यर्थः । **स्वात्मनि वर्त्तते** स्वस्वरूपेऽवतिष्ठते, तथा च द्रव्यस्य स्वस्वरूपे संयोगाद्यतिरिक्तसम्बन्धस्याभावेऽपि तादात्म्यमेव सम्बन्धः, तेन सम्बन्धेन तस्य स्वस्मिन्वृत्तिर्न विरुध्यतेऽतो द्रव्यस्यापि द्रव्यधर्मत्वमविरुद्धमिति भावः । एवं सति यन्निष्पन्नं तदाह–**ततश्चेति** । **एवम्** उक्तप्रकारेण । **प्रत्येकेति,** उत्पादधर्मकस्य द्रव्यस्योत्पादकालवृत्तित्वमेवं स्थित्यात्मनस्तत्कालवृत्तित्वं विनाशात्मनो विनाशकालवृत्तित्वमित्येवं विभिन्नकालवृत्तित्वादुत्पादादयो विभिन्ना इत्यर्थः, अनुमानप्रयोगश्चेत्थम्–उत्पादादयो नान्योन्यमेकता बिभर्त्ति अत्यन्तपृथग्भूतरूपत्वादत्यन्तभिन्नकालत्वाच्च घटव्योमादिवदिति । उक्तसाध्यहेत्वोरविनाभावं दृष्टान्ते प्रकटयति–**पटव्योमादीनामिति** । उत्पादविनाशयोस्तुल्यकालत्वाभावे दृष्टान्तान्तरमाह–**यो वे**त्यादिना । **तयोः,** वर्षमात्रजीविशतवर्षजीविनोः । **क्रियाफलानाश्वासप्रसङ्गादिति** यदुक्तं तदेवोपपादयति–**यदीति** । उत्पादादीनामर्थान्तरत्वं साधयत्यनुमानेन–**तथार्थान्तरेति** । उत्पादादीनां लक्षणभेदमुपदर्शयति–**आत्मलाभेत्यादि,** आत्मलाभ उत्पादस्य लक्षणम्, आत्मावस्थानं स्थितेर्लक्षणम्, आत्महानिर्भङ्गस्य लक्षणमिति । **एते** उत्पादस्थितिभङ्गाः । अन्वयव्याप्तिमुपदर्शयति–**यत्र च स्वलक्षणभेद इति** । व्यतिरेकव्याप्तिमादर्शयति–**यत्र चानर्थान्तरतेति** । सिद्धे चोत्पादादीनामर्थान्तरत्वेऽनर्थान्तरत्वे स्याद्वादप्रक्रियायां न कस्यचिद्विरोध इत्युपसहरति–**एवमिति** । एकान्तवादेषु नोत्पादादीनां सम्भव इत्युपदर्शयति–**नैकान्तवादेष्विति** । एकोनत्रिंशत्तमसूत्रप्रतिपाद्यं सल्लक्षणमनवद्यमित्युपसहरति–**तस्मादवस्थितेति,** ॥ २९ ॥

उत्तरसूत्रभूमिकामवतारयति–**एवं प्रपञ्चत इति** । सतो नित्यत्वानित्यत्वे एव कुतो न लक्षणात् पूर्वं विचारिते इत्यपेक्षायामाह–**पूर्वमेवेति,** सच्च धर्मिस्वरूपं तस्य नित्यत्वमनित्यत्वं वा धर्मः, धर्मिणोऽनिर्णीतस्वरूपत्वे कस्य धर्मतया तद्भवतिष्ठेतेति धर्मिस्वरूपप्रतिपत्त्यर्थं युक्तमेव स्वरूपलक्षणस्य प्रथममभिधानमिति, एवंलक्षणमिति शब्दः समासरूप इत्यावेदनायाह–**एवं लक्षणमस्येति,** तदेवंलक्षणमिति द्रष्टव्यम् । अनेन किमुक्तं भवतीत्यपेक्षायामाह–**इत्युत्पादादित्रयेति** । **उल्लिङ्गयति,** ज्ञापयति । सदितीत्यत्रेतिपदस्यार्थं व्याचष्टे–**इतिशब्दो हेत्वर्थ इति** । हेत्वर्थत्वे यदुक्तं भवति तदाह–

**नित्यमाहोस्विदनित्यमिति ?** तुशब्दस्तस्मादित्यस्यार्थमभिधत्ते, तदिति सतः परामर्शः, तत् सत् किं नित्यमनित्यमिति । सप्तसु विकल्पेषु सति सम्भवत्सु प्रश्नद्वयोपन्यासः किमर्थ इति चेत्, उच्यते—द्रव्यास्तिकपर्यायास्तिकसम्परिग्रहार्थः, तत्सम्परिग्रहाच्च शेषविकल्पसूचनमवसेयम् । कुतः पुनरियमारेका प्रष्टुः ? उच्यते—सतां नित्यानित्यत्वदर्शनात्, सद् व्योमादि नित्यं दृष्टं सच्च घटादि अनित्यमतः सन्देहः । अथवा आदाविदमुक्तम्—"नित्यावस्थितान्यरूपाणि" (अ० ५, सू० ३) इति, तत्रैवं मन्यते—न सर्वं सन्नित्यमरूपग्रहणात्, रूपवतस्त्वनित्यत्वमर्थादतो न सत् नित्यं नाप्यनित्यमितीष्यतेऽवस्थित्यंशाङ्गीकरणेन रूपवदपि नित्यम् । यथाऽऽह भगवान्—"से जहा णामए पंचत्थिकाया सिया" इत्यादि सूत्रम् । अन्यथा तूत्पादव्ययध्रौव्ययुक्तं सदित्यव्यापि सल्लक्षणं स्यात्, अत इदं तु वाच्यम्—तत् किं सर्वथा नित्यमाहोस्वित् स्थित्यंशसमाश्रयणेनैव नित्यमिति ? । आचार्यस्तु स्थित्यंशमभिप्रेत्याह—**अत्रोच्यते** ॥

## [सूत्रम्-] तद्भावाव्ययं नित्यम् ॥ ५-३० ॥

तदित्यनेनाभिसम्बध्यते सत्, तस्य—सतो भवनं—भावस्तद्भावः, कर्तरि षष्ठी, तदेव हि सत् तथा तथा भवति जीवादि देवादिरूपेण, न जातुचित् सत्त्वत्यागेनान्यथा भवति, तद्भावादव्ययं **तद्भावाव्ययम्** अविनाशि **नित्यम्**, नित्यग्रहणात् ध्रौव्यांशपरिग्रहः, "नेर्ध्रुवे त्यप्" इति वचनात्,

---

**यस्मादिति । इदन्तु वाच्यमिति** वाक्यमध्यपतितस्तुशब्दस्तस्मादित्यर्थे इत्याह—**तुशब्द इति । तत्किमित्यत्र** तच्छब्देन कस्य ग्रहणमित्यपेक्षायामाह—**तदितीति ।** प्रश्नवशाद्विधिनिषेधकल्पनया सप्तभङ्गीत्यादिग्रन्थव्याख्याने धर्माणां सप्तविधत्वं ततस्तद्विषयकसंशयानामपि सप्तविधत्वं ततस्तज्जन्यानां जिज्ञासानामपि सप्तविधत्वं ततस्तज्ज्ञापकप्रश्नानामपि सप्तविधत्वन्तत उत्तरवाक्यस्यापि सप्तविधत्वमिति उत्तरवाक्यसमुदायस्य सप्तभङ्गीरूपतयैव पूर्णत्वमन्यत्र निष्टङ्कितमस्तीति सप्तविधप्रश्नोपन्यास एव न्यायप्राप्त इति तमुपेक्ष्य प्रश्नद्वयोपन्यासे किं बीजमिति परः पृच्छति—**सप्तसु विकल्पेष्विति,** किं नित्यं सत् १, किमनित्यं सत् २, किं नित्यमनित्यं च सत् ३, किमवक्तव्यं सत् ४, कि नित्यमवक्तव्यं च सत् ५, किमनित्यमवक्तव्यं च सत् ६, किं नित्यमनित्यमवक्तव्यं च सद् ७ इत्येवं सप्तसु विकल्पेष्वित्यर्थः । द्रव्यास्तिकनयोत्थः प्रथमो विकल्पः पर्यायास्तिकनयोत्थो द्वितीयः, तृतीयादिधर्माणां विधिनिषेधद्वयक्रमयुगपद्भावकल्पनालब्धात्मत्वेन तद्विषयकप्रश्नानामप्याक्षेपतो लाभसंभवादित्याशयेन समाधत्ते—**उच्यत इति ।** ननु विधिनिषेधकोटिसहचरितधर्मवद्धर्मिज्ञानादित एव संशयः प्रादुरस्ति ततो जिज्ञासाद्वारा प्रश्नाविर्भावः प्रकृते किन्तच्छङ्कानिबन्धनमिति प्रश्नयति—**कुत इति ।** साधारणधर्मवद्धर्मिज्ञानादेवात्र संशयः, साधारणधर्मश्च सत्त्वमेव, तस्य नित्ये व्योम्नि अनित्ये घटादौ च सत्त्वेन नित्यत्वानित्यत्वोभयसहचरितत्वेन साधारणधर्मत्वसंभवादित्याशयेनोत्तरयति—**उच्यत इति ।** उक्तप्रश्नोत्थापने प्रकारान्तरमादर्शयति—**अथवेति । आदौ** पञ्चमाध्यायस्यादौ । **इदं** नित्यावस्थितेत्याद्यनन्तरमेव प्रत्यक्षगोचरीक्रियमाणं तृतीयसूत्रम् । **तत्र** तस्मिन् सूत्रे, **एवं न सर्वमि**त्यादि वक्ष्यमाणप्रकारम् । **मन्यते** प्रष्टाऽभिजानाति । **अर्थादिति,** अरूपग्रहणान्यथाऽनुपपत्त्येत्यर्थः । नन्वेवमरूपिद्रव्याणां नित्यत्वं रूपिद्रव्याणाञ्चानित्यत्वं तेन सूत्रेण प्रतिपन्नमेवेति प्रतिनियतधर्मिनिश्चितयोस्तयोर्धर्म्यन्तराभावादेव न भवति संशयावकाश इत्यत आह—**अवस्थित्यंशाङ्गीकरणेन चेति ।** तदनङ्गीकारे उत्पादव्ययध्रौव्ययुक्तं सदिति सल्लक्षणमेव न तत्र समन्वियादित्यव्यापिता सल्लक्षणस्य प्रसज्येतेत्याह—**अन्यथेति ।** एवं सल्लक्षणानुगमानुरोधान्नित्यत्वं ध्रौव्यांशमादाय अनित्यत्वञ्चोत्पादव्ययांशमुपादायेति कोटिद्वयनिश्चये पुनरपि संशयोऽनुपपन्न इत्यत आह—**अत इदन्तु वाच्यमिति । तत्** सद्रूपम् । **अभिसम्बध्यते** वाच्यतया सम्बध्यते परामृष्यत इति यावत् । **तस्य भाव** इत्यत्र षष्ठी कर्त्रभिधायिकेत्याह—**कर्त्तरि षष्ठीति ।** तच्छब्दार्थस्य सतो भवनं प्रति कर्त्तृत्वे स्यादियं षष्ठी कर्त्रर्थतयोपपन्नेत्यतः सतो भवनम्प्रति कर्त्तृत्वमुपपादयति—**तदेव हीत्यादिना ।** जीवादिद्रव्यादिपरिणमनदशायामपि सद्रूपता नापैतीत्याह—**न जातुचिदिति । अन्यथा** पर्यायात्मना । **तद्भावाव्ययमित्यत्र**

स ह्यन्वयी द्रव्यास्तिकांशः सर्वदा सर्वत्र न विच्छिद्यते, सदाकारेणानुत्पत्तेरविनाशाच्च, भावशब्दोपादानात् परिणामनित्यता गृह्यते, कूटस्थनित्यता त्यज्यते, अन्यथा 'तदव्ययं नित्य'मिति सूत्रं स्यात्, यत् तु न केनचिदाकारेण विक्रियते तदनुपाख्यमेव भवेत्, सत्त्वं च सर्वेषामन्वयिनां धर्माणां सूचकम्, पञ्चास्तिकायव्यापित्वात् तु सत्त्वपरिग्रहः । साक्षाज्जीवस्तावत् सत्त्वं चैतन्यममूर्तत्वमसङ्ख्येयप्रदेशत्वं चाजहत् तथातथापरिणामान्न व्यगात् न व्येति न व्येष्यत्यविनाश्यव्ययो नित्य उच्यते, न पुनर्देवादिपर्यायेणाप्यनन्वयिना नित्यता ध्रौव्यमस्य विद्यते; तथा परमाणुद्व्यणुकादिपुद्गलद्रव्यं सत्त्वमूर्तत्वाजीवत्वानुपयोगग्राह्यादिधर्मानपरित्यजद् विवर्तते, न घटादिपर्यायविवक्षया ध्रौव्यम्; धर्मद्रव्यमपि सत्त्वामूर्तत्वासङ्ख्येयप्रदेशवत्त्वलोकव्यापित्वादिधर्मात्यागेनावतिष्ठते, न तु परमाणुदेवदत्तादीनां प्रत्येकं गन्तृत्वस्य विवक्षायां गत्युपकारित्वेन नित्यत्वम्, गन्तृभेदाद्धि गत्युपकारित्वं भिद्यते, अन्यादृशाकारेण पूर्वः परिणामोऽन्यादृशेनाकारेण पाश्चात्यः, नहि प्रथमतरमुत्पन्नो गत्युपकारित्वपरिणामः सर्वदाऽवतिष्ठते, स्वरूपव्यतिरिक्तवस्तुसम्बन्धितयोपजायमानत्वाद् घटादिवत्; एवमधर्मद्रव्यमपि द्रष्टव्यम्, स्थित्युपकारितया चानित्यत्वभावना; आकाशं तु सत्त्वामूर्तत्वानन्तप्रदेशवत्त्वादिधर्मद्वारेण नित्यम्, अवगाहकापेक्षयाऽवगाहदातृत्वेनानित्यम्, यत्राप्यवगाहकं जीवपुद्गलं नास्ति तत्राप्य-

---

पञ्चमीतत्पुरुष इत्याह–**तद्भावादव्ययमिति,** यदापि पर्यायो नश्यति तदापि एतद्भावो विद्यत एवेत्याशयः । **स हि** ध्रौव्यांशो हि, **अन्वयी** पूर्वोत्तरपर्यायानुस्यूतः, अत एव **द्रव्यास्तिकांशः** द्रव्यास्तिकनयाभिमतोऽशः । **तदव्ययं नित्यमित्येव** वक्तुमुचितं भावपदोपादानमनर्थकमिति न वक्तव्यं, प्रतिक्षणं तत्तत्पर्यायरूपेण परिविवर्त्तत एव तत्, पर्यायस्य च कथञ्चित्सदात्मकत्वेन तदुत्पादे तद्रूपेणोत्पादोऽपि, पर्यायस्य विनाशे तद्रूपेण विनाशोऽपि, तथा परिणमनं च सत एवेति तदात्मनाऽवस्थानमपीति कथञ्चिन्नित्यत्वावगतये भावपदोपादानमित्याह–**भावशब्दोपादानादिति । परिणामनित्यतेति,** पूर्वोत्तराकारपरित्यागोपादाना जहद्वृत्तिध्रौव्यतेत्यर्थः । **कूटस्थनित्यतेति,** अप्रच्युतानुत्पन्नस्थिरैकस्वभावतेत्यर्थः । ननु कूटस्थनित्यतैव कुतो न सूत्रकृदभिमता, तदनुसारेणैव सूक्ष्मार्थकस्य सूत्रस्य व्याख्यातुं शक्यत्वादित्यत आह–**अन्यथेति,** कूटस्थनित्यतात्यागाभाव इत्यर्थः । ननु कूटस्थनित्यतामुररीकृत्य तदव्ययं नित्यमित्येव सूत्रं कथन्न कृतमित्यत आह–**यत्त्विति,** कूटस्थनित्यस्य केनचिदप्याकारेण परिणामविक्रियाभावेऽर्थक्रियाकारित्वलक्षणसत्त्वाभावाच्छशशृङ्गकल्पत्वमेव स्यादिति भावः । ननु **तद्भावाव्ययमित्यत्र** तद्भावपदेन सत्त्वस्य ग्रहणं भवता कृतमेतावता सत्त्वेन रूपेण सर्वेषा पदार्थानामव्ययत्वान्नित्यत्वं प्राप्तं, जीवत्वेन जीवस्य पुद्गलत्वेन पुद्गलस्य धर्मास्तिकायत्वादिना धर्मास्तिकायादेर्नित्यत्वन्तु न प्राप्तं तत्किं जीवोऽप्यजीवतामुपगच्छति पुद्गलादिरप्यपुद्गलादिरूपताम् ?, न चैवमिष्टम्भवतामित्यत आह–**सत्त्वं चेति ।** ननु यदि सत्त्वं सर्वेषामन्वयिनामुपलक्षणं तत्किमन्वयिधर्मान्तरमेव कुतो न साक्षादुपन्यस्तं तदप्युपन्यस्तं सदन्वयिधर्मान्तरमुपलक्षयेदेवेत्यत आह–**पञ्चास्तिकायेति । साक्षादिति** पूर्वान्वयि, तथा चाणुरपि विशेषोऽध्यवसायकर इति न्यायादन्यधर्मापेक्षया सत्त्वस्य सर्वव्यापित्वं विशेष इति कृत्वा तस्यैव साक्षादुपनिबन्धनमित्यर्थः । तद्भावाव्ययत्वलक्षणं नित्यत्वं जीवे सङ्गमयति–**जीवस्तावदिति ।** सत्त्वचैतन्यादिरूपेणैव जीवस्य नित्यत्वं न तु देवत्वादिनेत्याह–**न पुनर्देवादिपर्यायेणेति ।** पुद्गलास्तिकाये उक्तनित्यत्वलक्षणं सङ्गमयति–**तथा परमाणुद्व्यणुकादीति । अनुपयोगग्राह्यादीति,** अनुपयोगत्वे सति ग्राह्यत्वेत्यर्थः । तेन ग्राह्यत्वस्य जीवसाधारण्येऽपि न क्षतिः, घटत्वादिना तु न पुद्गलस्य नित्यत्वमित्याह–**न घटादीति ।** धर्मास्तिकाये उक्तलक्षणं सङ्गमयति–**धर्मद्रव्यमपीति ।** परमाण्वादिगत्युपकारित्वादिना तु न धर्मास्तिकायस्य नित्यत्वमित्याह–**न तु परमाणुदेवदत्तादीनामिति ।** कुतो न तथानित्यत्वमित्यपेक्षायामाह–**गन्तृभेदाद्धीति ।** एतदेव प्रपञ्चत उपदर्शयति–**अन्यादृशाकारेणेति ।** सर्वदाऽवस्थानाभावे हेतुमाह–**स्वरूपव्यतिरिक्तेति ।** धर्मास्तिकाये येन रूपेण नित्यत्वं तेनैवाधर्मास्तिकायेऽपीत्यतिदिशति–**एवमधर्मद्रव्यमपीति,** धर्मास्तिकायतोऽनित्यत्वभावनायामत्र यो विशेषस्तमाह–**स्थित्युपकारितया चेति ।** आकाश उक्तलक्षणं सङ्गमयति–**आकाशन्त्विति ।** अनित्यत्वं तत्रोपपादयति–**अवगाहकापेक्षयेति,** ननु धर्मास्तिकायादीनां गन्त्रादिभेदेऽपि

गुरुलघ्वादिपर्यायवत्तयाऽवश्यंतयैवानित्यताऽभ्युपेया; ते त्वन्ये चान्ये च भवन्ति, अन्यथा तत्र न स्वत उत्पादव्ययौ नाप्यापेक्षिकाविति न्यूनमेव सल्लक्षणं स्यात्, इमामेव परिणामनित्यतां भाष्येण दर्शयति—

[भाष्यम्–] **यत् सतो भावान्न व्येति न व्येष्यति तन्नित्यमिति ॥ ३० ॥**

**यत् सत** इत्यादि । सत्त्वादेरन्वयिनोंऽशान्न व्येति न विनश्यति नापि विनङ्क्ष्यति तन्नित्यम् । किं पुनः कारणमप्रवृत्तः कालो नोदाहृतः ?, एवं मन्यते भाष्यकारः—नातीतप्रत्याख्याने वर्तमानः सम्भवति, वर्तमानावधिकमेवातीतत्वम्, अतीतासत्त्वे निर्मूलस्य वस्तुनोऽनुत्थानप्रसङ्गात्, तस्मादनादि जीवादि सत्त्वादि; एवं तर्हि भविष्यतो ग्रहणं किमर्थम् ?, अत्राप्येवं मन्यते—केचिदविविक्तबुद्धयः प्रत्याख्यापयन्ति—न वर्तमानकालावच्छिन्नस्य वस्तुनः कदाचिद् भविष्यत्कालाभिसम्बन्ध इति, तन्निषेधार्थं भविष्यद्ग्रहणम् । अथवा तद्भावेनाव्ययम्, तेन सदात्मना स्थित्यंशेनाविगतं परिणामापत्तौ सत्यामपि स्वभावाप्रच्युतेर्नित्यमुच्यते, तमेव च ध्रौव्यांशमाश्रित्य समस्तास्तिकायेषु नित्यताव्यवहारः प्रतीयते । अथवा भूतिर्भावः स्वात्मेत्यर्थः, स चासौ भावश्च तद्भावः; कश्चासौ ?, यः सर्वास्ववस्थासु निर्विकारः शुद्धा द्रव्यास्तिकनयप्रकृतिरविवक्षितसकलभेदग्रन्थिः, अयो-गमनं विरुद्धोऽयो व्ययस्तद्भावस्य च विरुद्धगमनमभावापत्तिः, न व्ययोऽव्ययः, न जातुचित् तद्भावोऽभावो भवतीति वाक्यार्थः; ध्रौव्याभिसम्बन्धाच्च नपुंसकनिर्देशः, तद्भावश्चासावव्ययं च तद्भावाव्ययम्, किं तत् ?, प्रकृतत्वादेवंविध-

---

पूर्वस्वभाववत्वेति कथमनित्यत्वमत आह–**ते त्विति,** धर्मास्तिकायादयस्त्वित्यर्थः । इत्थमनभ्युपगमे दण्डमाह–**अन्यथेति** । **तत्र** धर्मास्तिकायादौ । **न्यूनमेव** उत्पादव्ययरहितं ध्रौव्यमेव । भाष्यमवतारयति–**इमामेवेति** । **सतो भावादित्यस्य** व्याख्यानम्–सत्त्वादेरन्वयिनोंऽशादिति, एतत्सत्त्वस्यान्वयिधर्मान्तरसूचकत्वं यत्पूर्वमुक्तन्तदभिसन्धाय । **न व्येतीति** मूलप्रतीकमुपादाय न विनश्यतीति विवरणम् । **न व्येष्यतीत्यस्य** विवरणम्–नापि विनङ्क्ष्यतीति । भाष्येऽतीतकालोत्पन्नध्वंसोपादानाभावे कारणं पृच्छति–**किं पुनरिति** । **अप्रवृत्तः,** अतीतः । उत्तरयति–**एवं मन्यत इति** । मन्तव्यमेवोपनिबध्नाति–**नातीतेति,** न वर्त्तमानकालमविज्ञायातीतत्वं ज्ञातुं शक्यते यतो वर्त्तमानकालवृत्तिध्वंसप्रतियोगित्वमेवातीतत्वमतः प्रथमतो वर्त्तमानस्योपन्यास आवश्यकः । वर्त्तमानश्च पूर्वकारणक एव न तद्विना भवितुमर्हतीत्यर्थाक्षिप्त एवातीत इति तदनुपन्यासेऽपि न न्यूनतेत्याशयेनाह–**वर्त्तमानावधिकेति** । ननु भविष्यत्त्वमपि वर्त्तमानकालवृत्तिप्रागभावप्रतियोगित्वमिति वर्त्तमानावधिकमेवेति तदुपादानमपि न न्याय्यमित्याशयेन पृच्छति–**एवं तर्हीति** । उत्तरयति–**अत्राप्येवमिति** । **मन्यते,** भाष्यकारो मन्यते । मन्तव्यस्वरूपमुपनिबध्नाति–**केचिदित्यादि भविष्यद्ग्रहणमित्यन्तेन** । **यत्सतो भावादिति** भाष्यानुसारेण तद्भावादव्ययं तद्भावाव्ययमिति व्याख्यातमिदानी तद्भावेनाव्ययं तद्भावस्याव्ययं तद्भावाव्ययमिति तृतीयाषष्ठ्योराश्रयणेन क्रमेणोक्तसूत्रं व्याख्यानयति–**अथवेति** । **तद्भावेनेत्यस्य** व्याख्यानम्–तेन सदात्मना स्थित्यंशेनेति । **अव्ययमपीत्यस्य** व्याख्यानम्–अविगतमिति । कथमविगतमित्यपेक्षाया तत्र हेतुरुक्तः–**परिणामापत्तौ सत्यामपि स्वभावाप्रच्युतेरिति** । **तद्भावेनेति** तृतीयापक्षाश्रितं व्याख्यानमुपदर्श्य **तद्भावस्येति** षष्ठीपक्षाश्रितं व्याख्यानमाह–**अथवेति** । **तद्भाव** इत्यत्र कर्मधारय इत्याह–**स चासाविति** । तद्भावपदेन क उच्यते इति पृच्छति–**कश्चासाविति** । उत्तरयति–**य इति** । शुद्धेति यदुक्तं विशेषणं तस्यैव विशिष्य ख्यापनम्–**अविवक्षितसकलभेदग्रन्थिरिति,** असकलभेदग्रन्थिरित्येव कुतो नोक्तमिति न शङ्क्यम्, सकलविशेषरहितस्य सामान्यस्यानुगामिनो ध्रौव्यांशस्य वस्तुतोऽभावात्, सतामपि भेदानामविवक्षा च द्रव्यनयादेशात्सम्भवतीति । **तद्भावाव्ययमित्यत्र** नपुंसकनिर्देशे बीजमाह–**ध्रौव्येति,** तद्भावाव्ययमित्यनेन ध्रौव्यमेवाभिमतं तस्य नपुंसकत्वान्नपुंसकनिर्देशः । न व्ययोऽव्यय इति व्याख्याने तद्भावस्येति षष्ठी, न व्ययो यस्य तदव्ययमिति व्याख्याने प्रथमैवादर्त्तव्येत्यभिसन्धानेनाह–**तद्भावश्चासावव्ययं चेति** । अवश्यञ्च षष्ठीपक्षोऽप्यादर्त्तव्योऽन्यथा तृतीया-

विशेषणसामर्थ्याद् ध्रौव्यं नित्यशब्देनाभिधीयते; भाष्ये च यद्यपि भाष्यकृता पञ्चमी प्रदर्शिता विवक्षावशात् तथापि विवक्षितस्यार्थस्याभिन्नत्वात् तृतीयापञ्चम्योर्न दोषः । ननु च प्रागपि नित्यावस्थितान्यरूपाणीत्यत्र ( तृतीये ) सूत्रे नित्यग्रहणं ध्रौव्यार्थमेव व्याख्यायि भवता, तत् किमर्थमिदमुच्यते 'तद्भावाव्ययं नित्यम्' इति ?, अत्रोच्यते–इह नित्यस्य लक्षणमभिधित्सितम्, लक्षितेन चेह नित्यत्वेन तत्र व्यवहारः प्रदर्शितः ॥ अपरे त्वेवं वर्णयन्ति—द्वे नित्यते, तत्रैका स्वभावाप्रच्युत्या कालत्रयाव्यभिचारिणी नित्यता, अपरा पारम्पर्यप्रवृत्तिनित्यता, तत्र च प्राच्यां नित्यतामाश्रित्य नित्यावस्थितान्यरूपाणीति पठितम्, परम्परावृत्त्यवच्छेदमधिकृत्योत्पादव्ययध्रौव्यसूत्रमध्यगायीति; एतदपि यत्किञ्चित्, यतस्तद्भावाव्ययं नित्यमित्येकमेव नित्यलक्षणं लक्षणान्तरानभिधानाच्च कथं द्वे नित्यते ?, नित्यप्रहसितादिषु दृष्टेति चेत्, तदयुक्तम्, अभीक्ष्णार्थाभिधायित्वादर्थान्तरवृत्तिस्तत्र नित्यशब्दः, तत्त्वविचारप्रस्तावे च न किञ्चिदुपचारेण प्रयोजनम्, अतो व्यवस्थितमेव लक्षणं तद्भावाव्ययं नित्यमिति ॥ एवमन्वय्यंशो नित्यत्वेन लक्षितो द्रव्यनयस्वभावः । पर्यायनयस्वभावौ तूत्पादविनाशावभूतभावभूताभावलक्षणावुक्तन्यायेन स्थित्यंशप्रतिबद्धौ । स्थितिरपि पर्यायप्रतिबद्धा, सर्वदा संसर्गरूपत्वाद् वस्तुनः, एवमेकाधिकरणावुत्पादविनाशौ जैन एव शासने साङ्गत्यमनुभवतोऽन्यत्र तु व्यधिकरणावेवोत्पादविनाशौ नियतौ वेति ॥ नन्वेवमपि यथा तद् द्रव्यमात्मापरित्यागात् तथोत्पादविनाशलक्षणः पर्यायोऽपि आत्म-

---

षष्ठ्योरित्युत्तरग्रन्थासङ्गतिः स्यात्, तद्भावश्चासावव्ययं चेतिस्थाने तद्भावस्याव्ययमिति पाठे भवति सर्वथा ग्रन्थपरिशुद्धि । नन्वेवं व्याख्याने तद्भावाव्ययमित्यनेन कस्याभिलपनमिति पृच्छति–**किन्तदिति** । उत्तरयति–**प्रकृतत्वादिति** । सूत्रस्थनित्यमित्यस्य नित्यशब्देनाभिधीयत इत्यर्थं इत्याह–**नित्यशब्देनाभिधीयते इति** । ननु नित्यावस्थितान्यरूपीणीति तृतीयसूत्रे नित्यपदेन ध्रौव्यमेवोक्तमिति गतार्थत्वान्नेदं सूत्रमारब्धव्यमित्याशङ्कते–**ननु चेति** । **इह** तद्भावाव्ययं नित्यमिति सूत्रे । **लक्षितेनेति,** इह लक्षितेन नित्यत्वेनेति सम्बन्धः । **तत्र** नित्यावस्थितान्यरूपाणीतिसूत्रे, अत एवोक्तं तत्र भाष्ये तद्भावाव्ययं नित्यमिति च वक्ष्यते इति । **तत्र** तयोर्मध्ये । **प्राच्यां** स्वभावाप्रच्युत्या कालत्रयाव्यभिचारिणीम् । **परम्परावृत्त्यवच्छेदमधिकृत्य** पारम्पर्यप्रवृत्तिलक्षणनित्यता द्वितीयामाश्रित्य । जैनराद्धान्ते तद्भावाव्ययं नित्यमित्येकलक्षणलक्षितमेकमेव नित्यत्वं द्वितीया नित्यतैव नास्तीति नित्यताद्वयमुपादाय सूत्रद्वयसङ्गमना न युक्तेत्याह–**एतदपि यत्किञ्चिदिति** । नित्यताद्वयाभिमानी शङ्कते–**नित्यप्रहसितादिष्विति** । औपचारिकोऽयं तत्र नित्यशब्दो न वास्तविकीं द्वितीया नित्यतां गमयितुमीष्टे इत्युत्तरयति–**तदयुक्तमिति** । प्रकृतमनुसरन्नाह–**एवमिति,** उक्तसूत्रोपदर्शितप्रकारेणेत्यर्थः । **अन्वय्यंशः,** ध्रौव्यांशः । स च द्रव्यनयविषयत्वाद्द्रव्यनयस्वभाव इति विषयविषयिणोरभेदमाश्रित्य ध्रौव्यस्य द्रव्यनयस्वभावत्वे उत्पादव्यययोः पर्यायनयस्वभावत्वं प्राप्तमेव कण्ठतोऽसन्दिग्धप्रतिपत्तये उपदर्शयति–**पर्यायनयस्वभावाविति,** इयमपि विषयविषयिणोरभेदमवलम्ब्योक्तिः । **उत्पादविनाशावभूतभावभूताभावलक्षणाविति,** अभूतस्य प्रागसतो भाव आत्मलाभस्तल्लक्षण उत्पादः, भूतस्य प्राक् सतोऽभावोऽसत्त्वन्तल्लक्षणो विनाश इत्यर्थः । **उक्तन्यायेनेति,** एकान्तोत्पादादीनामसम्भवावेदकयुक्तिकदम्बेनेत्यर्थः । **पर्यायेति,** उत्पादव्ययेत्यर्थः । अत्र हेतुः–वस्तुनः परिणामिस्वभावत्वं नापरिणम्य कञ्चित्कालमवतिष्ठत इति प्रतिक्षणमपूर्वापूर्वपर्यायसम्बन्धो वस्तुनि भवत्येव, स च नोत्पादव्ययावन्तरेणेत्यभिसन्धिः । जैनराद्धान्तस्याभ्यदर्शनापेक्षयाऽत्रार्थे उत्कर्षमाविर्भावयति–**एवमेकेति** । **अन्यत्र** जैनातिरिक्तदर्शने । **व्यधिकरणाविति,** भिन्नकालिकत्वाद्विभिन्नव्यक्तिगतत्वाच्च, आद्यक्षणसम्बन्धलक्षण उत्पादो घटे विनाशश्च तस्य कपाल इति । **नियतौ वेतीति,** यस्य भावस्योत्पादस्तस्य नोत्पत्तेः पूर्वं सत्त्वं यस्य विनाशस्तस्य न विनाशानन्तरं सत्त्वं ध्रौव्यांशानभ्युपगमादित्येवं नियतावैकान्तिकावित्यर्थः । ननु मृदादिरूपेण ध्रौव्यमेव वस्तुनोऽभिमतं तन्न सङ्गच्छते मृदादीना मृदादिर्यथाऽऽत्मा तथा पर्यायोऽप्यात्मैव, तथा च पर्यायनाशादात्मनिवृत्त्या मृदादिरूपेणापि निवर्त्तितव्यमिति मृदादिरूपेण ध्रौव्यं कुत इति परः प्रश्नयति–**नन्वेवमपीति,** **एवमपि** उत्पादव्ययस्थितीना परस्परप्रतिबद्धत्वेऽपि । **तत्** मृदादि । **द्रव्यं** ध्रौव्यात्मकम् । **आत्माऽपरित्या-**

भूतो द्रव्यस्येत्यतः पर्यायनिवृत्तिवद् द्रव्यनिवृत्तिप्रसङ्ग इति। अत्रोच्यते—स्यादेतदेवं, यदि घटादिनिवृत्तौ मृन्निवृत्तिर्दृश्येत, मृन्निवृत्तौ वा पुद्गलनिवृत्तिः, न च दृश्यते मृदोऽन्वयिन्याः पुद्गलजातेर्वा कस्यांचिदवस्थायां निवृत्तिस्तदभिधानप्रत्ययव्यवहार्यत्वात्, घटादिनिवृत्तौ वा यदि न किञ्चित् पश्चादुपलभ्येत श्रद्दधीत विद्वज्जनः पर्यायनिवृत्तौ द्रव्यांशनिवृत्तिः, न च प्रत्यक्षविरोधे तर्कः क्रमत इत्यपकर्ण्यमेतत्। एवमुपपत्त्यागमाभ्यामवस्थितं तद्भावाव्ययं नित्यमिति ॥ ३० ॥

एवं सूत्रद्वयेन निरूपिते समस्ते वस्तुन्यर्थाभिधानप्रत्ययरूपे स्थित्युत्पत्तिव्ययस्वभावे पुनर्विस्तरविशेषार्थी पर आरेकाते—यद् व्येत्युत्पद्यते च तत् सन्नित्यं चेत्यतिसाहसम्, अथवा न किञ्चिदसदनित्यं वा, सन्नित्यत्वाभ्यां निराकृतत्वात्, ततो लोकव्यवहारोच्छेदः, तदेतद् दुरुपपादत्वाद् दुःश्रद्धानत्वाच्चासङ्गतम्, नित्यता ह्युत्पादव्ययौ विरुणद्धि, उत्पादव्ययौ च नित्यतां विरुन्धाते, सोऽयं छायातपवदसहावस्थानलक्षणविरोधाघ्रातपक्षो न विद्वज्जनमनांसि प्रीणयतीति; अत्रोच्यते—श्रद्धत्तां भवानुपपाद्यमानं यथा न कश्चिद् विरोधः समस्ति, यथा चात्रैव लोकव्यवहारसङ्गतिर्द्रव्यास्तिकपर्यायास्तिकनयसम्भवेऽन्यतरप्रधानगुणभावविवक्षाप्रापिते उभे अपि सन्नित्यत्वे तत्प्रतिपक्षभूते वाऽसदनित्यत्वे ॥

---

**वात्**, मृदादिस्वरूपाप्रच्युतेः। **आत्मभूतः** स्वरूपम्। **द्रव्यस्य** मृदादेः। **पर्यायनिवृत्तिवत्** घटशरावोदञ्चनादिनिवृत्तिवत्। **द्रव्यनिवृत्तिप्रसङ्ग इति,** यस्मिन्क्षणे घटादिपर्यायनिवृत्तिस्तस्मिन्क्षणे मृदादिस्वरूपस्यापि निवृत्तिः स्याद्वस्तुनस्त्र्यात्मकत्वेन त्रितयनिवृत्तावेव वस्तुनिवृत्तिरुचिता स्यादन्यथा घटोऽपि न निवर्तेत, तदाऽऽत्मभूताया मृदोऽनिवृत्तेरित्यर्थः। कल्पना हि दृष्टानुसारिणी भवति, यथादृष्टं नातिक्रामति, दृश्यते च घटादिपर्यायस्यैव निवृत्तिर्न तु मृदादेरनुगामिन इति पर्यायनिवृत्त्यैव निवृत्तिव्यवहारो न तु मृदादिनिवृत्त्येति समाधत्ते—**अत्रोच्यत इति।** **एतत्** पर्यायनिवृत्तिवद्द्रव्यनिवृत्तिप्रसञ्जनम्। **एवम्** उक्तप्रकारेण। **स्यात्** तदा भवेत्। **यदी**त्यस्य **दृश्येते**त्यनेन सम्बन्धः, घटाद्यपेक्षया मृदोऽनुगामित्वं तदपेक्षया पुद्गलस्यानुगामित्वमिति पार्थक्येनोभयोपादानम्। **न च दृश्यत** इत्यस्य **निवृत्तिरि**त्युत्तरेण सम्बन्धः। **मृदोऽन्वयिन्या** इत्यस्य **पुद्गलजातेरि**त्यस्य च **निवृत्ति**रित्यनेन सम्बन्धः। निषेधे हेतुः—**तदभिधानप्रत्ययव्यवहार्यत्वादिति,** घटशरावोदञ्चनादिनिवृत्तावपि तदानीमवस्थिते चूर्णादौ मृत्पुद्गलाद्यभिधानतदाकारप्रत्ययव्यवहार्यत्वादित्यर्थः। अस्यैवोपपादनायाह—**घटादिनिवृत्ताविति।** पर्यायनिवृत्तिवद्द्रव्यनिवृत्तिप्रसञ्जनस्य तर्करूपतया कस्यचित्प्रमाणस्य तद्ग्राहकस्य भावे तत्र सहकारित्वं स्यात्तदभावे च दुर्बलस्य तस्य प्रबलप्रत्यक्षप्रमाणाविरोधेन तर्काभासत्वमेवेत्याह—**न चेति।** उपसंहरति—**एवमुपपत्त्येति** ॥ ३० ॥

अर्पितानर्पितसिद्धेरिति सूत्रमवतारयितुं भूमिकामारचयति—**एवं सूत्रद्वयेनेति। तत्सन्नित्यं चेत्यतिसाहसमिति।** उत्पादव्ययाभ्यां ध्रौव्यलक्षणस्य नित्यत्वस्य विरोधस्तावत्स्फुट एवेति उत्पादव्यययोगिनि ध्रौव्याभिधानस्यासम्बद्धप्रलापत्वादतिसाहसत्वेऽपि सत्त्वस्य न ताभ्यां सह विरोध इति तदभिधानस्य कथमतिसाहसत्वम्?, यदि च सत्त्वं न किञ्चित्कालवृत्तित्वं नवा सत्त्वादिजातिरूपं वेहभिधित्सितं किन्तूत्पादव्ययध्रौव्यात्मकत्वमेव तस्य ध्रौव्यांशमुपादायोत्पादव्ययाभ्यां सह विरोध एवेति विभाव्यते तदा नित्यत्वविरोधेन गतार्थमेतदिति न पृथगुक्त्या प्रयोजनमतः प्रकारान्तरमाश्रयति—**अथवेति।** अत्र सर्वस्य सत्त्वेऽसत्किमपि न स्यात् सर्वस्य नित्यत्वेऽनित्यमपि किञ्चिन्न भवेत्, न च नास्त्येवासत् अनित्यं वा किञ्चिदत आह—**तत इति। लोकेति,** घटो हि उत्पादात्पूर्वं विनाशाच्च पश्चादसन्निति व्यवह्रियते लौकिकपरीक्षकैरनित्यश्चेति, न च लोकमर्यादाऽतिक्रमो न्याय्य इत्यभिसन्धिः। **तदेतत्,** अन्तरसूत्रद्वयप्रतिपाद्यम्, **असङ्गत**मित्यनेन सम्बन्धः। अत्र हेतुः—**दुरुपपादत्वात् दुःश्रद्धानत्वाच्चेति।** उक्तहेतुद्वयोपपादनायाह—**नित्यतेति।** अपेक्षाभेदेनोत्पादव्ययवत्यपि ध्रौव्यस्य ध्रुवे उत्पादव्यययोस्सति असत्त्वस्यासति च सत्त्वस्य नित्येऽनित्यत्वस्यानित्ये नित्यत्वस्य च सम्भवेन न दुरुपपादत्वं नवा दुःश्रद्धानत्वं ततो न लोकव्यवहारोच्छेद इत्याशयेन समाधत्ते—**अत्रोच्यत इति, अत्रैव** स्याद्वादावलोकितवस्तुन्येव। सत्त्वे उत्पादव्ययध्रौव्यात्मकत्वलक्षणे द्रव्यास्तिकनयाद् ध्रौव्यस्य प्राधान्यं पर्यायास्तिकनयगौणभावात्तद्विषययोरुत्पादव्यययोर्गुणभावः, एवं

## [सूत्रम्–] अर्पितानर्पितसिद्धेः ॥ ५–३१ ॥

अपरेऽन्यथाकारं सूत्रसम्बन्धमभिदधते—ध्रौव्यस्य नित्यपर्यायत्वेन लक्षणमुक्तमुत्पादव्यययोरुच्यताम्, नोच्यते, तयोर्लोकप्रतीतत्वात्, सामर्थ्यगतेश्चासदनित्यत्वादीनाम्, अतस्तल्लक्षणं न साक्षाद् वाच्यम्, किं कारणम् ?

[भाष्यम्–] **अर्पितानर्पितसिद्धेः** ॥

अर्पितं निदर्शितमुपात्तं, तद्विपरीतमनर्पितम्, सिद्धिः–ज्ञानम्, अर्पितेनानर्पितपरिज्ञानमर्पितानर्पितसिद्धिस्तस्याः–ततो हेतोर**र्पितानर्पितसिद्धेः**, विशेष्यं हि वस्तु नीलोत्पलादिवदुपादीयमानं नियमकारिविशेषणधर्मप्रत्यनीकपर्यायाश्रयतामनुभवत्येवेति न्यायात्, एवमिहापि ध्रौव्यलक्षणेऽर्पितेऽनर्पितावपि साक्षात् तद्विपरीतावुत्पादव्ययौ सङ्गंस्येते, पूर्वमुत्तरं च पर्यायं ध्रौव्यमासादयति, न तूत्पादलक्षणः पर्यायो विनाशलक्षणो वा पूर्वोत्तरपर्यायानुभावी, तस्माद् विलक्षणावुत्पादव्ययाविति सुज्ञानम् । एवं सम्बन्धद्वयमभिधाय सूत्रार्थोऽभिधीयते, पूर्वकं सम्बन्धमाश्रित्येदं भाष्यम्—

[भाष्यम्–] **सच्च त्रिविधमपि नित्यं चोभे अपि अर्पितानर्पितसिद्धेः** ॥

चशब्दः समुच्चये, **अपि** सम्भावने । **सत्** त्रिविधमुत्पादव्ययस्थितिलक्षणम्, नित्यं च

---

तद्भावाव्ययत्वलक्षणनित्यत्वेऽपि, एवमसत्त्वे पर्यायास्तिकनयादुत्पादव्यययोः प्राधान्यं द्रव्यनयगौणभावाद् ध्रौव्यस्य तद्विपयस्य गुणभावः, एवमनित्यत्वेऽपीति सत्त्वासत्त्वयोर्नित्यत्वानित्यत्त्वाद्रेकत्र वृत्तिर्न विरुध्यते इत्यभिसन्धानेनैव **अर्पितानर्पितसिद्धेरिति** सूत्रप्रवृत्तिरित्येकावतरणिका । आचार्यान्तराभिमतामन्यामवतरणिकामुपनिबध्नाति–**अपरेऽन्यथाकारमिति** । **नित्यपर्यायत्वेनेति,** एतेनानन्तरसूत्रेण नित्यस्यैव लक्षणमुक्तं न ध्रौव्यस्येति शङ्कायाव्युदासः । सल्लक्षणघटकस्य ध्रौव्यस्य लक्षणप्रतिपत्तयेऽनन्तरसूत्रमभिहितं तथा तद्घटकोत्पादव्यययोर्विविक्तलक्षणप्रतिपत्त्यर्थमपि सूत्रमभिधानीयमित्याह–**उत्पादव्यययोरुच्यतामिति** । उक्तप्रश्ने प्रतिविधानमाह–**नोच्यत** इति । तत्किमशक्यनिरूपणत्वात्तदनभिधानमेवं सति तदविज्ञाने तद्घटितसत्त्वलक्षणमप्यविज्ञातमेव स्यात्ततश्च सतोऽवधारणमप्यशक्यं जैनानामित्यतस्तल्लक्षणानभिधाने हेत्वन्तरं प्रकटयति–**तयोरिति,** उत्पादव्यययोरित्यर्थ, दुरुहेऽतिसूक्ष्मेऽर्थे शास्त्रव्यापारस्साफल्यमश्नाति, पूर्वमसतस्सत्त्वं ह्युत्पादपूर्वं सतश्चोत्तरकालमसत्त्वं विनाशस्तदुभावपि तन्त्रान्तरीयाणामपि लौकिकानां प्रतीताविति तत एव तयोरवगतिसम्भवात्तल्लक्षणप्रतिपादकसूत्रानारम्भेऽपि न न्यूनत्वमिति भावः । सत उत्पादव्ययध्रौव्यात्मकत्वे तद्विकलस्यासत्त्वं तद्भावाव्ययस्य नित्यत्वे तद्विधुरस्यानित्यत्वं प्राप्तमेवेति न तल्लक्षणप्ररूपणयापि सूत्रव्यापारसाफल्यमित्याह–**सामर्थ्यगतेश्चेति** । **अतः,** लोकप्रतीतत्वात्सामर्थ्यगतेश्च । **तल्लक्षणम्,** उत्पादव्ययासदनित्यत्वादिलक्षणम् । कुतो न साक्षाद्वाच्यमिति प्रश्नमुखेन सूत्रमवतारयति–**किं कारणमिति** । **"अर्पितानर्पितसिद्धेः"** इति सूत्रम्, अर्पितेन सूत्रोपात्तेन सत्त्वलक्षणेन नित्यत्वलक्षणेन च अनर्पितस्य सूत्रेण साक्षादनुपात्तस्योत्पादव्ययासदनित्यत्वादिलक्षणस्य सिद्धेरर्थाज्ज्ञानाद्धेतोस्तल्लक्षणं साक्षान्न वाच्यमिति सूत्रस्य मुकुलितोऽर्थः । सूत्रार्थं व्याचष्टे–**अर्पितमित्यादिना** । **तद्विपरीतम्** उपात्तविरुद्धमनुपात्तमिति यावत् । सूत्रार्थं व्याख्याय प्रस्तुतसङ्गमनिकामाह–**विशेष्यं हीत्यादिना** । **नीलोत्पलादिवदिति,** अत्र उत्पलं विशेष्यं तत्रोपादीयमानं नीलं विशेषणं नियमकारि अनीलव्यवच्छेदकारि, यद्युत्पलं नीलमेव स्यान्न त्वनीलं तदा व्यावर्त्याभावान्नियमकारिता तस्य न स्यात्, एवञ्च नीलविशेषणोपादानसामर्थ्यादुत्पलमनीलत्वाश्रयतामप्यनुभवतीति गम्यत इति । यथा चोत्पले साक्षादुपात्तेन नीलविशेषेण नानुपात्तस्यानीलस्य प्रतीतिः, तथा प्रकृतेऽपीत्याह–**एवमिहापीति** । ध्रौव्यापेक्षयोत्पादव्यययोर्वैलक्षण्यम्भावयति–**पूर्वमिति** । **अभिधीयत इति,** भाष्यकारेणेति शेषः । **पूर्वकं सम्बन्धमिति,** उत्पादव्यययोर्ध्रौव्येण सह न विरोध इत्युपपादनायोक्तसूत्रारम्भ इति सम्बन्धमित्यर्थः । **सच्चेत्यादि** भाष्यं विवृणोति–**चशब्दः समुच्चय इति** । धर्मिणोऽनन्त-

द्वितीयसूत्रोक्तमुभयमप्येतदर्पणानर्पणाभ्यां सिद्धमव्याहतम् । अनेकधर्मा धर्मी, तत्र प्रयोजनवशात् कदाचित् कश्चित् धर्मो वचनेनार्प्यते–विवक्ष्यते, सन्नपि च कश्चिन्न विवक्ष्यते प्रयोजनाभावात्, न पुनः स धर्मी विवक्षितधर्ममात्र एव; इत्यतः सत्पर्यायविवक्षायां सदुत्पादादि स्थित्यंशविवक्षायां नित्यम्, असदप्युत्पादाद्यनित्यं च, सत्त्वासत्त्वविशिष्टग्रहणात् सर्वदा वस्तुनः, येन प्रमाणेन यद् वस्तु सद्विशिष्टं गृह्यते, तेनैव प्रमाणेन तदेव तदैवाऽसद्विशिष्टमपि गृह्यते, अन्यथा त्वविविक्तग्रहणमेव स्यात्, विविक्ताश्च चक्षुरादिबुद्धयोऽनुभूयन्ते; यथैव हि स्वास्तित्वात् सद्विशेषणोल्लेखेन सद्बुद्धिरभिधावति, एवमसद्विशेषणावष्टम्भजनिताऽपीति; न चोपहतेन्द्रियस्याव्यापृतेन्द्रियस्य वा वस्त्वन्तराभावविशिष्टं ग्रहणमुपजायते तत इन्द्रियव्यापारे सति भावादसद्विशिष्टस्य ग्रहणस्य नापह्नवो युज्यते, यथा प्रकाशकाः कृशानुभास्करादयः प्राकाश्यं वस्त्वन्तराभावविशिष्टमेव प्रकाशयन्ति; एवं प्रमाणमपि वस्तुपरिच्छेदहेतुत्वेन व्याप्रियमाणं वस्त्वन्तराभावविशिष्टमेव प्रकाशयति । प्रमाणं च यथावस्थितवस्तुस्वभावग्राहि, ततः प्रमाणपरिच्छिन्नेनार्थेन यथाप्रयोजनमर्पणादिव्यवहारः । तस्मात् सत्त्वासत्त्वैक-

---

धर्मात्मकत्वेऽपि एकैकधर्मवत्तया तद्व्यवहृतौ हेतुमाह–**तत्रेति** । यो धर्मो न विवक्षितस्तस्य धर्मस्तत्र नास्तीति मैवं मंस्था इत्याह–**न पुनरिति** । **सदुत्पादादी**त्यत्र छेदः, **नित्यमि**त्यत्रापि । सत्पर्यायविवक्षायामुत्पादादेस्सत्त्वेऽप्यसत्त्वमस्त्येवेत्याह–**असदप्युत्पादादीति** । स्थित्यंशविवक्षायां नित्यमप्युत्पादाद्यनित्यमपीत्याह–**अनित्यं चेति** । अत्र हेतुः–**सत्त्वासत्त्वेति**, वस्तुनः सर्वदा सत्त्वासत्त्वविशिष्टग्रहणादित्यन्वयः, यदा सत्त्वप्रकारेण वस्तु गृह्यते तदाऽप्यसत्त्वविशिष्टन्तद्गृह्यत एव, वस्तुनोऽनन्तधर्मात्मकत्वेनैकधर्मविशिष्टतयैव ग्रहणे तद्ग्रहणस्य वस्तुविषयकत्वाभावेन प्रमाणत्वमेव न स्यादित्यभिसन्धिः । यदि च सद्विशिष्टतयैव प्रमाणेन ग्रहणं तदा स्वद्रव्यादिनेव परद्रव्यादिनाऽपि सद्विशिष्टतयैव ग्रहणमिति घटस्य घटत्वादिवत्पटत्वादिकमप्यापन्नमिति सर्वं वस्तु सर्वसङ्कीर्णमेवावभासेत न तु विविक्तमिति महदसमञ्जसमापद्येतेत्याह–**येन प्रमाणेनेति**, अभिमतेन प्रत्यक्षादिप्रमाणेनेत्यर्थः । **यद्वस्तु** विवक्षितघटादिकम् । **सद्विशिष्टं गृह्यते** स्वद्रव्यादिना सद्विशिष्टतया गृह्यते । **तेनैव प्रमाणेन** सद्विशिष्टतया ग्राहकेण प्रत्यक्षादिप्रमाणेन । **तदेव** विवक्षितघटादिकमेव । **तदैव** सद्विशिष्टतया ग्रहणकाल एव । **असद्विशिष्टमपि**, परद्रव्यादिनाऽसत्त्वविशिष्टमपि । **अन्यथा** एवमनङ्गीकारे । **अविविक्तग्रहणं**, परस्परसङ्कीर्णग्रहणम् । एवमभ्युपगमे अनुभवबाधमाह–**विविक्ताश्चेति** । विविक्ततया चक्षुरादिबुद्धीनामनुभवनमेव द्रढयति–**यथैव हीति** । **स्वास्तित्वात्** स्वद्रव्यादिनाऽस्तित्वात् । **सद्विशेषणोल्लेखेन**, स्वद्रव्यादिनाऽस्त्येव घट इत्येवमाकारेण । **सद्बुद्धिरभिधावति**, सन् घट इति बुद्धिः प्रवर्त्तते । **एवं** तथैव परद्रव्यादिना नास्तित्वात् परद्रव्यादिना नास्त्येव घट इत्युल्लेखेन असन् घट इति बुद्धिरपि प्रवर्त्तत इत्यर्थः । ननु भवदुपकल्पितस्याद्वादभावनाभावितान्तःकरणप्रभावितमेवैतद्ग्रहणन्न तु चक्षुरादीन्द्रियप्रमाणावष्टम्भजनितमतो न लौकिकपरीक्षकाणामादराधानहेतुरयमनुभव इत्यत आह–**न चोपहतेन्द्रियस्येति**, इन्द्रियान्वयव्यतिरेकानुविधानाद्वस्त्वन्तराभावपर्यवसितपररूपाद्यवच्छिन्नासत्त्वविशिष्टग्रहणमिन्द्रियजन्यमभ्युपेयमेवेति, स्याद्वादसंस्कारस्तु तत्र व्यञ्जको भवन्न निरोद्धुं पार्यते, नैतावता तद्ग्रहणन्न पारमार्थिकम्, स्याद्वादसंस्कारस्य निमित्तभेदस्य सतोऽभिव्यञ्जन एव व्यापारादित्याशयः । प्रकाशकमात्रस्यैवायं स्वभावो यदेकं वस्तु प्रकाशयत् वस्त्वन्तराभावविशिष्टमेव प्रकाशयतीति नादृष्टचरकल्पनयाऽप्ययमनुभवोऽभिभूयत इत्याह–**यथेति** । दीपो हि घटत्वेन प्रकाशनायैवाभिव्यञ्जकतयोपनीतस्तथापि घटं घटत्वेन प्रकाशयति पटत्वाभावविशिष्टतयापि प्रकाशयति, अत्र घटत्वस्य प्रकाश्यतया विवक्षणमर्पणन्तेन सिद्धिः, पटत्वाद्यभावविशिष्टत्वन्तु न तथा विवक्षितमतस्तदनर्पितन्तथापि स्वभावादापतितमेवेत्यनर्पितेन सिद्धिः, एवं ज्ञानमात्रप्रकाश्येऽपि यस्य सप्रयोजनतया विवक्षणं तदेव तस्यार्पणं तेन तत्सिद्धिः, यस्य च न तथा विवक्षणं तदेव तस्यानर्पणमथापि स्वभावादेव तस्य प्रकाशनमित्यनर्पितसिद्धिरिति विवक्षाविवक्षाभ्यामर्पितानर्पितसिद्धिराकलनीया सर्वत्रेत्याशयेन दार्ष्टान्तिके तत्संघटनामावेदयति–**एवमिति**, यथावस्थितवस्तुस्वभावग्राहीत्युक्त्याऽविवक्षितमपि वस्त्वन्तराभावविशिष्टत्वन्तेन गृहीतव्यमेव, अन्यथा वस्त्ववभासकत्वाभावे प्रमाणत्वमेव तस्य न स्यादिति । **यथाप्रयोजनमिति**, प्रयोजनानुसारेणेत्यर्थः । **अर्पणादीति**, आदिपदादनर्पणपरिग्रहः । घटस्य जलाहरणं कार्यं यदाभिलषितं तदाऽच्छिद्रत्वसुपक्वत्वादिगुणविशिष्टघटत्वेनैव तद्बोधोऽभिप्रेत इति

**मेव वस्तु, स्वरूपार्पणयोत्पादः सन् स्थितिविनाशाभावविशिष्टग्रहणादसन्, एवं स्थितिविनाशावपि वाच्यौ । एवं हि त्रिविधग्रहणं समर्थितं भवति ॥ तथा स्वात्मापरित्यागार्पणान्नित्यम्, उत्पादव्यया-र्पणात् तदेवानित्यम्, स्थित्यादयश्च सङ्ग्रहादेकीभावाद् वस्तु, न स्थितिरहितावुत्पादविनाशौ, नाप्युत्पाद-व्ययशून्या स्थितिः, अतः संसर्गलक्षणं वस्त्वेकमेव नित्यं चानित्यं च ॥ ननु चोत्पादव्ययध्रौव्ययुक्तं सदिति त्रिस्वभावमेव सत्त्वेनावधृतम्, भाष्यकारस्तु सच त्रिविधमपीत्येव विवृण्वन्नेकैकस्य सत्त्वं प्रतिपादयति, नैष दोषः; अविभक्तेऽपि वस्तुनि स्वभावत्रयाख्यानमन्योन्यापरित्यागद्वारेणैव क्रियते, अन्यथा कथं कथ्येत प्रज्ञापनागोचरः ? । स्थित्यादयो हि परस्परावियोगिनः सर्वदा सदसदात्मका**

---

पटत्वस्यार्पणमन्येषां च धर्माणा तत्र सतामप्यनर्पणम्, एवं पटादिकार्यावरणाद्यभावप्रतिपत्तिप्रयोजनं यदाभिप्रेत तदाऽत्र घटोऽस्तीत्यत्र घटपदेन पटत्वावच्छिन्नासत्त्वरूपवस्त्वन्तराभावविशिष्टत्वेन घटबोधोऽभिप्रेत इति पटत्वेनासत्त्वस्यैव वस्त्वन्तराभाववैशिष्ट्यस्यार्पणमन्येषां च घटत्वादीनामनर्पणम्, प्रमाणेनावगाहनन्त्वशेषधर्मकलापोपेतस्य घटाख्यवस्तुन इति । उपसंहरति-**तस्मादिति,** प्रयोजनानुसारिविवक्षाविवक्षानिबन्धनार्पणानर्पणगोचरधर्मसमष्टिसमन्वयादित्यर्थः । **सच्चेति,** एकमेव वस्तु सद्धासच्चाभ्युपगन्तव्यमित्यर्थः । वस्तुस्वरूपान्तःसन्निविष्टानामुत्पादव्ययस्थितीनामपि प्रत्येकं वस्तुत्वमेवोत्पादादित्रययोगस्य वस्तुत्वोपपत्तये प्रत्येकमपि तेष्ववश्यमभ्युपगमनीयत्वाद्, एवञ्च तेष्वपि सत्त्वासत्त्वे उपपादनीये तत्कथमित्यपेक्षायामाह-**स्वरूपार्पणयेति,** उत्पादत्वविवक्षयेत्यर्थः । यदोत्पादे उत्पादत्वं पूर्वकालासत्त्वे सति सत्त्वप्रतिपत्तिप्रयोजनवशाद्विवक्ष्यते तदा तदेवार्पितम्, तदा तद्रूपेणोत्पाद सन्, स्थितिविनाशत्वादिना तदसत्त्वलक्षणवस्त्वन्तराभाववैशिष्ट्यञ्चानर्पितम्, ग्रहणन्तु तस्याप्यन्यथोत्पादज्ञानस्य प्रामाण्यमेव न स्यादतः स्थितिविनाशाभावविशिष्टतया ग्रहणविषयत्वादसन् उत्पाद इति । उक्तदिशा स्थितिविनाशयोरपि सत्त्वासत्त्वे वाच्ये इत्यतिदिशति-**एवमिति** । उत्पादादीनां प्रत्येकं सत्त्वासत्त्वयोरुपपादनस्य प्रयोजनमाह-**एवं हीति** । **त्रिविधग्रहणमिति, सच्च त्रिविधमपीति** भाष्ये त्रिविधग्रहणमित्यर्थः । एकस्य नित्यत्वानित्यत्वधर्मयोगं समर्थयति-**तथा स्वात्मापरित्यागेति** । स्थित्यादीनां परस्पराविष्वग्भावाद्वस्तुत्वमुपपादयति-**स्थित्यादयश्चेति** । **सङ्ग्रहात्** संग्रहनयार्पणात् । **एकीभावाद**न्योन्याविष्वग्भावात् । कथं तेषामन्योन्याविष्वग्भाव इत्यपेक्षायामाह-**न स्थितिरहितेति** । **संसर्गलक्षणं** परस्पराविष्वग्भावापन्नोत्पादव्ययस्थित्यात्मकम् । अत्र स्थित्यंशाजहद्वृत्तित्वान्नित्यत्वमुत्पादव्ययभावापन्नत्वादनित्यत्वमित्याह-**नित्यं चानित्यं चेति** । भाष्ये सूत्रविरोधमाशङ्कते-**नन्वित्यादिना** । उक्ताशङ्काम्प्रतिक्षिपति-**नैव दोष इति** । **अविभक्तेपीति** । यथा—

"भागे सिंहो नरो भागे योंऽशो भागद्वयात्मकः । तमभागं विभागेन नरसिंहं प्रचक्षते ॥ १ ॥" इति

न्यायेनोत्पादादित्रयात्मकस्य वस्तुनोऽखण्डात्मकतैव न तु भागत्रयरूपतेत्यविभक्तेऽखण्डेऽपीत्यर्थः । **स्वभावत्रयाख्यान**मुत्पादादित्रयस्वरूपप्रतिपादनम् । **अन्योन्यापरित्यागद्वारेणेति,** उत्पादव्ययावियुतस्थितिरूपेण स्थितेः स्थितिव्ययावियुतोत्पादरूपेणोत्पादस्योत्पादस्थित्यवियुतव्ययरूपेण व्ययस्य च प्रतिपादनं क्रियतेऽतो न वस्त्वन्तरत्वप्रसङ्ग इति भावः । एकस्य वस्तुन उत्पादादित्रितयस्वभावत्वं शब्देन प्रतिपादयितुमभिलषितं तदन्यथा सम्भवत्येवेत्याह-**अन्यथेति,** उक्तप्रकाराश्रयणमन्तरेणेत्यर्थः । **कथ्येत** प्रतिपाद्येत । **प्रज्ञापनागोचरः** प्रतिपादयितुमभीष्टः । **परस्परावियोगिनः** स्थितिरुत्पादव्ययावियुता उत्पादः स्थितिव्ययावियुतः व्यय उत्पादस्थित्यवियुत इत्येवं परस्परावियोगिनः । **सर्वदा सर्वात्मकाः,** त्रैकाल्येऽपि उत्पादस्योत्पादव्ययध्रौव्यात्मकत्वं व्ययस्योत्पादव्ययध्रौव्यात्मकत्वं ध्रौव्यस्य चोत्पादव्ययध्रौव्यात्मकत्वम्, उत्पत्तेस्त्रैकाल्यं च उत्पन्नमुत्पद्यते उत्पत्स्यते च, स्थितेस्त्रैकाल्यं च स्थितं तिष्ठति स्थास्यति च, व्ययस्य त्रैकाल्यं च व्यतीतं व्यपगच्छति व्यपगमिष्यतीति । अत्रोत्पन्नोत्पद्यमानोत्पत्स्यमानाना वर्त्तमानोत्पादस्थितिव्ययात्मकत्वे नव भेदाः, एवमतीतोत्पादस्थितिव्ययात्मकत्वे नव भेदाः, एवं भविष्यदुत्पादस्थितिव्ययात्मकत्वे नव भेदास्ते च सगृहीता उत्पादस्य सप्तविंशतिर्भेदाः, एवं स्थितस्थीयमानस्थास्यमानाना वर्त्तमानातीतभविष्यदुत्पादादित्रयाभेदात्सप्तविंशतिर्भेदाः स्थितेः, एवं व्यतीतव्यपगच्छद्व्यपगमिष्यता वर्त्तमानातीतभविष्यदुत्पादादित्रयाभेदाद्व्ययस्य सप्तविंशतिर्भेदा., ते चैकत्र मिलिता एकाशीतिरितिबोध्यम् । ननु वस्तुन उत्पत्त्याद्याश्रयस्य उत्पादादित्रिकालघटितमूर्त्तियोगेऽपि कथमुत्पादादीनां त्रिकालभेदभिन्नमूर्त्तिकोत्पादादित्रिलक्षणयोगित्वमित्यत आह-**भेदा-**

भेदाभेदलक्षणास्तेषु सत्त्वप्रज्ञापना न विरुध्यते, न ह्येकदेशोऽसन् वस्तुनो भवति पटादेस्तन्त्वादिः। अथ नित्यं चेति किमर्थमुच्यते, सद्ग्रहणादेव तद्गृहीतेः पुनर्न किञ्चित् फलमस्ति, सद्ग्रहणेनैव ध्रौव्यांशस्य लक्षितत्वात्, सच्च त्रिविधमपीत्येतावदेवाभिधेयमिति, अत्रोच्यते—सत्यमेतदेवम्, तथाऽप्यर्थविशेषप्रतिपिपादयिषया पुनर्नित्यग्रहणम्, स विशेषो भाव्यते—यदि ध्रौव्यांश एव नित्यः स्यात् न समस्तं वस्तु, तत उत्पादव्ययावप्यनित्यौ न वस्तु सकलम्, एवं चान्याधारं नित्यत्वमन्याधारं चानित्यत्वं स्याद्, अनिष्टं चैतद् व्यधिकरणत्वात्, यथा प्रवचनबाह्यानां नित्यं व्योमाऽनित्यो घट इति, अत्राप्येवं स्यादन्यन्नित्यमन्यच्चानित्यम्, इष्यते तु यदेव नित्यं तदेवानित्यमिति, तत्राऽमुना पुनर्नित्यग्रहणेन निरंशं वस्त्वर्प्यते

भेदलक्षणा इति, आश्रयभिन्नाभिन्नस्वभावाः परस्परभिन्नाभिन्नस्वभावाश्चेत्यर्थः, एवं सत्याश्रयधर्मान्योन्यधर्मयोगित्वं तेषामविरुद्धमिति भावः। यदर्थमेतावान् प्रयासस्तमुद्घाटयति—तेष्विति, उत्पादादिषु त्रिष्वित्यर्थः। सत्त्वप्रज्ञापना उत्पादादित्रयात्मकत्वलक्षणसत्त्वकथनम्। न विरुध्यत इत्युक्तम्, तत्र हेतुः—न ह्येकदेश इति, हि यतः, वस्तुन उत्पादादित्रयसमुदायात्मनः, एकदेशः प्रत्येकमुत्पादादिः, असन्न भवति, तथा सति प्रत्येकस्यासत्त्वे तत्समुदायात्मनो वस्तुनोऽपि असत्त्वं स्यात्तस्य कथञ्चित्तदभिन्नत्वात्। एतदेव दृष्टान्तेन भावयति—पटादेस्तन्त्वादिरिति, तन्त्वाद्यवयवसमुदायात्मनः पटादेस्सद्रूपस्यैकदेशस्तन्त्वादिर्यथा नासद्रूपस्तथेत्यर्थः। उत्पादादीनां त्रयाणां सत्त्ववन्नित्यत्वमपि पार्थक्येन भाष्यकारेणोक्तं तत्पुनरुक्तमेव सत्त्वविधाने तत्स्वरूपप्रविष्टतया नित्यत्वस्यापि प्राप्तेरनर्था पुनरुक्तिरिति परश्शङ्कते—अथेति। तद्गृहीतेः, नित्यग्रहणात्। पुनरित्यनन्तरं तद्गृहीतेरित्यावर्त्तनीयम्, तथा च पृथक्कृतद्गृहीतेर्न किञ्चित्फलमस्तीत्यन्वयः। ननु सद्घटकतयोत्पादादीनामेव प्रवेशो न नित्यस्येति तद्ग्रहणे कथं नित्याप्तिरिति कस्यचिद्व्यामोहस्स्यात्तत्राह—सद्ग्रहणेनैव ध्रौव्यांशस्य लब्धत्वादिति, तथा च ध्रौव्यमेव नित्यत्वमिति सदित्यनेन ध्रौव्यप्रतीतौ तद्रूपं नित्यत्वमपि प्रतीतमेवेति भावः। नित्यं चेत्यस्यानुक्तौ कीदृशेन भाष्येण भवितव्यमित्यपेक्षायामाह—सच्चेत्यादि। सद्ग्रहणादुत्पादादीनां नित्यत्वं यत्प्राप्तं तद्ध्रौव्यांशाभेदेनैव, अर्थाद्ध्रौव्याभिन्नं यद्वस्तु तदभिन्नत्वादुत्पादव्ययावपि ध्रौव्यरूपाविति नित्यौ न तु ध्रौव्यांशस्येव मुख्यवृत्त्या तयोरपि नित्यत्वं त्रिकालयोगात्साक्षादनुगामितया, तत्प्रतिपत्तये पृथङ्नित्यग्रहणमित्याशयेनोत्तरयति—अत्रोच्यत इति। ध्रौव्यांश एवेति। यद्यपि सच्च त्रिविधमपीत्युक्त्योत्पादव्यययोरपि सत्त्वं कण्ठत एवोक्तमित्युत्पादस्याप्युत्पादव्ययध्रौव्यरूपता, एवं व्ययध्रौव्ययोरपि त्रिरूपता, तामन्तरेण सत्त्वाघटनात्तथा च ध्रौव्यांश एवेत्युक्तिरसङ्गतेव प्रतिभाति, तथापि तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायेन ध्रौव्यरूपतादिसम्पत्त्याऽप्युत्पादादीनां सत्त्वोपपत्तौ नोत्पादत्वादिनाऽसाधारणरूपेणाऽपि सत्त्वाभ्युपगमेन कृत्यमिति ध्रौव्यांशस्यैव स्वासाधारणरूपेण नित्यत्वमायातीत्याशयः। न समस्तं नोत्पादव्ययसमन्वितध्रौव्यस्वरूपम्। स्वासाधारणरूपेण ध्रौव्यस्यापि नानित्यत्वं किन्त्वनित्योत्पादव्ययाभिन्नवस्त्वभिन्नत्वादुत्पादादिरूपतयैवानित्यत्वमिति सकलं वस्तु यथा न नित्यं तथाऽनित्यमपि नेत्येतत्स्यादित्याह—तत इति, समस्तवस्तुनो नित्यत्वाभावादित्यर्थः। सकलं ध्रौव्यकरम्बितोत्पादव्ययस्वरूपम्। ननु भवत्वेकांशापेक्षया नित्यत्वमेकांशापेक्षया चानित्यत्वमखण्डस्य वस्तुनो नित्यत्वानित्यत्वाभावेऽपि स्याद्वादिनः किं छिन्नमित्यत आह—एवं चेति, नित्यत्वानित्यत्वयोर्भिन्नांशगततयाऽवस्थित्यभ्युपगमे चेत्यर्थः। भवत्वेवमपि ततः किमत आह—अनिष्टञ्चेति, स्याद्वादिनामिति शेषः। एकाधिकरणगततयैव नित्यत्वानित्यत्वाभ्युपगमः स्याद्वादिनाम्, स च ध्रौव्यांशे नित्यत्वस्य उत्पादव्यययोरनित्यत्वस्य चाभ्युपगतौ नात्मानमासादयतीत्याशयेनाह—व्यधिकरणत्वादिति। यदेकान्तवादिनामिष्टं तदेव स्याद्वादिनामिष्टं न भवति, प्रकृते तु भिन्नाधिकरणतया नित्यत्वानित्यत्वयोरुपगमे तन्नियमो व्याहन्यत इत्यतस्तस्यानिष्टत्वमित्याह—यथेति। प्रवचनबाह्यानां जैनराद्धान्तानभ्युपगन्तृतया जैनप्रवचनबहिर्भूतानां नैयायिकादीनाम्। अत्रापि जैनराद्धान्तेऽपि। एवं स्यादित्यत्र स्यादित्युक्त्याऽनिष्टापादनताऽस्य ख्याप्यते, तत्तदा स्याद्यदेतदन्यप्रकारस्येष्टत्वं स्यादतस्तत्ख्यापनायाह—इष्यते त्विति, स्याद्वादिभिरिति शेषः। अथवा तत्रेति पूर्वान्वयि, तत्र प्रवचन इत्यर्थः, प्रवचनञ्च जिनोक्तागम एव, तथा चोक्तशेषस्य न प्रयोजनम्। अमुना उक्तभाष्यगतेन। निरंशं वस्त्वर्प्यते, उत्पादव्ययस्थित्यविष्वग्भूतमखण्डं वस्तु नित्यतया विवक्ष्यते। अनन्तधर्मात्मके वस्तुनि प्रतिनियतस्यैकस्य धर्मस्य विवक्षणे तद्विपक्षभूतस्यापरधर्मस्याप्यविवक्षितस्य तत्रैव वस्तुनि प्रतीतिरुपजायत एव, अन्यथा विपक्षभूतधर्माभावे तदेकस्वभावस्य वस्तुनस्तदविवक्षयाऽपि तत्त्वप्राप्तौ विवक्षाकृत्यं न किञ्चित्स्यादतोऽखण्डस्य वस्तुनो नित्यत्वस्य विवक्षया

एतद्विपक्षेण चानित्यं समस्तमेव वस्तूच्यते निर्विभागत्वात्, एवं हि तत् प्रज्ञाप्यते, केवलं श्रोतृबुद्धिव्युत्पत्तये स्थित्यंशोऽयमिमावुत्पादव्ययांशाविति बुद्ध्या विभज्यते, न तु परमार्थतोऽस्ति विभाग इत्येवमैकाधिकरण्यम् । यथाऽऽह—

"अभिन्नांशं मतं वस्तु, तथोभयनयात्मकम् । प्रतिपत्तेरुपायेन, नयभेदेन कथ्यते ॥ १ ॥" ।

यत् तूक्तं—नित्यता ह्युत्पादव्ययौ विरुणद्ध्युत्पादव्ययौ च नित्यतां विरुन्धाते, तत् प्रपञ्च्यापोद्यते—कः पुनर्विरोधशब्दार्थः ? । किं ययोरेकत्रावस्थानं न दृश्यते तौ विरुद्धावथ यावेकत्र कालान्तरं स्थितौ पश्चादन्यतरविनाश उभयविनाशो वा तौ विरुद्धाविति ?, किञ्चातः, यदि प्राच्यः पक्षः—कदाचिदपि यावेकत्र न दृष्टौ, एवं सति वध्यघातकभावलक्षणस्तावदहिनकुलयोरग्न्युदकयोर्वा न विरोधः, यतः संयोगे सत्येककालयोरहिनकुलयोरग्निजलयोर्वा स्थितयोर्विरोधः, संयोगस्यानेकाश्रयत्वात् द्वित्वादिवत्, न चासंयुक्तो नकुलः सर्पविनाशे प्रभुः, यदि स्यात् ततः समस्तत्रैलोक्योदरवर्तिसर्पाभावप्रसङ्गः, अग्निजलयोरप्येवमेव भावना; वाडवाग्नेर्वारिधिवारिणश्चैकत्रावस्थानं दृष्टमिति चेत्, हन्त हतस्तर्हि विरोधः; प्रकृतमुच्यते—संयोगे पुनः क्षणमात्रावस्थायिनोरुत्तरकालमेकस्य बलवत्त्वाद् घातकत्वे

---

प्राप्तावनित्यत्वमपि प्रतीयत एवेत्याह—**एतद्विपक्षेणेति,** नित्यविवक्षाप्राप्तनित्यविपक्षानित्यानर्पणेनेत्यर्थः । **निर्विभागत्वादिति,** अखण्डत्वादित्यर्थं । **एवं हीति,** उत्पादव्ययस्थित्यविभक्तभूततया समस्तस्य नित्यत्वानित्यत्वप्रतिपादने हीत्यर्थः । **तत्प्रज्ञाप्यत इति,** अखण्डं वस्तु प्रज्ञापनागोचरः प्रतिपादितो भवतीति यावत् । नन्वेव वस्त्वेवाखण्डं स्थितित्वोत्पादव्ययत्वकलितमिति वस्त्वेव तथाभिधातव्यं किमिति मृदंशो ध्रौव्यं पृथुबुध्नोदराद्याकारपरिणमनाश उत्पादो मृत्पिण्डरूपतान्यथाभावांशो विनाश इत्येवं विभजनमित्यत आह—**केवलमिति** । तथा च यथा नरसिंहस्वरूपेऽखण्डेऽपि बुद्ध्या परिकल्पितो नरसिंहरूपभागभेदो नरसिंहैकव्यक्त्यखण्डता पारमार्थिकी न व्यवच्छिनत्ति तथा प्रकृते बौद्धपरिकल्पितोत्पादादिविभागो न पारमार्थिकीं वस्त्वखण्डता खण्डितुं प्रगल्भते, यत इयं प्रमाणबलप्रभाविता, विभागस्तु नयबलोपढौकित इति । **इत्येवम्,** उक्तप्रकारेण । **एकाधिकरण्यम्,** नित्यत्वानित्यत्वयोरखण्डैकवस्तुवृत्तित्वेन सामानाधिकरण्यम्, एतावांश्च प्रवचनबाह्योपकल्पितप्रकारादस्य विशेष इति रहस्यम् । उक्तार्थे प्राचां सम्मतिमाह—**यथाहेति** । **अभिन्नांशम्,** उत्पादव्ययस्थित्यपृथग्भूतमखण्डम् । **मतं** स्याद्वादिन इष्टम् । **तथा** अखण्डस्वरूपेण । **उभयनयात्मकमिति,** विषयविषयिणोरभेदोपचारेणेयमुक्तिः, तथा च द्रव्यनयविषयध्रौव्यपर्यायनयविषयोत्पादव्ययात्मकमित्यर्थः, अन्योन्यसापेक्षनयद्वयस्य प्रमाणरूपतया प्रमाणविषयीभूतद्रव्यपर्यायोभयात्मकमिति यावत्, द्रव्यनयविषयनित्याभेदादीनां पर्यायनयविषयानित्यभेदादीनामप्यनयोक्त्याऽखण्डवस्तुन्यवगमनं कार्यम् । एकस्मिन् वस्तुनि परस्परविरुद्धतया परपरिकल्पितानां धर्माणां समावेशः कथं स्यादित्याशङ्काशङ्कूद्धरणाय च नयभेदोपनिपातिभागपरिकल्पनाप्रज्ञापनायामित्याह—**प्रतिपत्तेरिति,** नित्यत्वादितत्तद्धर्मप्रतिपत्तेरित्यर्थः । **उपायेन** तत्तदपेक्षाभेदरूपाविरोधनिमित्तोपदर्शकतयोपायभूतेन । उत्पादव्यययोर्ध्रौव्येण सह विरोधान्नैकत्रावस्थानमिति तेषामैकाधिकरण्यप्रतिपत्तिफलकस्य स्याद्वादस्याप्रामाण्यमेव तज्जनितप्रतिपत्तेर्वैकत्र विरुद्धधर्मावगाहित्वेन संशयत्वमित्येकान्तवाद्याकूतं विरोधस्वरूपापरिज्ञानविजृम्भितमिति प्रपञ्चत उपदर्शयति—**यत्तूक्तमित्यादिना** । **किञ्चात इति,** एवं विरोधस्वरूपविकल्पनतः किमभिमतं भवत इति परस्य पृच्छा । विकल्पोद्भावनप्रयोजनमुपदर्शयति—**यदीति** । **प्राच्य इति,** ययोरेकत्रावस्थानं न दृश्यते तौ विरुद्धाविति कल्प इत्यर्थः । अत्र कल्पे वध्यघातकभावलक्षणविरोधो नात्मानमासादयतीत्याह—**कदाचिदपीति,** अहिनकुलयोरग्न्युदकयोर्वा यो वध्यघातकभावलक्षणविरोध स उत्पादव्यययोर्ध्रौव्येण सह न सम्भवतीत्यर्थः । अत्र हेतुमाह—**यत इति, यदि स्यात्** यद्यसंयुक्त एव नकुल सर्पविनाशे समर्थो भवेत् । **एवमेवेति,** यदि वह्निनाऽसंयुक्तमेव जलं वह्न्युपशमने समर्थं स्यात्तदा त्रिलोकीकवलितवह्न्यभावप्रसङ्ग इत्येव प्रकारेणेत्यर्थं । **एकत्र** समुद्रैकदेशे **अवस्थानं** नाश्यनाशकभावाभावेनावस्थितिः, संयोगे वध्यघातकभावमुपपादयति—**संयोगे पुनरित्यादिना** ।

सतीतरस्य दुर्बलत्वाद् वध्यत्वे स्याद् विरोधः, न चैवं सदसतोर्नित्यानित्ययोर्वा क्षणमात्रमप्येकत्र वृत्तिस्त्वयाऽभ्युपेयते, गुणविषये संयोगाभावान्नापि समवायवृत्तिर्विरोधाभावप्रसङ्गात्, तस्मान्न नित्यानित्यसदसदादीनामेकवस्त्वाश्रयतायां वध्यघातकभावलक्षणो विरोधः समस्ति। नाप्यसहावस्थानलक्षणो विरोधः, स हि शीतोष्णवत् फलवृन्तसंयोगविभागवदाम्रफलादिषु श्यामतापीततावद् वा, तथाहि–शीतपर्यायोऽश्मादीनां प्राग् विद्यमानः पश्चादुपजायमानेनोष्णपर्यायेण सह नावतिष्ठते, तथोष्णः शीतेनोपजायमानेन सह विरुध्यते, न चैवं प्रागवस्थितं नित्यत्वमनित्यत्वेन पश्चात्कालभाविना विनाश्यते, तद्धि नित्यत्वमेव न स्यादध्रुवत्वात्, नापि नित्यत्वेनोत्पत्तिभाजा पूर्वावस्थितमनित्यत्वं विनाश्यते, तत् तु नित्यत्वमेव न स्यादुत्पद्यमानत्वात्, अपि च क्षणनश्वरेषु भावेषु न कदाचिदयं विरोधः समस्ति, नहि तत्रानित्यत्वस्य पूर्वमवस्थानम्, तेन ह्यनित्यत्वेन नाशिते वस्तुनि निराधारस्य नित्यत्वस्याभाव एव, अवश्यंतयाऽसहावस्थानलक्षणविरोधवादिना तत्रान्यतरस्योत्पद्यमानता अन्यतरस्य च पूर्वावस्थितिरभ्युपेया, अन्यथाऽसहावस्थानलक्षणविरोधवाद्येव न स्यात्; येषामपि किञ्चित् कालं स्थित्वा घटो विनश्यति तैरपीदं वक्तव्यम्–यावदसौ न विनश्यति तावत् किं नित्य उतानित्य इति?, नित्यश्चेद् व्योमादिवदनुच्छेदप्रसङ्गः, इतरत्र त्वभावप्रसङ्गः, अवश्यमेव सता नित्येनानित्येन वा भवितव्यमेकान्तवादिनाम्, अनेकान्तवादिनां तूभयस्वभावत्वाद् वस्तुनो न किञ्चिद्घटमानकम्; एवमेव फलवृ-

---

उक्तविरोधस्य प्रकृतेऽसम्भवमुपदर्शयति–**न चैवमि**त्यादिना। **त्वया** एकान्तविरोधवादिना। **वृत्तिः** संयोगसम्बन्धेन वर्त्तनम्। **गुणविषय इति**, गुणपदञ्चात्र द्रव्यभिन्नपरम्, तेनोत्पादादीना गुणरूपत्वाभावेऽपि न क्षतिः। **समवायवृत्तिरिति**, समवायपदं संयोगातिरिक्तवृत्तिनियामकसम्बन्धमात्रपरम्, तेनोत्पादादीनां गुणजात्यादिव्यतिरिक्ततयोपाधिरूपत्वेन समवायप्रतियोगित्वाभावेऽपि वृत्तिनियामकसम्बन्धेन विरुद्धयोरपि कालिकादिसम्बन्धेनैकाधिकरण्येऽपि च न क्षतिः। **विरोधाभावेति**, एकाधिकरणावृत्तित्वरूपविरोधाभावेत्यर्थः। वध्यघातकभावखण्डनमुपसंहरति–**तस्मादिति**। यद्यप्यन्यत्रैकाधिकरणवृत्तित्वे सत्येव वध्यघातकभावः, तथापि प्रकृते एकान्तवादिन एकाधिकरणावृत्तित्वात्मतैव वध्यघातकभावस्याभिमता नित्यानित्यत्वादीनां नाश्यनाशकभावरूपस्य तस्यासम्भवादित्यभिसन्धिः। यदि सहानवस्थानलक्षणविरोध एव प्रकृते परोऽभ्युपेयात्तत्राह–**नाप्यसहानवस्थानलक्षण इति**। **स** सहानवस्थानलक्षणविरोधः। **हि** यतः। शीतोष्णवन्नित्यत्वानित्यत्वयोर्न विरोध इत्युपपादयति–**तथा हीत्या**दिना, शीतोष्णयोरेकस्योत्पादे तदन्यस्य विनाशो दृष्टो न चैवं नित्यत्वानित्यत्वयोरिति सन्दर्भाभिप्रायः। किञ्चायं विरोधो नित्यत्वानित्यत्वयोः क्षणभङ्गुरपदार्थवादिनोच्येत, कञ्चित्कालस्थायिपदार्थवादिना वा, तत्र नाद्य इत्याह–**अपि चेति**। **तत्र** क्षणभङ्गुरेषु। **तेन** क्षणभङ्गुरतालक्षणेन। **नाशित इति**, अनित्यत्वस्वाभाव्यादेव नश्यति घटः, नाशो निर्हेतुक एवेत्युत्पत्त्यनन्तरमेव विनश्यतीत्यभिसन्धानेनेत्थमुक्तिः, तथा च तन्मते निराधारस्याभावादेव न तस्यानित्यत्वेन सह विरोधः, नहि वन्ध्यापुत्रादेः केनापि सह विरोध इति भावः। **'अवश्यंतया'** इत्यस्य **'अभ्युपेया'** इत्यनेन सम्बन्धः। किञ्चित्कालस्थायिपदार्थवादिनमधिकृत्याह–**येषामपीति**। **इतरत्र** अनित्यत्वे। ननु यावदसौ घटो न नश्यति तावन्न नित्यो नाप्यनित्यः किन्तु तदन्यप्रकार एवेत्यत आह–**अवश्यमेवेति**। परस्परविरोधे हि न प्रकारान्तरस्थितिरिति नित्यत्वाभावेऽनित्यत्वं तदभावे नित्यत्वं न तु प्रकारान्तरं सम्भवतीति। शशशृङ्गादिर्न नित्यो नाप्यनित्यः किन्तु तुच्छरूपप्रकारान्तरापन्न एवेत्यत आह–**सतेति**, सतः खलु भावस्यायं नियमः। एकान्तवादिभिर्नित्यत्वानित्यत्वयोरसहावस्थानमभ्युपगम्यते तान् प्रत्युक्तदोषासञ्जनं न तु स्याद्वादीन् प्रति, ते चैकदेवापेक्षाभेदेन नित्यत्वानित्यत्वयोरेकत्र वृत्तिमभ्युपगच्छन्तीत्याह–**अनेकान्तवादिनामिति**। फलवृन्तसंयोगविभागवदाम्रफलादिषु श्यामतापीततावदिति दृष्टान्तयोरप्येकस्य विरोधिनोऽपायेऽन्यस्योत्पत्तिर्न तु प्रकृते तथेत्याशयेनाह–**एवमेवेति**। ये च विरोधस्य लक्ष्यतयोपदर्शिताः, तत्र विरोधलक्षणे ये च प्रकारा दर्शितास्ते सर्वे एकान्तवाद एव सङ्गता न तु स्याद्वादे तत्र सर्वेषामभ्युपगत्व-

भयोः संयोगविनाशे विभाग उपजायते फलादिषु श्यामताऽपैति पीततोत्पद्यत इति विकल्प्य निरसनीयम्, एवमेते विकल्पाः पूर्वकेण विरोधलक्षणेन सङ्गता अपीह स्यात्कारोपलाञ्छनप्रक्रियायां न सम्भवन्ति । अपि चैकत्रावस्थानं न दृश्यत इति किमेकस्मिन् धर्मिणि नास्ति, यद्येवं ततोऽसिद्धता, दृष्ट एक एवाश्मा शीतश्चोष्णश्च । अथ यत्र देशे शीतो न तत्रैवोष्ण इति, एतदप्यसत्, नहि शिशिरस्पर्शमुदकं भिन्नदेशवर्त्यसंयुक्तमेवाग्निं विध्यापयति, संयोगश्चैकदेशवर्तित्वे जलानलपरमाणूनां सिद्ध्यति, अन्यथा च त्रैलोक्येऽप्यग्न्यभावप्रसङ्गः, सति च संयोगे क्षणमात्रावस्थानमेकत्र दृष्टमेव तदा कुतो विरोधः ? । उत्तरकालमदर्शनाद् विरोध इति चेत्, अत एव कदाचिद् विरोधः कदाचिदविरोध इति स्याद्वादाश्रयणमपदोषम् ॥ अथैकस्मिन्नेवाग्निद्रव्ये उष्णतानुष्णते युगपन्न स्तः, इत्येतदप्यसारम्, यतः स्पर्शपर्यायेणाग्निरुष्णोऽभिधीयते रूपपर्यायेण त्वनुष्ण एव । अथोष्णस्य प्रतियोगी शीत एवानुष्ण इति गृह्यते, रिक्तमेतदपि, अनुष्णाशीतस्याप्युष्णग्रहणे प्रतिक्षिप्यमाणत्वात्, तस्मादुष्णपर्यायोऽनुष्णपर्यायेण प्रतिपक्षेण सहैकत्रैकदा च दृष्ट इति । न च वध्यघातकासहावस्थानविरोधयोर्विशेषः कश्चिदस्ति, अहिनकुलयोर्हि संयोगे योऽहेर्जीवनपर्यायः स मरणपर्यायेण सह नावतिष्ठते इत्यसहावस्थानलक्षण एव विरोधः, तथाऽग्निजलयोः सति संयोगे कदाचिदुष्णपर्यायस्य शीतपर्यायेण सहानवस्थानं बहुजलमध्यप्रक्षिप्तस्यैकस्याङ्गारशकलस्य, कदाचिच्छीतस्यानवस्थानं प्रवृद्धज्वलनज्वाला-

---

शीतत्वसंयोगविभागश्यामत्वरक्तत्वादीनामपेक्षाभेदेनैकत्रसमावेशतो विरोधस्यैवाभावात् । कथञ्चिद्विरोधस्त्वविरोधाक्षेपक एवेत्याह–**एवमेत इति, एते** अनन्तरमुपदर्शिताः । **विकल्पा** विरोधस्य शीतोष्णादिलक्ष्यभेदप्रकाराः । **पूर्वकेण** अनन्तराभिहितेन । **विरोधलक्षणेन** सहानवस्थानलक्षणेन । ययोरेकत्रावस्थानं न दृश्यते तौ विरुद्धाविति परपरिकल्पनाऽपि न विचारसहेत्याह–**अपि चेति । यद्येवम्** एकस्मिन् धर्मिणि नास्ति इत्येव यदि विरोधार्थस्तदा । **असिद्धता** इति यदुक्तं तदेवोपपादयति–**दृष्ट एक एवेति** । अश्मन्यवयविनि यदवयवावच्छेदेन शीतत्वं तदवयवावच्छेदेन नोष्णत्वमित्येकावच्छेदेनैकाधिकरणावृत्तित्वं विरोध इत्यभिधानेनासिद्धतेत्याशङ्कते–**अथेति** । यद्देशावच्छेदेनेदानी शीतत्वमश्मनि तद्देशावच्छेदेनैव कालान्तरे तत्रैवोष्णत्वमित्येवमप्यसिद्धता तदवस्थैवेति प्रतिक्षिपति–**एतदप्यसदिति** । यद्देशावच्छेदेन यत्कालावच्छेदेन यत्र शीतत्वं तद्देशावच्छेदेन तत्कालावच्छेदेन तत्र नोष्णत्वमिति एकदेशैककालावच्छेदेनैकाधिकरणावृत्तित्वरूपविरोधस्य नासिद्धतेति पराकूतमाशङ्कते–**अथैवमिति** । एवमपि जलानलयोर्विरोधस्यासिद्धतैवेति प्रतिक्षिपति–**एतदप्यसदिति** । ननु जलस्याग्निविध्यापकत्वान्यथानुपपत्त्या भवतु तयोः सयोगस्तथाप्येकदेशवृत्तित्वं कुतो येनोक्तविरोधलक्षणासिद्धता स्यादित्यत आह–**संयोगश्चेति** । नन्वसंयुक्तमेव जलमग्निं शमयतु को दोष इत्यत आह–**अन्यथेति,** असंयुक्तस्यापि जलस्याग्निविध्यापकत्व इत्यर्थः । ननु क्षणमात्रमेकत्रोभयोः समवधानेऽप्यन्यदाऽसमवधानमेवेति तद्विरोधनिमित्तकमेवेत्याशङ्कते–**उत्तरकालेति** । एवं सति कथंचिद्विरोध आयाति, स च स्याद्वादाभ्युपगत एवेत्युत्तरयति–**अत एवेति** । उष्णतानुष्णत्वयोः सर्वथा विरोधमाशङ्कते–**अथैकस्मिन्नेवेति** । उष्णत्वमप्यनुष्णत्वेन सहैकदैव वर्तत इति तयोरपि न विरोध इति प्रतिक्षिपति–**एतदप्यसारमिति** । उष्णस्य विरोधी शीत एवानुष्णशब्दवाच्यो न रूपमिति तत्सत्त्वेऽपि नानुष्णस्य सत्त्वमिति शङ्कते–**अथोष्णस्येति । प्रतियोगी** विरोधी । अनुष्णाशीतोऽप्यतिरिक्तः स्पर्शो नैयायिकैरुपगत एव, सोऽपि उष्णस्पर्शेण प्रतिक्षिप्यमाणत्वादुष्णस्पर्शविरोधी भवत्येवेति रिक्तमिदमुच्यते शीत एवानुष्ण इति, तथा चोष्णपर्यायभिन्नत्वाद्यथाऽनुष्णाशीतोऽनुष्णस्तथा रूपमपीति स्पर्शपर्यायेणाग्निरुष्णो रूपपर्यायेण त्वनुष्ण इति युक्तमेवेत्याशयेनोत्तरयति–**रिक्तमिति,** उक्ताशङ्काप्रतिपाद्यमपि रिक्तं तुच्छमित्यर्थः, यच्च वध्यघातकभावसहानवस्थानभेदेन विरोधद्वैविध्य पराभिमतं तदपि नास्तीत्याह–**न चेति** । वध्यघातकभावस्य सहानवस्थानलक्षणविरोध एवान्तर्भावं प्रकटयति–**अहिनकुलयोर्हीति** । अग्निजलयोरपि सहानवस्थानलक्षण एव विरोध इत्याह–**तथाग्निजलयोरिति** । विषयभेदाद्वध्यघातकसहानवस्थानयोर्भेद

प्रतप्नवारिणीति। वध्यघातकलक्षणः प्राणिविषय इति चेत्, न, असहावस्थानलक्षणस्यापि कस्यचित् प्राणिविपयत्वेन दर्शनात्॥ अथैककालविषययोर्वध्यघातकविरोध इति चेत्, न, असहावस्थानलक्षणेऽपि विरोधे यदा श्यामताऽपैति पीतता चोत्पद्यते तदा विगमप्रतिपत्त्योरेकः कालोऽतः शब्दार्थोऽपि न सङ्गच्छते सहानवस्थानमिति, तस्मान्नास्ति विरोधः॥

अथ द्वितीयपक्षमाश्रयते—कालान्तरावस्थायित्वे सति दृष्टयोरेकत्रान्यतरस्यानवस्थानमुभयानवस्थानं वा विरोध इति, सोऽप्यसङ्गतः, कालान्तरावस्थायितायामेकत्र तावन्न विरोधः। उत्तरकालमनवस्थानोपलब्धेर्विरोध इति चेत्, एवं सति न कस्यचित् स्त्रीमनुष्यबलीवर्दादेर्विरोधः स्यात्, तस्मादुपेक्ष्यः। नापि प्रतिबन्ध्यप्रतिबन्धकभावलक्षणो विरोधः सदसतोर्नित्यानित्ययोर्वा, अभिन्नकालमेकत्रात्मद्रव्ये किल धर्माधर्मावुभावपि स्तः, तयोश्चैकस्य प्रधानभावोऽन्यस्य गुणभावः, प्रधानगुणभावे चैकत्र द्वयमप्यस्तीति को विरोधः?। अथैवं मन्येथाः—धर्मस्य फलमधर्मफलेन प्रतिबद्धमधर्मफलं च धर्मफलेन प्रतिबद्धमेप विरोध इति, यदैकस्य प्रधानभावस्तदैव न तस्य गुणभावः, प्रधानता चोद्भूतविपाकावस्थया गुणभावोऽप्यनुद्भूतविपाकावस्थयेति, एतदप्ययुक्तम्, यस्मादेकत्रात्मन्येकदा धर्माधर्मफलोपभोगोऽभ्युपगम्यत एव जैनेन्द्रैः, धर्माधर्मौ पुण्यापुण्यलक्षणौ, पुण्यापुण्ये च पुद्गलात्मके, पुद्गलाश्च ज्ञानावरणादिभेदेन परिणताः, कर्म चतुर्विंशत्युत्तरप्रकृतिशतभेदम्, तत्र कर्मप्रकृतीनामशीतिर्द्व्यधिका पापमपुण्यमधर्म इति संज्ञाता, चत्वारिंशत् द्व्यधिका तु पुण्यं धर्म इति, तत्र कासाञ्चित् प्रकृतीनां पुण्याख्यानां पापप्रकृतीनां च युगपद् विपाकाभ्युपगमे कुतः प्रतिबन्ध्यप्रतिबन्धकभावलक्षणो विरोधः?। अथापि स्यात् कासाञ्चित् प्रकृतीनां प्रतिबन्ध्यप्रतिबन्धकभावो यथा नरायुषः सुरायुषश्चैकदैकत्र विपा-

---

इत्याशङ्क्य प्रतिक्षिपति—**वध्यघातकेति**। पुनस्तयोर्विशेषमाशङ्क्य प्रतिक्षिपति—**अथैककालेति**। **विगमप्रतिपत्त्योः** विनाशोत्पादयोः। विगमोत्पादयोरेककालावस्थितत्वात्सहावस्थानमेवेति तत्र सहानवस्थानशब्दार्थघटना नेत्याह—**अत इति**।

अथ यावेकत्र कालान्तरं स्थितौ पश्चादन्यतरविनाश उभयविनाशौ वा तौ विरुद्धाविति द्वितीयपक्षखण्डनायोपक्रमते—**अथ द्वितीयपक्षमाश्रयत इति**, वादीति शेषः। तत्पक्षाभिप्रेतं विरोधस्वरूपमुपन्यस्य प्रतिक्षिपति—**कालान्तरावस्थायित्वे सतीति**। एकत्र देशे विरुद्धतयाऽभिमतयोरुभयोः कालान्तरावस्थायितायां सत्त्या साहचर्यस्यैव विरोधप्रतिपक्षस्य भावात्कुतो विरोध इत्याह—**कालान्तरेति**। कश्चित्कालमवस्थानेऽपि उत्तरकालमनवस्थानाद्विरोध इति परः शङ्कते—**उत्तरकालेति**। विरुद्धयोरप्युत्तरकालमवस्थितिर्येषां दृश्यते तेषामविरोध एव एवं सति स्यादित्याह—**एवं सतीति**। प्रकारान्तरं विरोधस्याशङ्क्य प्रतिक्षिपति—**नापीति**, सदसतोर्नित्यानित्ययोर्वा प्रतिबध्यप्रतिबन्धकभावलक्षणविरोधो नेत्यन्वयः। यथा धर्माधर्मावन्योन्यं विरुद्धाविति लोके प्रसिद्धौ परं तयोर्न प्रतिबध्यप्रतिबन्धकभाव एककालावच्छेदेनैकत्रात्मनि तयोर्भावादिति प्रसिद्धलक्ष्यातिक्रमस्तथा, प्रकृतेऽपि भविष्यतीत्याह—**अभिन्नकालेति**। **तयोः**, धर्माधर्मयोः। प्रधानगुणभावश्च फलप्रदानोन्मुखत्वानुन्मुखत्वाभ्याम्। एकदा तदुभयं न फलं प्रसूत इति फलविरोधेन तयोर्विरोध इति पराभिप्रायमाशङ्कते—**अथैवं मन्येथा इति**। फलविरोधकृतोऽपि न तयोर्विरोध इति स्याद्वादमतोपदर्शनेनोक्ताशङ्कां प्रतिक्षिपति—**एतदप्ययुक्तमित्यादिना**। कथमभ्युपगम्यत इत्यपेक्षायां जैनीं प्रक्रियामपूर्वामुद्घाटयति—**धर्माधर्मावित्यादिना**। **कर्मे**त्येकवचनं जात्येकत्वविवक्षया। **चतुर्विंशत्युत्तरप्रकृतिशतभेदमिति**, प्रकृतिशब्दोऽत्र भेदपर्यायः, तथा च मूलभेदापेक्षया अष्टविधस्यापि कर्मण उत्तरभेदाश्चतुर्विंशत्यधिकं शतमित्यर्थः। ननु कर्मग्रन्थादौ विंशत्यधिकं शतमिति कथं न विरोध इति चेन्न, वर्णचतुष्कस्य शुभाशुभभेदेन द्विधाविवक्षणाच्चतुस्संख्याधिक्येऽपि क्षत्यभावात्।

अत्र कति कर्मप्रकृतयः पापसंज्ञिताः कति च पुण्यसंज्ञिता इत्यपेक्षायामाह—**तत्रेति**। तयोः फलतोऽपि न विरोध इत्युपपादनायाह—**तत्र कासांचित्प्रकृतीनामिति**। यासामपि कर्मप्रकृतीनां प्रतिबध्यप्रतिबन्धकभावो विद्यते तत्रापि कर्मणो न सहानवस्थानलक्षणविरोध इत्यावेदयितुमाह—**अथापि स्यादिति**। उक्तविरोधाभ्युपगमेऽपि प्रकृते न किञ्चिद-

काभावः, तत्रापि न कर्मणः सहावस्थानमनिष्टम्, किं तर्हि ? विपाकपर्याययोरसहावस्थितिः; [अथ] नरायुर्विपाकपर्यायः सुरायुषो विपाकेन सह नावतिष्ठत इत्यसहावस्थानलक्षण एव, विगमप्रतिपत्त्योश्चैककालत्वाज्जातुचित् सहावस्थानमपीति । उपेत्य वा ब्रूमः—अस्त्वयं विरोधः, प्रस्तुते वस्तुनि न कश्चिद् दोषः, इष्यत एव द्रव्यपर्याययोरन्यतरस्य गुणप्रधानभावः, कदाचिद् द्रव्यं विवक्ष्यते, न पर्यायः, कदाचित् पर्यायो विवक्ष्यते, न द्रव्यम्, उभयं तु सम्भवति, त्वयाऽप्येककालयोरेव प्रतिवन्ध्यप्रतिवन्धकभावोऽभ्युपेयते, अन्यथा स एव न स्यात् प्रतिवन्धः, अतो न कश्चिद् विरोधः । सदसतोर्नित्यानित्ययोर्वा भिक्षुवरधर्मकीर्तिनापि विरोध उक्तः **प्रमाणविनिश्चयादौ**, स पुनरयं विरोधः कथं गम्यते ?, क्वचिदविकलकारणस्य भवतोऽन्यभावेऽभावाद् विरोधगतिर्भवति, यथा—शीतोष्णस्पर्शयोरसहावस्थानम्, अन्योन्यपरिहारस्थितिलक्षणतया वा विरोधो नित्यानित्यवत्—अन्योन्यं परस्परं व्यवच्छेदः परिहारस्तेनान्योन्यपरिहारेण स्थितिलक्षणोऽन्योन्यव्यवच्छेदरूपः, परस्परपरिहारस्थितिलक्षणतया च विरोधिनोर्नित्यनित्ययोरेकपरिग्रहोऽपरत्यागनान्तरीयक एकत्यागोऽप्यपरपरिग्रहाविनाभावी, तथा भावाभावयोरेकत्राभावः, एष च प्रतियोगिव्यवच्छेदरूपः सामयिकोऽसहावस्थानभेद एव, पूर्वकस्तु शीतोष्णस्पर्शयोश्छायातपयोः प्रकाशतमसोश्च दृश्यात्मनोः परिनिष्पन्नयोरेकत्राभावादनुपलब्धिलक्षण इत्येतावान् विशेष इति । अत्रोच्यते—तार्किकापशब्देन न किञ्चिदत्रातिरिक्तमपदिष्टम् । यदप्यपादेशि तदप्यसमीचीनम्,

---

निष्टमित्याह—**उपेत्य वेति** । **उभयं त्विति**, द्रव्यपर्यायोभयं त्वित्यर्थः । **अन्यथा** प्रतिवध्यप्रतिवन्धकयोस्तुल्यकालत्वाभावे । **स एव** प्रतिवध्यप्रतिवन्धकभावनिवन्धनप्रयुक्तो य एवंभूत एव । **न स्यात् प्रतिवन्धः**, प्रतिबन्धः स्थगनम्, कार्यस्यानुत्पादो न स्यादित्यर्थः । अयमभिप्रायः वह्निः प्रतिवध्यः चन्द्रकान्तमणिः प्रतिवन्धकस्तयोस्तुल्यकालत्वे एव दाहरूपकार्यानुत्पादलक्षणो वह्नेः प्रतिवन्धो भवति, अतुल्यकालत्वे तु वह्निना दाहो जन्यत एवेति नास्ति प्रतिवन्ध इति । उक्तविरोधखण्डनमुपसंहरति—**अतो न कश्चिद्विरोध इति** । **सदसतोर्नित्यानित्ययोर्वेति** ग्रन्थः पूर्वान्वय्यपि सम्भवति सदसतोर्नित्यानित्ययोर्वा न कश्चिद्विरोध इत्येवम्, उत्तरग्रन्थेनाप्यन्वेतुमर्हति सदसतोर्नित्यानित्ययोर्वा विरोधो भिक्षुवरधर्मकीर्त्तिनाऽप्युक्त इति । इदानीं बौद्धाभिमतविरोधखण्डनायोपक्रमते—**भिक्षुवरेति**, बौद्धविशेषेत्यर्थः । **प्रमाणविनिश्चयादौ** प्रमाणविनिश्चयाभिख्यग्रन्थादौ । **स** धर्मकीर्तिदर्शित । **कथं गम्यते** कया रीत्या प्रज्ञापनागोचरः क्रियते, एवंविधजिज्ञासया पूर्वपक्षीभूतं धर्मकीर्त्तिमतमुपदर्शयति—**क्वचिदित्यादिना** । अन्योन्यपरिहारस्थितिलक्षणं विरोधं व्याख्यानपुरस्सरं लक्ष्ये सङ्गमयन्नाह—**अन्योन्यमित्यादिना** । **एकपरिग्रहोऽपरत्यागनान्तरीयकः**, एकस्य नित्यस्य परिग्रहः स्वीकारोऽपरस्यानित्यस्य यस्त्यागो व्यवच्छेदस्तेन नान्तरीयको व्याप्तः, नित्याभ्युपगतावश्यमनित्यपरित्याग इति यावत् । **एकत्यागो**ऽनित्यस्य व्यवच्छेदः । **अपरपरिग्रहाविनाभावी** अपरस्य नित्यस्य यः परिग्रहः स्वीकारस्तेनाविनाभावी व्याप्तः, अनित्यप्रतिषेधेऽवश्य नित्यस्वीकार इति यावत् । परस्परपरिहारस्थितिलक्षण एव विरोधो भावाभावयोरपीत्याह—**तथेति** । **एकत्राभावः**, भावाधिकरणे तदभावस्याभावः, अभावाधिकरणे तत्प्रतियोगिनो भावस्याभावः । असहावस्थानपरस्परपरिहारस्थितिलक्षणयोर्विरोधयोर्विशेषमुपदर्शयितुमाह—**एष चेति**, **एष** परस्परपरिहारस्थितिलक्षणो विरोधः, **प्रतियोगिव्यवच्छेदः**, प्रतियोगिनो विरोधिन, एकस्यापरो व्यवच्छेदोऽभाव, परस्पराभावरूप इति यावत् । **सामयिकः** समयनिवन्धनः, एकक्षणावच्छेदघटित इति यावत्, यदा यत्र प्रतियोगी तदा न तत्र तदभावः, यदा यत्राभावस्तदा न तत्र तत्प्रतियोगीत्येवंरूपमसहावस्थानमेव परस्परपरिहारस्थितिलक्षण इति निर्गलितोऽर्थः । **पूर्वकस्तु**, असहावस्थानलक्षणविरोधस्तु । **दृश्यात्मनोः** निर्विकल्पकवेद्ययो, अत एव विभिन्नाधिकरणतया व्यवस्थितयोः स्वलक्षणयोरिति यावत् । ग्रन्थकृत्समाधत्ते—**अत्रोच्यत इति** । **तार्किकापशब्देन** तार्किकाभासेन धर्मकीर्तिना । **अपदिष्टम्** उक्तम्, एतेना सहावस्थानलक्षणविरोधखण्डनप्रकारो मया यः प्रागभिहितः सोऽत्राप्यविस्खलित एवेति ध्वनितम् । विरोधद्वैविध्योपन्यासप्रकारोऽपि धर्मकीर्त्तेर्न शोभन इत्याह—**यदप्यादेशीति** । **नामैव च लक्षणम्**, यदेवं च विरोधस्यासहावस्थानलक्षणमिति

यतोऽसहावस्थानलक्षण एव विरोधो द्विधा कल्प्यते, नामैव च लक्षणं, न सहावस्थानं लक्षणं यस्य विरोधस्येत्यनेनैव शीतोष्णस्पर्शयोरिव नित्यानित्यविरोधस्यापि सङ्गृहीतत्वाद् भेदेनाभिधाने प्रयोजनाभावाद् दुर्विदग्धतामात्रमेवावशिष्यते भिक्षुवरस्य । स्यादियमारेका, दृश्यपरिनिष्पन्नयोः प्राच्यः, इतरः परिकल्पितरूपयोः, स्वसामान्यलक्षणविषयत्वेन भेदप्रकाशनमिति, एतदप्यसङ्गतम्, स्वलक्षणभेदानामानन्त्यात् परिकल्पवहुत्वाच्च कुतो द्वैविध्यम् । अपि च नित्यता भवतु परिकल्पः, अनित्यता पुनः संस्कृतलक्षणम्, "उत्पत्तिः स्थितिर्जराऽनित्यते"ति वचनात् । **दिग्नागे**नाप्युक्तम्, "नित्यसमायां जातौ स एव तु भावोऽभूत्वा भवन् भूत्वा वाऽभवन्ननित्य इत्युच्यते, सा चावस्था भावप्रत्ययेनानित्यते"ति, एवं च न नित्यानित्ययोः सामान्यलक्षणयोर्विरोधः, नापि स्वलक्षणसामान्यलक्षणयोः, स्वलक्षणोपादा-

---

नाम तदेव च लक्षणमिति । एतदेव भावयति–**न सहावस्थानमिति** । भवतु नामैव लक्षणं ततः का नो हानिरत आह–**अनेनैवेति,** उक्तलक्षणेनैवेत्यर्थः । **भेदेनाभिधान इति,** परस्परपरिहारस्थितिलक्षणतयाऽभिधान इत्यर्थः । **दुर्विदग्धता** दुष्पाण्डित्यम् । **भिक्षुवरस्य** धर्मकीर्त्तेः । स्वलक्षणयोर्वस्तुभूतयोः प्रथमो विरोधः, सामान्ययोश्च परिकल्पितयोर्द्वितीय इति विषयभेदेन विरोधद्वयोपदर्शनं नायुक्तमिति पराभिप्रायमुत्थापयति–**स्यादियमारेकेति । प्राच्यः,** असहावस्थानलक्षणो विरोधः । **इतरः** परस्परपरिहारस्थितिलक्षणो विरोधः । **स्वसामान्यलक्षणविषयत्वेनेति,** अत्र स्वलक्षणसामान्यविषयत्वेनेति पाठो युक्तः, यतः सामान्योत्तरलक्षणशब्देन स्वस्य सम्बन्धे स्वलक्षणलाभेऽपि सामान्यलक्षणस्यापि लाभात्, न च विकल्पगोचरस्य सामान्यलक्षणपरिभाषा बौद्धानां किन्तु सामान्यपरिभाषैवेति, अथवोत्तरग्रन्थपर्यालोचनात्सामान्यलक्षणपरिभाषाऽपि परिकल्पितस्यातो यथाश्रुतपाठोऽपि युक्त एवेति बोध्यम् । तथा च स्वलक्षणविषयत्वेनासहावस्थानलक्षणविरोधस्य कथनं सामान्यलक्षणविषयत्वेन परस्परपरिहारस्थितिलक्षणविरोधस्य कथनमित्येवं प्रयोजनसम्बन्धाद्विरोधद्वैविध्योपवर्णनं प्रेक्षापूर्वकारितैवावेदयति कर्त्तुर्धर्मकीर्त्तेरित्याशयः । यदि विषयद्वैविध्याद्विरोधद्वैविध्यं तदा स्वलक्षणानामप्यनेकप्रकारत्वात् परिकल्पितानां सामान्यलक्षणानामप्यनेकविधत्वाद्विरोधानन्त्यमेव स्यान्न द्वैविध्यमिति समाधत्ते–**एतदप्यसङ्गतमिति । परिकल्पेति,** सामान्येत्यर्थः । यदि च स्वलक्षणानामवान्तरभेदेऽपि स्वलक्षणत्वेन सर्वेषामुपग्रहात् सामान्यलक्षणानामवान्तरभेदेऽपि सामान्यलक्षणत्वेन सर्वेषामुपग्रहाच्च विषयद्वैविध्यमास्थाय विरोधद्वैविध्यमुच्यते तदाप्याह–**अपि चेति** । बौद्धमते क्षणिकैकान्ते नित्यस्य कस्यचिदभावान्नित्यत्वं कल्पितरूपमेवेति कृत्वा परिकल्परूपत्वेन सामान्यलक्षणत्वं भवतु, अनित्यं तु तन्मते स्वलक्षणमतोऽनित्यत्वं वस्तुभूतं परिकल्पत्वाभावान्न सामान्यलक्षणम्, तयोर्विरोधो न स्वलक्षणैकविषयलक्षणलक्ष्यो नापि सामान्यलक्षणैकविषयलक्षणलक्ष्यः, विरोधस्य तृतीयप्रकारस्तु भवता नोपदर्शित एवेति तयोर्विरोध एव न स्याद्, भवन् वा विरोधस्य तृतीयप्रकारमादाय स्यात्, ततो द्वैविध्याभिधानं विरोधस्यासङ्गतमेवेत्याह–**नित्यतेति । संस्कृतलक्षणमिति,** संस्कारप्राप्तं स्वमेव लक्षणं यस्येति व्युत्पत्त्या स्वलक्षणमित्यर्थः, वस्तुस्वरूपाख्याने नास्य संस्कारो विहित इत्यत्रैतत्स्वरूपप्रख्यापकवचनं प्रमाणतयोपदर्शयति–**उत्पत्तिरिति,** परमाण्वादीनां योत्पत्तिः सैव स्थितिस्तैषामन्यदाऽवस्थानाभावेन तद्रूपस्थितेरसम्भवात्, या जरा विनश्यदवस्था सैवानित्यता, अतिरिक्तध्वंसस्यानभ्युपगमेन तत्प्रतियोगित्वलक्षणानित्यत्वस्याभावात्, एवञ्च वस्तुस्वरूपमेवानित्यत्वमतो न परिकल्पः । बौद्धप्रकाण्डेन दिग्नागेनापि संस्कृतलक्षणमनित्यमिति तेनापि वस्तुभूतमेवानित्यत्वमुपगतमिति दर्शयति–**दिग्नागेनाप्युक्तमिति** । किमुक्तमित्यपेक्षायां तदुक्तिमुपनिवध्नाति–**नित्यसमायामिति,** असदुत्तररूपाया जातेर्विशेषो नित्यसमाभिधानजातिस्तस्यां प्रसङ्गागतायामित्यर्थः । **सा चावस्थेति,** अभूत्वा भवनलक्षणा भूत्वाऽभवनलक्षणा चेत्यर्थ, अवस्था चावस्थातुरभिन्नेति स्वलक्षणरूपताऽनित्यत्वस्य ततः प्राप्तेति भावः । भवत्वनित्यत्वं स्वलक्षणमेव ततः किमत आह–**एवञ्चेति,** नित्यत्वस्य परिकल्पत्वेऽनित्यत्वस्य स्वलक्षणत्वे चेत्यर्थः । **न नित्येति,** सामान्यलक्षणयोर्यो विरोधः परस्परपरिहारस्थितिलक्षणः स न नित्यानित्ययोः, नित्यत्वस्य सामान्यलक्षणत्वेऽपि अनित्यत्वस्य तत्त्वाभावादित्यर्थः, स्वलक्षणयोर्योऽसहावस्थानलक्षणो विरोधः स नित्यानित्ययोर्धर्मकीर्त्तिनाऽपि नाभ्युपगत इति तत्प्रतिक्षेपो न कृतः, अर्थात्प्रतिक्षेपस्तु तस्यागत एव, अनित्यत्वस्य स्वलक्षणत्वेऽपि नित्यत्वस्य तत्त्वाभावादिति । भवतु तत्संग्रहाय विरोधस्य तृतीयप्रकारोऽप्यत आह–**नापि स्वलक्षणसामान्यलक्षणयोरिति** । नित्यं यदि किञ्चि-

नत्वात् सामान्यलक्षणस्य, परिकल्पितयोश्च खरतुरगविषाणयोर्विरोध इत्यद्भुतमपश्यद् भिक्षुवरः, तस्मात् स्वलक्षणविषय एव विरोधोऽस्तु, तत्रापि न स्वलक्षणमित्येव विरोधः, किन्तु द्रव्याणां द्विविधाः पर्यायाः—क्रमभुवः सहभुवश्च, युगपदवस्थायिनोऽयुगपदवस्थायिनश्च, सूक्ष्माः स्थूलाश्च, साध्याः साधनानि च, व्यापृताश्चाव्यापृताश्च, यथा घटे सद्द्रव्यमूर्ताचेतनरूपरसगन्धस्पर्शसङ्ख्यासंस्थानादयः सहभुवो युगपदवस्थायिनः, स्थूलाः सूक्ष्माश्च, साधनानि साध्यानि च, कार्यवशाद् व्यापृताश्चोदकाद्याहरणादिषु; मृत्पिण्ड—शिवक-स्थासक-कोशक-कुशूल-घट-कपाल-शकल-शर्करा-पांशु-त्रुटि-परमाणवः क्रमभुवः, नहि मृदादिसामान्यव्यतिरेकेण पिण्डादिधर्मा भवितुमुत्सहन्ते, न ह्यङ्गुलिभेदेनर्जुकुटिलतयोः सम्भवः, सैव हि साङ्गुलिः स्वाँस्तु धर्मान् पारम्पर्यमात्रप्रतिलब्धवृत्ती क्रमेणोन्नमयति, मयूराण्डकरसवदुपारूढस्वरूपाख्येति वचनात्, एत एवासहावस्थायिनः सूक्ष्माः स्थूलाश्चापेक्षया नित्यानित्यादयः साध्याः साधनानि चाव्यापृता उदकाद्याहरणादिषु; तेषां को नामायं विरोधः ? । ननु सहानवस्थानम्, तन्न,

---

स्यात्तदा तदाधारतया कल्पितं नित्यत्वं सामान्यलक्षणं भवेत्, न च बौद्धमते किञ्चिन्नित्यमतो नित्यत्वं सामान्यलक्षणमपि न भवत्येवातस्तृतीयप्रकारोऽपि विरोधस्य न तत्र घटामाटीकत इत्याह—**स्वलक्षणोपादानत्वादिति,** स्वलक्षणाश्रितत्वादित्यर्थः । यदि च स्वलक्षणानाश्रितत्वेन नित्यत्वमनित्यत्वञ्चासामान्यलक्षणमपि परिकल्पितमिति परिकल्पितयोर्विरोध इति लक्षणाक्रान्तमेवेत्यभ्युपगम्यते तदापि तयोर्विरोधो न घटत एव, परिकल्पिताशेषोपाख्याविकलतया विरोधाविरोधादिधर्मानास्पदत्वाद्, अन्यथा खरतुरगविषाणयोरपि विरोधस्स्यादित्याह—**परिकल्पितयोश्चेति** । सामान्यस्य स्वलक्षणोपादानत्वे स्वलक्षणत्वमेवाऽन्यथा तु परिकल्पितत्वमेवोभयथाऽपि न सामान्यलक्षणत्वमिति सामान्यलक्षणयोर्विरोध इति नास्त्येव भिदा किन्तु स्वलक्षणयोर्विरोध इत्येक एव भेदो विरोधस्येति विषयभेदाभावाद्विरोधद्वैविध्यमसङ्गतमेवेत्याह—**तस्मादिति** । अस्तु स्वलक्षणयोर्विरोध इत्येक एव प्रकारस्तमाश्रित्यैव नित्यानित्ययोर्विरोधः सङ्गमनीय इत्यत आह—**तत्रापीति,** विरोधस्य स्वलक्षणमात्रविषयत्वेऽपीत्यर्थः । **न स्वलक्षणमित्येव विरोध इति,** इदमपि स्वलक्षणमिदञ्च स्वलक्षणमित्येतावन्मात्रं न विरोधः, अविरुद्धोभयस्वभावस्यैकस्य स्वलक्षणस्य सम्भवात् । तर्हि स्वलक्षणयोर्विरोध इति कोऽर्थ इति पृच्छति—**किन्त्विति** । द्रव्याणां ये पर्यायाः स्वलक्षणभूतास्तेषां विभिन्नस्वभावानां विरोधः स्यात्, सोऽपि विरोधः प्ररेण निरुच्य योजयितुमशक्य इत्याशयेनोत्तरयति—**द्रव्याणामित्यादिना** । के सहभुवः के वा क्रमभुवः पर्याया इत्याद्यपेक्षायां युगपदवस्थायिनः **सहभुवः,** अयुगपदवस्थायिन **क्रमभुव** इति योज्यम् । **स्थूलाः सूक्ष्माश्चेत्यादयः** सहभुवा क्रमभुवां चान्वेतुमर्हन्ति, एतदुदाहरणेन स्पष्टयति—**यथेत्यादिना** । **कार्यवशाद्व्यापृताश्चोदकाद्याहरणादिष्वित्यन्तमेको** ग्रन्थः, उदकाहरणादिषु व्यापारश्च सद्द्रव्यादीनां घटपर्यायाभेदभावेनेति बोध्यम् । **मृत्पिण्डेत्यादि अव्यापृता उदकाद्याहरणादिष्वित्यन्तमेको** ग्रन्थः, अत्र पर्यायाणां भेदविवक्षयाऽव्यापृतत्वमुक्तम् । द्रव्येण सहावस्थानादभिन्नतयोपलब्धेश्च सहभुवां द्रव्यपर्यायत्वमनुभवारूढत्वाच्छ्रद्धेयं भवतु क्रमभुवां तु तत्त्वं कथं श्रद्धेयमित्यत आह—**नहीति** । यदि पिण्डशिवकादयो मृदमन्तरेणानुभवपथमवतरेयुस्तर्हि तेषां मृद्भिन्नत्वेन मृत्पर्यायत्वं न स्यात्, न चैवमतो मृत्पर्याया एव ते, मृद एव तेन तेन रूपेण परिणमनादित्याह—**नहि मृदादीति,** आदिपदात्सद्द्रव्यमूर्तादिसामान्यानामुपग्रहः । उक्तमर्थमेव दृष्टान्तद्वारा भावयति—**नह्यङ्गुलिभेदेनेति** । **सैव हि साङ्गुलिरिति,** सैव ह्यङ्गुलिरित्येव पाठो युक्तः । **धर्मान्** ऋजुत्वकुटिलत्वादीन् । **क्रमेणोन्नमयति** क्रमेणाविर्भावयति, ताँस्तान् धर्मान् क्रमेण प्रतिपद्यत इति यावत् । न चैतदनागमिकमित्याह—**मयूराण्डकेति,** मयूराण्डकरसे यथा मयूराकृतिविचित्ररूपसचन्द्रकपक्षादिस्वरूपनिमग्नमेव क्रमेणाविर्भवति तथेत्यर्थः । **उपारूढस्वरूपाख्येति,** प्रथमत एव उपारूढमन्तर्विवर्त्तमानं स्वरूपं सन्निवेशविशेषादिस्तदाख्या नाम चेत्यर्थः । **एते एव** मृत्पिण्डशिवकस्थासकादय एव, तेषां पर्यायाणां येऽनुवर्त्तन्ते तद्रूपेण नित्याः, ये चान्येऽन्ये च भवन्ति व्यावर्त्तन्त इति यावत् तद्रूपेणानित्या इत्याह—**अपेक्ष्येति** । **नित्यानित्यादय इति,** आदिपदात्सदसद्भिन्नाभिन्नादीनामुपग्रहः । तेषां च पर्यायाणामेकस्मिन् द्रव्ये सम्भवान्नास्ति विरोध इत्याह—**तेषां को नामाऽयं विरोध इति** । पर आह—**नन्विति** । प्रतिक्षिपति—**तन्नेति** ।

सहोत्पादावस्थानदर्शनादेकद्रव्यवृत्तित्वाच्च, द्रव्यमेव चक्षुरादिग्रहणापदेशविशेषाद् रूपादिव्यपदेश्यमेक-पुरुषपितृपुत्रत्वादिवत्, न च रूपादीनां समुदायैकरूपताऽभ्युपगमनीया, रूपग्रहणे रसादिग्रहणप्रस-ङ्गादिन्द्रियान्तरवैयर्थ्यसङ्करादिदोषप्रसङ्गाच्च । न चाभावता, प्रमाणाभावात् प्रसिद्धिविरोधाच्च । स्वल-क्षणविरोधोऽपि नास्त्येव, सामान्यविशेषात्मैकलक्षणत्वात् स्याद्वादिपरिगृहीतस्य वस्तुनः, जात्यन्तर-त्वाच्च नरसिंहवदेकान्तवादिपरिकल्पिताद् वस्तुन इति । स्यात् तु क्रमजन्मनां धर्माणामसहावस्थायिनां

---

य एवैकापेक्षया स्थूलः स एवान्यापेक्षया सूक्ष्म इत्येक एव पर्याय एकदैव स्थूलतयाऽप्युत्पन्नः सूक्ष्मतयाऽपि, एवं स्थूलतया-ऽप्यवस्थितं सूक्ष्मतयाऽप्यवस्थितम्, य एव पर्यायः स्वोत्तराविच्छिन्नकतिपयपर्यायानुगामितया नित्यः स एव स्वपूर्वावस्थ-सद्द्रव्यादिसामान्यापेक्षयाऽननुगामितयाऽनित्य इत्येवं नित्यानित्ययोरपि सहोत्पादसहावस्थानादि भावनीयम् । न च नित्यस्यो-त्पाद एव नास्तीति वाच्यम्, स्वविशेषस्वरूपतयोत्पादस्य तत्रापि भावात्, सहोत्पादावस्थानात्कालिकाविरोध उक्तः, देशतोऽपि तेषां सहावस्थानमस्तीत्याह–**एकद्रव्यवृत्तित्वाच्चेति** । रूपत्वरसत्वादीनां विभिन्नेन्द्रियग्राह्याणां विभिन्नाधिकरणवृत्तीनां नास्त्येकदेशतेति तेषां सहानवस्थानमेवेति परो यदि ब्रूयात्तत्राह–**द्रव्यमेवेति** । **चक्षुरादीति,** आदिपदाद्रसनादिपरि-ग्रहः । **ग्रहणापदेशो** ग्रहणविषयत्वम्, तथा च एकमेव द्रव्यं चक्षुर्मात्रजन्यग्रहविषयत्वाद्रूपपदवाच्यं त्वग्मात्रजन्यज्ञान-विषयत्वात् स्पर्शपदवाच्यं रसनेन्द्रियजन्यप्रत्यक्षविषयत्वाद्रसपदवाच्यं घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वाद्गन्धपदवाच्यमित्येकत्रैव द्रव्ये तत्तदपेक्षया रूपत्वादिकं वर्त्तत इति रूपत्वादीनामपि सहावस्थानमेवेति भावः । कथमेकस्मिन्नपेक्षाभेदेन विरुद्धस्वभावा-नामपि समावेशोऽदृष्टचरोऽभ्युपेय इत्यतस्तत्र दृष्टान्तमाह–**एकपुरुषपितृपुत्रत्वादिवदिति,** आदिपदान्मातुलत्वभागि-नेयत्वादीनां ग्रहणम् । यथैक एव देवदत्तः स्वपुत्रापेक्षया पितृपदव्यपदेश्यः स्वपित्रपेक्षया पुत्रपदव्यपदेश्यः, स्वभागिने-याऽपेक्षया मातुलपदव्यपदेश्योऽपि स्वमातुलापेक्षया भागिनेयपदव्यपदेश्यः, एवं पितृव्यभ्रातृव्यादिपदव्यपदेश्यस्तथा प्रकृते-ऽपीति । ननु रूपादीनां रूपरसगन्धस्पर्शसमुदायात्मकत्वं यदेव रूपं तदेव रसादीत्येकमेव वा किमिति नाभ्युपेयते विरोधस्य भवतैव स्वहस्तितत्वादित्यत आह–**न चेति** । निषेधे हेतुमाह–**रूपग्रहण इति** । अनानुभविकस्यापि रूपग्रहणे रसादि-ग्रहणप्रसङ्गस्येष्टत्वे दोषान्तरमाह–**इन्द्रियान्तरेति,** रूपादीनां समुदायैकरूपत्वे चक्षुषो रूपग्रहणसामर्थ्ये रसग्रहणसाम-र्थ्यमभ्युपेयमेव अन्यथा रसादिघटितसमुदायात्मकरूपग्रहणसामर्थ्यमपि न स्यादित्येकेनैव चक्षुषा रूपादिग्रहणोपपत्तौ रसने-न्द्रियादिकमनर्थकं प्रसज्येत, एवं चक्षुर्ग्राह्यस्य रूपत्वे रसस्यापि रूपत्वं रसनाग्राह्यस्य रसत्वे रूपस्यापि तत्त्वमित्येवं सङ्कीर्ण-ताऽपि स्यादित्यर्थः, आदिपदाद्व्यतिकरादिदोषस्योपग्रहः । ननु समुदायरूपत्वे एकरूपत्वे चोभयत्रापि दोषदर्शनादनभ्युपेयमेव रूपादिकं विभिन्नरूपमेव वाऽऽस्थेयमित्यत आह–**न चाभावतेति,** तुच्छरूपत्वमनेकरूपत्वं वाऽभावत्वमत्र निषेध्यतया-ऽभिमतम्, उभयत्र **प्रमाणभावादिति** हेतुः, विधिमुखेनैव प्रतीयमानाना रूपादीनां निषेधरूपत्वे प्रमाणाभावात्, चक्षु-रादिकञ्च रूपं रस इत्यादिरूपेणैव गृह्णाति न तु रूपं रसात्पृथगित्यादिरूपेणेति सर्वथा नानात्वेऽपि प्रमाणाभावादित्यर्थः, नानात्वस्याभावता चैकत्वस्य भावताविवक्षया बोध्या, या च रूपस्य रूपमिति विधिमुखेन प्रतीतिरूपा प्रसिद्धिः, एवं रसादीना-मपि, तद्विरोधोऽपि तेषामभावरूपत्वे इत्याह–**प्रसिद्धिविरोधाच्चेति** । ननु द्रव्यं स्वलक्षणं सत् कथं तिर्यक्सामान्याद्या-त्मकमिति स्वलक्षणात्मकविशेषसामान्ययोः सहानवस्थानविरोधो भविष्यतीत्यत आह–**स्वलक्षणविरोधोऽपि नास्त्येवेति** । एकस्यैव वस्तुनोऽनुवृत्तिबुद्धिजनकत्वात्सामान्यत्वं व्यावृत्तिबुद्धिजनकत्वाद्विशेषत्वमित्येक एव भावः सामान्यविशेषोभयात्मा, न त्वत्यन्तव्यतिरिक्तसामान्यमुपादायानुगतबुद्धिरतिरिक्तविशेषमुपादायव्यावृत्तबुद्धिः, अन्योऽन्यव्यतिरिक्तयोः सामान्यविशेषयोरभावा-दित्याशयेनाह–**सामान्यविशेषात्मकैकलक्षणत्वादिति,** एतत्तत्त्वञ्च–

"स्वतोऽनुवृत्तिव्यतिवृत्तिभाजो भावा न भावान्तरनेयरूपाः । परात्मतत्त्वादतथात्मतत्त्वाद्द्वयं वदन्तोऽकुशला स्खलन्ति ॥ १ ॥"

इति हेमचन्द्रसूरिवरपद्यव्याख्याने स्याद्वादमञ्जर्यां व्यक्तम् । वस्तुनः सामान्यात्मकत्वपक्षे विशेषात्मकत्वपक्षे च यो दोष एकान्त-वादिभिरुद्घुष्यते स स्याद्वादपक्षे कथमुद्धरणीय इत्यपेक्षयामाह–**स्याद्वादिपरिगृहीतस्येति** । प्रत्येकपक्षे यो दोषः स उभय-पक्षे तदा भवति यदि सर्वथा तदुभयरूपमेव वस्तु भवति, यदा तु तदुभयात्मकत्वात् प्रत्येकोभयविजातीयमेव तदङ्गीक्रियते तदा सामान्यपक्षभाविनो दोषस्य कथञ्चिद्विशेषात्मकत्वेन विशेषपक्षभाविनो दोषस्य कथञ्चित्सामान्यात्मकत्वेन परिहारस्य सम्भवेन नास्ति दोषकणस्याप्यवकाश इत्याशयेनाह–**जात्यन्तरत्वाच्चेति** । न चैतदृष्टचरमित्यावेदयितुमाह–**नरसिंहवदिति** । कस्मा-

देवमनुष्यादीनां मृत्पिण्डशिवकादीनां च विरोधोऽसहावस्थानलक्षणः, सोऽपि द्रव्यास्तिकनयप्राधान्यादभेदे विवक्षिते पर्यायाणां द्रव्यव्यतिरेकेणानभ्युपगमान्नास्तीति न कश्चिद् विरोधोऽस्ति स्याद्वादिनः, तमःप्रकाशच्छायातपशीतोष्णविरोधोदाहरणनिरास उक्तविधिनाऽवगम्यः, द्रव्यार्थतो नित्याः पुद्गलाः तमस्तया च क्रमजन्मानः परिणमन्ते पर्यायाः, सामान्यस्याभिन्नत्वादेकरूपा एवेति कः केन विरुध्यते ? । इत्थमर्थस्य सामान्यविशेषात्मैकरूपत्वेऽन्योन्यापेक्षित्वेऽनेकान्तात्मकत्वे एकान्तवादिपरिकल्पिताज्जात्यन्तरत्वे च न कश्चिद् दोषः, तथा स्थित्यंशस्य नित्यत्वादुत्पादव्ययानित्यत्वादुभयस्याभिन्नस्वभाववस्तुतायां कथमिदं घटते ? नित्यानित्ययोरेकपरिग्रहोऽपरत्यागनान्तरीयकः, एकत्यागश्चापरपरिग्रहाविनाभावीति, प्रत्यक्षादिप्रमाणबाधितत्वादुन्मत्तकप्रलापमात्रमेतदवसीयत इति, तस्मान्न परिकल्पितविषयो विरोधो न परिकल्पितापरिकल्पितविषयो न सकलस्वलक्षणविषयो नापि सामयिकः, किं तर्हि ? पर्यायनयाभिप्रायेण क्रमजन्यपर्यायविषयः, स चैक एवासहावस्थानलक्षणः, सोऽपि द्रव्यार्थनयाभिप्रायेण नैवास्तीति भावितम् । एवं चैकवस्तुविषये सदसती नित्यानित्ये च अर्पितानर्पितसिद्धेरिति व्यवस्थितम् ॥ द्वितीयसम्बन्धाभिधानेऽपि सङ्गतार्थमेव भाष्यमुक्तेन विधिना, एतमेवार्थमधुना भाष्येण प्रपञ्चयति—

---

स्याद्वादिपरिकल्पितस्य वस्तुनो जात्यन्तरत्वमित्यपेक्षायामाह—**एकान्तवादीति** । ननु युगपदवस्थायिना पर्यायाणा युगपदेकत्रावस्थानादेवोक्तलक्षणो विरोधो मा भवतु क्रमभाविना तु पर्यायाणा विरोध स्यादेवेत्यत आह—**स्यान्विति**, स्यादित्यस्य विरोध इत्यनेनान्वय । क्रमभाविनामपि पर्यायार्थिकनयाश्रयणेन भेदे विभिन्नकालवृत्तिरवादौ च विवक्षिते विरोध स्यात्, स्याद्वादे तु द्रव्यार्थिकनयाश्रयणेन तेषा स्वपरिणामिद्रव्यरूपत्वेन तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमेनान्योन्यमेकरूपत्वेन सहावस्थानमेवेति नास्ति विरोध इत्याशयेनाह—**सोऽपीति**, अस्य नास्तीत्युत्तरेण योग । उक्तन्यायेनान्यत्रापि विरोध. परिहरणीय इत्याह—**तमःप्रकाशेति** । तम प्रकाशादीना विरोधाभावमेव स्पष्टमाचष्टे—**द्रव्यार्थत इति** । निगमयति—**इत्थमित्यादिना**, मुक्तप्रकारेणेत्यर्थ । **अर्थस्य** वस्तुन., अस्य सप्तम्यन्तचतुष्टयेऽन्वय, एकस्याप्यर्थस्यान्योन्यापेक्षित्वं सामान्यविशेषात्मकत्वान्न दुर्वचम् । नित्यानित्योभयात्मनि वस्तुनि नित्यत्वांशेऽर्पितेऽनर्पितमपि अनित्यत्वांशं तदविनाभावादेव सिद्ध्यति न त्वेकविधानेऽपरत्यागोऽपरत्यागे वा तदन्यस्य विधानम्, तथा च—

"परस्परविरोधे हि न प्रकारान्तरस्थितिः । नैकतापि विरुद्धानामुक्तिमात्रविरोधत ॥ १ ॥" इति ।

परवचनमपि नात्र क्रमते स्याद्वादाभिमतजात्यन्तररूपप्रकारान्तरस्य सद्भावादित्याशयेनाह—**तथा स्थित्यंशस्येति** । **उभयस्य** नित्यानित्योभयस्य । **अभिन्नस्वभावेति**, जात्यन्तररूपेत्यर्थ । **नित्यानित्ययोरेकपरिग्रह** इत्यादि, नित्यपरिग्रहोऽनित्यत्यागनान्तरीयकः, अनित्यपरिग्रहो नित्यत्यागान्तरीयक., एवं नित्यत्यागोऽनित्यपरिग्रहान्तरीयक, अनित्यत्यागो नित्यपरिग्रहान्तरीयक इत्यर्थ, इदं कथं घटत इत्यस्यात्र सम्बन्ध, न घटत इति तदर्थ. । कुतो न घटत इत्यपेक्षायामाह—**प्रत्यक्षादीति**, प्रत्यक्षादिप्रमाणेन नित्यानित्ये सवलित एवानुभूयेते इति नित्यपरिग्रहस्यानित्यपरिग्रहाविनाभावित्वमेव न तु तत्त्यागाविनाभावित्वमित्याशय । तथा च नित्यानित्ययोरित्यादिवचनमुन्मत्तकवचनवदश्रद्धेयमित्याह—**उन्मत्तकेति** । उपसहरति—**तस्मादिति** । **परिकल्पितविषयः** सामान्यद्वयविषयः । **परिकल्पितापरिकल्पितविषयः** सामान्यस्वलक्षणविषय । **सामयिक** एककालवृत्तित्वलक्षणः । प्रत्येकं नञोपादानं विरोधप्रकाराणा सर्वेषामत्यन्तासम्यक्त्वप्रदर्शनार्थम् । तत् किं नास्त्येव कोऽपि विरोधप्रकार., नैवम्, तर्हि कोऽयं विरोध. कथञ्च स सङ्गत इत्यपेक्षायामाह—**किन्तर्हीति** । **सोऽपि** क्रमजन्मपर्यायविषयोऽसहावस्थानलक्षणविरोधोऽपि । विरोधखण्डनमुपसहृत्य प्रकृतमर्थमुपसहरति—**एवं चेति** । यत् साक्षाद्वाचकेन शब्देनाभिधीयमानं सद्व्यवहारपथमृच्छति तदर्पितव्यवहारिकं तत्सिद्धिरर्पितसिद्धि, यच्च साक्षाच्छब्देन वाचकेन नाभिधीयतेऽपि तु शब्दवाच्यार्थेन सहाविनाभावात्प्रतीयन्नेव व्यवहारपथमनुधावति तदनर्पितव्यवहारिकं तत्सिद्धिरनर्पितसिद्धिरित्येवार्पिता-

[भाष्यम्-] **अर्पितव्यावहारिकमनर्पितव्यावहारिकं चेत्यर्थः ॥**

**अर्पितव्यावहारिकमि**त्यादिना प्रक्रान्तं-त्रिविधं सन्नित्यं च, तदपेक्षया नपुंसकलिङ्ग-निर्देशः । आदिमदनादियुगपदयुगपद्भावित्रिकालविषयपर्यायार्पणभजनानेकान्तप्ररूपणो हि परिणामार्थः, तैः पर्यायैः प्रतिषेधसमग्रादेशविकलादेशैः स्वपरार्थशब्दपर्यायभजनया च स्वं स्वं तत्त्वं पुष्णातीति विस्तरेण चरितार्थमेतत्, तत्र स्थितिलक्षणोऽन्तरङ्गस्तत्परिणामरूपत्वात् तत्सहावस्थायित्वात्, बहि-रङ्गावुत्पादव्ययौ विस्रसाप्रयोगेण च कादाचित्कौ द्रव्यादिभेदात् प्रतिपन्नानन्तभेदौ; एवं चार्थोऽर्पिता-

नर्पितसिद्धेरिति सूत्रार्थ इत्याह-**अर्पितव्यावहारिकमिति,** घटादिरपि साक्षात्सत्त्ववाचकेन सच्छब्देन व्यवह्रियमाणोऽर्पित-व्यवहारिक इति, एवं गम्यमानासत्त्वादिधर्मेण व्यवह्रियमाणोऽनर्पितव्यवहारिक इति पुंलिङ्गनिर्देशोऽपि सङ्गतार्थ इति कथं नपुंसकेनैव 'अर्पितव्यावहारिकम्' इत्यादिनोपन्यास इत्यपेक्षायामाह-**प्रक्रान्तमि**त्यादि । **त्रिविधम्** उत्पादव्ययध्रौव्यरूपं वस्तु । **सन्नित्यं चेति,** चकारेण प्रक्रान्तमित्यस्यानुकर्षः । **तदपेक्षया** प्रक्रान्तनपुंसकापेक्षया । सादनादिपारिणामिकभाव-युक्तो हि अर्थः परमार्थो भवति, अर्थे सर्वेऽपि धर्माः परिणामा एव, तेन स्याद्वादप्ररूपणस्य परिणाम एव अर्थः परिणामबहि-र्भूतस्य कस्यचिद्धर्मस्याभावात्, तत्र यः कश्चित्प्रयोजनवशेन साक्षाच्छब्देन व्यवह्रियते सोऽर्पितः, यश्च गम्यः सोऽनर्पित इत्येतत्प्रपञ्चयन्नाह-**आदिमदनादीत्यादि । अर्पणभजनानेकान्तप्ररूपण इति,** अर्पणभजना अर्पणमनर्पणञ्च तद्रूपो योऽनेकान्तस्य स्याद्वादस्य प्ररूपणः स इत्यर्थः । **परिणामार्थ इति,** परिणामा आदिमदनादिमदाद्या अर्था यस्य स तथेत्यर्थः, एवंभूतो हि अनेकान्तप्ररूपणः स्याद्वादवादः स्वं स्वं तत्त्वं पुष्णाति इत्यन्वयः, एकधर्मरूपेण प्ररूपणे तु न सम्पूर्णार्थावबोध इति न तस्य स्वतत्त्वपरिपोषकत्वमित्यभिसन्धिः । अत्रेतिकर्तव्यताकाङ्क्षायां (कथम्भावाकाङ्क्षायाम्) आह-**तैः पर्यायैरिति,** तैरन्तरोदितैरादिमदनादिमदादिभिः, यस्य कस्यचित्पर्यायस्यार्पितस्य विवक्षितस्य प्रथमभङ्गविषयस्य विधिरूपत्वं सामर्थ्यप्राप्त-मेवेति कृत्वा विध्युपन्यासो न कृतः, प्रथमभङ्गप्रतिपाद्यस्य यो विपक्षभूतः स **प्रतिषेधे**त्यनेन विवक्षितः, **समग्रादेशे**त्यनेन स्यादस्ति १ स्यान्नास्ति २ स्यादवक्तव्यम् ३ इत्येवं सप्तभङ्ग्या आद्यास्त्रयः प्रकारा अभिमताः, तत्प्रतिपाद्याः पर्याया अपि वाच्य-वाचकयोरभेदविवक्षतया तथा, **विकलादेशे**त्यनेन स्यादस्ति स्यान्नास्ति १ स्यादस्ति स्यादवक्तव्यं च २ स्यान्नास्ति चावक्तव्यं च ३ स्यादस्ति स्यान्नास्ति स्यादवक्तव्यं च ४ इत्येवं चत्वारः प्रकाराः, तत्प्रतिपाद्याः पर्यायाश्च तथा, एवं तैः पर्यायैः प्रतिषेध-समग्रादेशविकलादेशैरुक्तानेकान्तप्ररूपणः स्वं स्वं तत्त्वं पुष्णातीति, तथा **स्वपरार्थशब्दपर्यायभजनया चेति,** प्ररूपणं च शब्दार्थाभ्यां सम्पद्यत इति शब्दस्य ये स्वपरपर्याया ये चार्थस्य स्वपरपर्यायास्तेषां प्रत्येकं भजना व्याख्याङ्गमिति एकपदार्थ-तत्त्वप्ररूपणेऽपि जगदेव साक्षात्परम्परया स्वपरपर्यायस्वरूपप्रविष्टतयोपयोगित्वेनाङ्गमिति स्वपर्यायस्य यस्य कस्यचित्प्रयोजनवशा-दर्पितत्वे तदविनाभावादनर्पितं स्वपर्यायान्तरं परपर्यायकदम्बकं च सिद्ध्यत्येवेति कृत्वा सर्वैरपि तैरनेकान्तप्ररूपणात्मा स्याद्वादः स्वं स्वं तत्त्वं पुष्णातीति युज्यते । एवं सति **'अर्पितानर्पितसिद्धेः'** इति सूत्रं विस्तरेण सर्वतत्त्वव्यापकतया चरितार्थं भवतीत्याह-**इति विस्तरेणेति,** एवंप्रकारव्याख्यानबहुलभावेनेत्यर्थः । **चरितार्थं** निष्पन्नप्रयोजनम् । **एतद् 'अर्पिता-नर्पितसिद्धेः'** इति सूत्रम् । स्वाभाविको हि स्वपर्यायोऽन्तरङ्गः, अन्याधीनश्च परपर्यायो बहिरङ्ग इति विवक्षयाऽर्थस्य स्थितिः स्वपर्यायोऽन्तरङ्गः, उत्पादव्ययौ च परपर्यायौ बहिरङ्गाविति स्वपर्यायोऽर्पितः परपर्यायोऽनर्पितस्तदात्मकत्वादर्थोऽर्पितानर्पित-त्वात्सिद्धेर्व्यवहारोऽस्खलद्रूप इत्युत्पादव्ययध्रौव्यात्मकोऽर्थोऽर्पितव्यावहारिकोऽनर्पितव्यावहारिकश्च भवतीत्याशयेनाह-**तत्रेति ।** अन्तरङ्गत्वे हेतुः-**तत्परिणामत्वादिति ।** कादाचित्कपरिणामस्याप्येतावताऽन्तरङ्गत्वं स्यादतो हेत्वन्तरमाह-**तत्सहावस्था-यित्वादिति ।** एतद्विपरीतस्वभावयोरुत्पादव्यययोर्बहिरङ्गत्वमुपदर्शयति-**बहिरङ्गावुत्पादव्ययाविति ।** तत्र हेतुः-**विस्र-सेति ।** स्थितेरेकप्रकारत्वमुत्पादव्यययोश्चानन्तप्रकारत्वमतोऽपि बहिरङ्गत्वमित्याह-**द्रव्यादिभेदादिति,** आदिपदात्क्षेत्रादे-रुपग्रहः, यद्यपि द्रव्यरूपेणावस्थितिरेव नोत्पादव्ययौ तथापि कारणमिह द्रव्यपदेन गृह्यते, तच्च कारणत्वोपाधिकम्, कारणत्वञ्च निरूपककार्यभेदेन भिन्नम्, यद्यदा यदाकारपरिणामेन यत्कार्यजननक्षमं भवति तत्तदा तदाकारपरिणामेनोत्पद्यमानं तद्द्रव्य-तयोत्पन्नमिति व्यपदिश्यते, तदाकारपरिणामं च त्यजत्तद्द्रव्यतया विनश्यतीत्युच्यते, एवं यत्क्षेत्रं यदवगाहनया यदा व्याप्रियते तदा तत्क्षेत्रतयोत्पद्यते, तदवगाहनपरिणामनिवृत्तौ तत्क्षेत्रतया विनश्यतीत्युच्यते, एवं कालादावप्यूह्यम्, एतौ परोपाधिकत्वा-द्बहिरङ्गौ । 'अर्पितव्यावहारिकम्,' इत्यादिभाष्यसङ्गमनायाह-**एवं चेति,** स्याद्वादप्ररूपणया वस्तुन्यनन्तधर्मात्मकत्वव्यवस्थितौ

नर्पितधर्मात्मकस्तद्विषयः शब्दो व्यवहाराङ्गमतः शब्दव्यवहार एव प्राधान्येनाङ्गीक्रियते, अत्र प्रत्यर्थं च प्रतिपत्तिः शब्दात् साक्षाद् गम्यमानार्थतया च सर्वत्रैव, यतः सदेकनानानित्यानित्यादिधर्मकलापपरिकरमशेषमस्तिकायजालम्, तत्रान्यतमैकधर्मार्पणे शेषधर्माणां गम्यमानता, यतो न सद् असत्त्वादिभेदविविक्तम्, असद् वा सदादिविकल्पशून्यम्, अन्योन्यापेक्षसत्ताकत्वात् सदादीनाम्, एवं वस्तुनिश्चयः, अर्पितमुपनीतं वस्तु—विवक्षितेन धर्मेण साक्षाद् वाचकेन शब्देनाभिहितम्, व्यवहारः प्रयोजनमस्येति व्यावहारिकम्, अर्पितं च तद् व्यावहारिकं **चेत्यर्पितव्यावहारिकम्** । एतदुक्तं भवति—किञ्चिद् वस्तु विशिष्टाभिधानार्पितं सद् व्यवहारं साधयति, अपरमनर्पितमेव साक्षाद् वाचकेन शब्देन प्रतीयमानं सद्व्यवहाराय व्याप्रियत इत्यत आह—**अनर्पितव्यावहारिकं चेत्यर्थः** । अथवाऽर्पि-

---

चेत्यर्थः । **तद्विषयः**, अर्पितानर्पितधर्मात्मकार्यप्रतिपादकः । **व्यवहाराङ्गमिति**, अनन्तधर्मात्मकतया व्यवस्थितमपि वस्तु न तत्तद्धर्मप्रतिपादकशब्दमन्तरेण व्यवहारवीथीमवतरतीति शब्दस्य व्यवहाराङ्गत्वमवसेयम्, व्यवहारश्च इष्टानिष्टोपेक्षणीयगोचरप्रवृत्तिनिवृत्त्युपेक्षालक्षण. । यद्यपि व्यवहारे व्यवहर्त्तव्यस्य विषयतया तं प्रतितादात्म्येन तज्ज्ञानस्य च समानविषयतया कारणत्वं तथापि प्रयोज्यकवृद्धाभ्यामुपजायमान. स शब्दस्वरूपतामात्मसात्कुर्वन्नेवोपजायत इति निमित्ततामात्रेणार्थव्यवहारज्ञानव्यवहारभावेऽपि प्राधान्यं शब्दव्यवहारस्यैव, तयोरपि तमुपादायैव लोकयात्रानिर्वाहकत्वादित्यभिसन्धानेनाह—**अतः शब्दव्यवहार एवेति** । यद्यपि "सर्वे सर्वार्थवाचका" इति सिद्धान्तादेकस्यापि शब्दस्य सर्वार्थवाचकत्वम्, ततः सर्वधर्मवाचकत्वमपि, तथापि एकेनैव शब्देन ग्रन्थसार्थप्रत्यायनसकललोकयात्रानिर्वहणस्यादर्शनेन तत्तद्वाक्यकदम्बकघटितप्रकरणाध्यायसमष्टिरूपमहाग्रन्थसार्थनिर्माणवैयर्थ्यप्रसङ्गभयेन च प्रतिनियतार्थसङ्केतसहकृतस्यैव शब्दस्य तत्तदर्थबोधकत्वमित्यस्यावश्याभ्युपगमेनैकयोक्त्या नैकस्माच्छब्दात् साक्षाद्वाच्यतया सर्वधर्मावगतिरनन्तधर्मात्मकवस्त्ववगतिर्वा, किन्तु यत्र धर्मे यद्धर्मविशिष्टे वा वस्तुनि गृहीतसङ्केतो यो यश्शब्दस्ततस्तत्तद्धर्मस्य तद्विशिष्टस्यार्थस्य साक्षादवगति , धर्मान्तराणाञ्च गम्यमानतया, यत एकस्य धर्मस्य तद्विशिष्टस्य चार्थस्याशेषधर्माविनाभावित्वादिति वाच्योऽर्थोऽर्पितो गम्योऽनर्पित इति कृत्वाऽर्पितानर्पितसिद्धिरुपपद्येतरामित्याशयेनाह—**अत्र प्रत्यर्थं चेति,** प्रतिधर्मं प्रतिनियतधर्मविशिष्टं चेत्यर्थः । **सर्वत्रैवेति,** सर्वेषु धर्मेषु तद्विशिष्टेऽर्थे चेत्यर्थः, शब्दात्प्रतिपत्तिरिति सम्बध्यते । सम्मुखतया भावितमेवार्थं विशेषतो भावयन्नाह—**यत इति** । ननु सत्त्वस्य विवक्षणरूपार्पणे कुतोऽसत्त्वादेर्गम्यमानता ? तेषामभावादेवानर्पणसम्भवादत आह—**यत** इति, सत् सामान्यम् असत्त्वादिविशेषविकलं न यत इत्यर्थ । ननु सत्त्वं मा भूद् असत्त्वादिविशेषविकलं, तत सत्त्वार्पणेऽसत्त्वादीना गम्यमानता भवतु, असत्त्वादिक तु प्रत्येकं सत्त्वादिविकलं भविष्यति, ततोऽसत्त्वाद्यर्पणे सत्त्वादीना गम्यता न प्राप्नोतीत्यत आह—**असद्वेति** । कथमेतदवधारणीयमित्यत आह—**अन्योन्यापेक्षेति** । नन्वस्तु सत्त्वादीनामन्योन्याभाव , एतावतैकज्ञानेऽपरज्ञानमपि भवत्वेवेति नहीयं राज्ञ आज्ञा, धूमज्ञानेऽपि वह्नेः कदाचिज्ज्ञानात्कदाचिदज्ञानाच्चेत्यत आह—**एवं वस्तुनिश्चय इति,** वस्तुनिश्चयार्थमेव हि अर्पणमनर्पणञ्चाश्रीयते, यद्येकग्रहणेऽप्यन्यग्रहणं न स्यात्तदा वस्त्वेकदेशग्रहणमेव भवेद् न त्वनन्तधर्मात्मकस्य वस्तुनो ग्रहणमतस्तदन्यथानुपपत्त्यैकधर्मग्रहणे तदन्यधर्माणामपि तदविनाभाविनां ग्रहणमास्थीयते, एवमेव वस्तुनिश्चय उपपद्यत इत्यर्थः । नन्वेवं वस्तुनिश्चये विवक्षिताविवक्षिताशेषधर्माणा ग्रहणस्यावश्यकत्वे कः प्रतिविशेषो विवक्षाविवक्षयोरित्यत आह—**अर्पितमिति** । अस्यैवार्थकथनम्—**उपनीतं वस्त्विति** । न ज्ञायते उपनीतं वस्त्वित्यनेन किं कथितं भवत्यतस्तस्यैव स्पष्टतर व्याख्यानम्—**विवक्षितेन धर्मेण साक्षाद्वाचकेन शब्देनाभिहितमिति** । व्यावहारिकमित्यस्यार्थं स्पष्टयति—**व्यवहारप्रयोजनमस्येति व्यावहारिकमिति** । अत्र भाष्ये कर्मधारयसमासोऽभिमतोऽर्पणस्य व्यवहारप्रयोजनकत्वादित्याशयेनाह—**अर्पितञ्चेति** । अर्पितव्यावहारिकमित्यनेन किमुक्तम्भवतीति शिष्यजिज्ञासायामाह—**एतदुक्तं भवतीति** । **विशिष्टाभिधानार्पितं सत्,** तत्तद्विवक्षितधर्मविशिष्टवाचकशब्देन साक्षादभिधीयमानं सत् । **व्यवहारं** प्रवृत्त्यादिरूपम् । **अपरम**विवक्षितधर्मविशिष्टं वस्तु । **अनर्पितमेवेति,** अत्र "एव साक्षात्" इत्यादेर्योगः, तथा च साक्षाद्वाचकेन शब्देनाभिहितमेवेति तदर्थ. । **प्रतीयमानम्,** अविनाभावितया गम्यमानम् । एतदभिप्रायकमेव अनर्पितव्यावहारिकमिति भाष्यमित्याह—**अत आहेति** । प्रकारान्तरेणोक्तभाष्यार्थमाह—**अथवेति** । **अर्पितविपथ इति,** एतच्चार्पितस्यार्पिते वा व्यवहारो-

तद्विषयो व्यवहारोऽर्पितव्यवहारः शब्दपरिप्रापितव्यवहार इत्यर्थः, सोऽस्य सतोऽस्ति नित्यस्य चेत्यर्पितव्यावहारिकं सन्नित्यं च, एवमनर्पितव्यावहारिकमपि द्रष्टव्यमसदनित्यं च, यदा चासदनित्ये शब्देन साक्षात् प्रतिपिपादयिषिते तदाऽर्पिते ते, इतरे तु सन्नित्ये गम्यमाने तत्रानर्पिते भवतः, तस्मादेकत्र वस्तुन्यर्पितधर्मपरिग्रहोऽनर्पितधर्मसत्तानान्तरीयकः, यथा कृतकत्वधर्माभ्युपगमोऽनित्यत्वसत्तानान्तरीयकः, एकत्यागश्चापरपरित्यागाविनाभावी, यथा अनित्यत्वपरित्यागे कृतकत्वपरित्यागोऽवश्यंभावीति । **चशब्दः** समुच्चिनोति सर्वान् विकल्पान् । **इति**शब्दो हेतौ, यस्मादर्पितधर्मविषयः शब्दव्यवहारस्तस्मादर्पितानर्पितसिद्धेः सन्नित्ये असदनित्ये च विवक्षावशात्; अवधारणे वा, एतावानेव शब्दव्यवहारो यदुतार्पितानर्पितधर्मविषयो नान्य इति । **अर्थ** इत्यभिधेयप्रतिपत्तिमाचष्टे, समासत एषोऽर्थः सूत्रस्येतियावत् । धर्मार्थकाममोक्षलक्षणः सकलः पुरुषार्थस्तद्योग्यव्यवहारार्पणाभ्यां यथावदधिगम्यत इति ॥

[भाष्यम्–] **तत्र सच्चतुर्विधम्, तद्यथा—द्रव्यास्तिकं, मातृकापदास्तिकं, उत्पन्नास्तिकं पर्यायास्तिकमिति ।**

**तत्र सच्चतुर्विधमि**त्यादि । **तत्र**–तेषु सन्नित्यासदनित्येषु, सतो भेदानाचष्टे–सच्चतुर्विधमेव, न त्रिधा न च पञ्चधा, तदुद्देशार्थमाह—**द्रव्यास्तिक**मित्यादि । उत्पादादिमूलभेदान्तःपात्येव, सवि-

---

**ऽर्पितव्यवहार** इति तत्पुरुषसमासमाश्रित्य, एवमनर्पितव्यवहारेऽपि वोध्यम् । अर्पितव्यवहारः क्व इत्यपेक्षायामाह–**शब्देति** । **सः**, अर्पितव्यवहारः । तत् किं सन्नित्यमर्पितव्यावहारिकमेव ? असदनित्यमनर्पितव्यावहारिकमेव ?, एवं सत्यत्रैवैकान्तः पदं निदधातीत्यत आह–**यदा चेति** । वस्तुनि कस्यचिद्धर्मस्यार्पितव्यवहारिकत्वे कस्यचिद्धर्मस्यानर्पितव्यावहारिकत्वे सिद्धे सति यन्निष्पद्यते तदुपसंहरति–**तस्मादिति** । भाष्ये चशब्दं समुच्चयार्थकतया व्याख्यानयति–**चशब्द** इति । **सर्वान् विकल्पानिति**, स्यादर्पितव्यवहारिकं, स्यादनर्पितव्यवहारिकं, स्यादवक्तव्यं, स्यादर्पितव्यवहारिकं स्यादवक्तव्यमित्यादिविकल्पानित्यर्थ. । 'चेत्यर्थ' इति भाष्यघटकेतिशब्दस्य हेत्वर्थकत्वे सति यदुक्तं भवति तदाह–**यस्मादिति** । **अवधारणे वेति**, इतिशब्द इति दृश्यम् । इतिशब्दस्यावधारणार्थकत्वे योऽर्थस्सम्पद्यते तमावेदयति–**एतावानेवेति** । **इत्यर्थ** इति भाष्यघटकार्थशब्दं व्याख्यानयति–**अर्थ** इतीति । **सूत्रस्य** 'अर्पितानर्पितसिद्धेः' इति सूत्रस्य । अर्थश्च लोके धर्मार्थकाममोक्षभेदेन चतुर्विधः ख्यातः, स एव चार्थशब्दस्य मुख्योऽर्थः, तदुपाये तु तत्साधनत्वाद् गौणोऽर्थशब्दः, प्रकृतसूत्रस्य तूपदर्शितोऽर्थः सूत्राभिधेयत्वात्साङ्केतिकोऽर्थः; अथवा धर्मार्थकाममोक्षरूपपुरुषार्थसाधनत्वाद् गौणोऽर्थः, तत्र गौणार्थत्वे मुख्यार्थत्वे वा भवत्युक्तसूत्रस्योपादेयत्वं, साङ्केतिकत्वे तु न पुरुषार्थकाङ्क्षिकाणामिदमुपादेयं काकदन्तपरीक्षणवन्निष्फलत्वादित्यत उक्तसूत्रार्थस्य गौणार्थत्वेन मुख्यार्थप्रतिलम्भकत्वतस्तत्प्रतिपादकस्य लौकिकपरीक्षकोपादेयत्वमाविष्कर्तुमाह–**धर्मार्थेति** । **अधिगम्यत** इति, प्राप्यत इत्यर्थः । सदसन्नित्यानित्यात्मकत्वं वस्तुन उपपादितम्, तत्र सदंशस्य द्रव्यनयपर्यायनयाभ्यां चतुर्विधत्वमुपपादयति–**तत्रेत्यादि** । चतुर्विधमित्यस्य नियमपरतामाह–**चतुर्विधमेवेति** । एवकारव्यवच्छेद्यमाह–**न त्रिधेति**, अनेन न्यूनसङ्ख्याव्यवच्छेद उक्तः । **न च पञ्च** वेत्यनेनाधिकसङ्ख्याव्यवच्छेदः । **तदुद्देशार्थमाहेति**, तच्चतुर्विधमिति सामान्येन कथनरूपो यः सत उद्देशस्तस्यार्थं विविक्तचतुष्टयरूपम् आह प्रतिपादयतीत्यर्थः । **उत्पादादिमूलभेदान्तःपात्येवेति**, **द्रव्यास्तिक**मित्यादिना सतोऽपूर्वमेव धर्मान्तरन्नाविष्क्रियते, किन्तु "उत्पादव्ययध्रौव्ययुक्तं सद्" इति सूत्राभिमतो य उत्पादव्ययध्रौव्यात्मकत्रितयस्वरूपो मूलभेदस्तदन्तःपात्येव द्रव्यास्तिकं मातृकापदास्तिकमित्यादीत्यर्थः, यतो **द्रव्यास्तिकमि**त्यनेन शुद्धद्रव्याभ्युपगन्तृसङ्ग्रहनयविषयमहासामान्यात्मकद्रव्यस्वरूपत्वमेव प्रतिपाद्यते, तच्च तद्रूपेणाविनाशधर्मकत्वलक्षणनित्यत्वापरपर्यायध्रौव्यमेव भवति, **मातृकापदास्तिकमि**त्यनेन शुद्धद्रव्याभ्युपगन्तृव्यवहारनयविषयसत्त्वावान्तरद्रव्यत्वपृथिवीत्वघटत्वाद्यवान्तरसामान्यविशेषात्मकद्रव्यस्वरूपत्वं प्रतिपाद्यते, तदपि तद्रूपेण बहुकालावस्थानलक्षणावान्तरध्रौव्यमेव भवति, **उत्पन्नास्तिकमि**त्यनेन प्रतिक्षणापूर्वापूर्वोत्पादाभ्युपगन्तृपर्यायनयमूर्धाभिषिक्तर्जुसूत्रनयविषयोत्पादस्वरूपपर्याय एवावेद्यते,

**पर्ययद्रव्यादिभेदप्रपञ्चवैरूप्येप्येकस्य धर्मिणः परिणामसमूहस्वभावस्योत्तरोत्तरभेदप्रदर्शनार्थः, एवंविधोपन्यासे च सर्वतत्पर्यायाकाङ्क्षा, तावत्परिणामानुयायित्वात् तत्संज्ञासम्बन्धादीनाम्, तत्रादिमद्भिः पर्यायैरर्प्यमाणं सतो भावाद् व्येति व्येष्यतीति चानित्यम्, अनाद्यैः पर्यायैरादिश्यमानं सत्त्वद्रव्यत्वसंज्ञित्वप्रमेयत्वचेतनत्वमूर्तामूर्तत्वभौतिकत्वेतरत्वग्राह्यत्वादिभिरविनाशधर्मकत्वान्नित्यम्, तद्धि सूक्ष्मोत्पादभङ्गसन्ततिसम्भवेऽपि सत्त्वादिभिराकारैर्नोत्पद्यते नापि विनश्यति । तत्र द्रव्यास्तिकं मातृकापदास्तिकं च द्रव्यनयः, उत्पन्नास्तिकं पर्यायास्तिकं च पर्यायनयः । अस्ति मतिरस्येत्यास्तिकं, सतः प्रस्तुतत्वात् तदभिसम्बन्धे नपुंसकलिङ्गता, द्रव्ये आस्तिकं द्रव्यास्तिकम्, मयूरव्यंसकादावकृतलक्षणतत्पुरुषप्रक्षेपात् । अथवाऽधिकरणशेषभावविवक्षायां द्रव्यस्यास्तिकं द्रव्यास्तिकम्, अथवा आस्तिकमस्तिमति, किं तत् ? नयरूपं प्रतिपादयितृ, कस्य प्रतिपादकम् ? द्रव्यस्य, अतः प्रति-**

---

**पर्यायास्तिकमि**त्यनेन प्रतिक्षणविनाशपर्याय एवावेद्यत इति । यद्युत्पादादिमूलभेदान्त पात्येव द्रव्यास्तिकमित्यादि तदा गतार्थत्वान्नास्य पृथगुपन्यासेन कृत्यमित्यत आह-**सविपर्ययेति,** सतो द्रव्यस्य विपर्ययोऽसन् नित्यस्यानित्य इत्यादिर्बोध्य । सविपर्ययद्रव्यादिभेदप्रपञ्च उत्तरोत्तरभेदप्रदर्शनार्थ इत्यन्वयः । एवं सति द्रव्यादिसामान्याभिधानमेव कथं कृतं न तु तदवान्तराभिधानमास्तिकपदसमन्वितमुपन्यस्तमत आह-**एवंविधोपन्यासे चेति । सर्वतत्पर्यायाकाङ्क्षेति,** अनादिसामान्यपर्यायादारभ्यैवान्त्यपर्यायं यावत् पर्यायप्रवृत्तिर्भवत्यतः सर्वेऽपि पर्याया आकाङ्क्षितास्सन्तस्तथैव निरूपणीयभावं प्राप्नुवन्ति मूलप्रकृतिस्वभावत्वादुत्तरप्रकृतीनामिति ग्रन्थलाघवार्थमित्थमुपन्यास इति हृदयम् । कथं सर्वतत्पर्यायाकाङ्क्षणं द्रव्याद्युपन्यास इत्यपेक्षायामाह-**तावदिति,** द्रवति तांस्तान् पर्यायान् गच्छतीति द्रव्यमिति अन्वर्थद्रव्यशब्दोपादाने यावन्त उत्तरपर्यायास्तावदनुयायित्वेन द्रव्यार्थावबोधः, द्रव्यस्य परमाण्वादिरूपस्योत्तरपर्याया ये मृदादयस्तेऽपि स्वोत्तरपर्यायान् मृत्पिण्डादीननुगच्छन्तीत्युक्तव्युत्पत्त्यनुगृहीतद्रव्यसम्बन्धः, आदिपदग्राह्यानुगतबुद्ध्याधायकत्वादयश्च तदुत्तरयावत्पर्यायानुयायिन एवेति, एवं सामान्यविशेषपर्यायाश्रयो हि मातृकापदवाच्य इति यथा मृत्स्वरूपे पर्याये आपेक्षिकसामान्यविशेषपर्यायस्याविष्वग्भावेनाश्रयत्वं तथा स्थासत्वकुशूलत्वकलशत्वकपालत्वादीनामपीति सामान्यविशेषपर्यायाश्रयत्वाद्यावदुत्तरपर्यायेषु मातृकपदरूपसञ्ज्ञासम्बन्धादीनामनुयायित्वम्, एवमुत्पन्नपदपर्यायपदयोरपीति । सर्वतत्पर्यायैर्वस्तुनो निरूपणीयत्वे व्यवस्थितत्वं नित्यत्वमनित्यत्वं यथा प्रक्रियया सङ्गतिमङ्गति ता प्रक्रियामुपदर्शयति-तत्रेत्यादिना । **सत्त्वेत्यादि,** सत्त्वद्रव्यत्वसञ्ज्ञित्वप्रमेयत्वानि पञ्चानामप्यस्तिकायानाम्, चेतनत्वं जीवस्य, मूर्त्तत्वं पुद्गलस्य, अमूर्त्तत्वं पुद्गलभिन्नानामस्तिकायानाम्, भौतिकत्वं पुद्गलस्य, तदितरत्वं पुद्गलभिन्नानाम्, ग्राह्यत्वं ग्रहणयोग्यतालक्षणं सर्वज्ञज्ञानापेक्षया सर्वेषामित्येवमनादिपारिणामिकभावविवेको बोध्यः । **तद्** अनादिपारिणामिकभाववत्तया नित्यं वस्तु । **हि** यतः । **सूक्ष्मेति,** सत्त्वद्रव्यत्वादेर्यत्प्रतिक्षणविवर्त्तिस्वस्वरूपपरिणमनं तदात्मकेत्यर्थः, एतच्च नापरिणम्य किञ्चित्क्षणमप्यवतिष्ठत इति न्यायप्राप्तं न तु स्थूलमतिग्राह्यमिति सूक्ष्ममुच्यते, तदात्मना सत्त्वादीनामप्युत्पादव्ययध्रौव्ययोगिस्वात्मकक्षणपरम्परालक्षणसन्ततिसम्भवेऽपीत्यर्थ, तद्रूपसूक्ष्मोत्पादव्ययसन्ततेर्व्यवहारपथातिक्रान्तत्वान्न नित्यव्यवहारविघातित्वमित्यभिसन्धिः । सतो नित्यत्वमनित्यत्वमुपपाद्य तत्र नित्यत्वमुपादाय द्रव्यास्तिकं मातृकापदास्तिकमिति द्वौ भेदौ, अनित्यत्वमुपादाय उत्पन्नास्तिकं पर्यायास्तिकमिति द्वौ भेदावित्येवं चतुर्विधत्वं सत इत्युपपादयन्नाह-**तत्रेति । द्रव्यनय** इति, विषयविषयिणोरभेदं विवक्षित्वेत्यमुक्तिः, एवं **पर्यायनय** इत्यत्रापि । **द्रव्यास्तिकमि**ति व्युत्पादयितुमाह-**अस्तीत्यादि** । अस्ति मतिरस्येत्यास्तिक इति पुल्लिङ्गनिर्देशः कस्मात्परित्यक्त इत्यपेक्षायामाह-**सत इति, सच्चतुर्विधमि**त्यनेन सदेव प्रस्तुतम्, "सामान्ये नपुंसकम्" इत्यभिधानात्तन्नपुंसकमिति तद्विशेषाभिधायकमिदमपि नपुंसकतयाऽभिहितम् । सप्तमीतत्पुरुषविशेषोऽयं न सूत्रतः सम्पद्यत इत्यत आह-**मयूरेति** । षष्ठीतत्पुरुष एवायम्, स च सूत्रित एवेत्याह-**अथवेति । अधिकरणेति,** अधिकरणस्य द्रव्यस्य शेषभावविवक्षाया शेषात्यकर्तृत्वाद्यतिरिक्तसम्बन्धभावविवक्षणे "शेषे" इति षष्ठ्या "षष्ठ्ययत्नाच्छेषे" इति समास । समाससुघटनाकृते प्रकारान्तरमाश्रयति-**अथवेति,** अस्ति मतिरस्येति व्युत्पत्तिको नायं शब्दः, किन्तु सत्ताविशिष्टार्थक इत्याह-**अस्तिमतीति,** सत्त्वविशिष्टार्थे वर्तत इत्यर्थः । ननु सर्वाणि वस्तूनि सत्ताविशिष्टान्येव कोऽत्र विशेष इत्याशङ्कामन्तर्भाव्य प्रश्नयति-**किं तदिति । नयरूपमिति,** पङ्कजादिवद् योगरूढिभ्यां नयरूपं सत्ताविशिष्टं वस्तु, आस्तिकपदेन ग्राह्यम् । कीदृशं नयरूपमित्याह-**प्रतिपादयितृ-**

पाद्यप्रतिपादकभावलक्षणसम्बन्धविवक्षायां षष्ठी समासश्च । एवं मातृकापदास्तिकादिष्वपि योज्यम् । द्रव्यमेवास्येदं भिद्यते न पर्यायः, द्रव्यं भवनलक्षणं मयूराण्डकरसवदुपारूढसर्वभेदवीजं देशकालक्रमव्यङ्ग्यभेदसमरसावस्थमेकरूपं भवनं-भूतिः सत्त्वमाश्रितसत्तातिरिक्तं भेदप्रत्ययवमर्शेनाभिन्नमपि भिन्नवदाभासते, तदेव चास्तीति मन्यते, तच्च द्रव्यास्तिकमसङ्कीर्णस्वभावं शुद्धप्रकृतिरूपमेकं प्रत्याख्याताशेषविशेषकदम्बकं द्रव्यात्मकं द्रव्यमात्रं सङ्ग्रहप्ररूपणाविषयमभिहितम्, अपरं नैगमव्यवहारविषयमशुद्धप्रकृति, यस्माद् द्रव्यपर्यायावुभाविच्छति नैगमः स्वतन्त्रौ, सामान्यमर्थान्तरभूतमन्यदेवाश्रितं सदभि-

प्रतिपादकम् । प्रतिपादकस्य प्रतिपाद्यापेक्षणात् पृच्छति-**कस्येति** । इयं च समासव्युत्पादनप्रक्रिया मातृकापदास्तिकमित्यादावपि योज्येत्याह-**एवमिति** । समाससाधुत्वे किमस्यैदम्पर्यमिति बुभुत्सुम्प्रत्याह-**द्रव्यमेवेति** । **अभेदम्** अभिन्नस्वभावम् । द्रव्यं किलक्षणकमित्यत आह-**द्रव्यं भवनलक्षणमिति** । एतदपि सम्मुग्धस्वरूपमुच्यमानं नास्मादृशानां मन्दमतीनां मनीषोन्मेषायालमित्यत आह-**मयूराण्डकेति,** मयूराण्डकरसो यथोत्तरकालभाविपिच्छार्द्धचन्द्राकृत्यादिविचित्राङ्गोपाङ्गप्रत्यलरसविशेषसमष्टिसमनुगतत्वादुत्तरसर्वपर्यायवीजभूतस्तथेत्यर्थः, **उपारूढः** शक्तिरूपेण समवस्थितः, **सर्वभेदः** सर्वपर्यायस्तस्य **वीजं** निमित्तमित्यर्थः । यदि सर्वे पर्यायाः प्रथमत एव द्रव्ये शक्तिरूपेण व्यवस्थिताः किमिति ? युगपदेव नोपलभ्यन्त इत्यत आह-**देशकालक्रमेति** । कथं देशकालक्रमव्यङ्ग्येषु भेदेषु पर्यायेषु भिन्नस्वभावेषु समरसावस्थतया समस्वभावतया द्रव्यं युज्यत इत्यत आह-**एकरूपमिति,** अनुगतप्रतीतिनियामकमित्यर्थः, पर्यायाणां भेदेऽपि सर्वत्र सत्सदितिप्रतीतिरविकलाऽनुभूयमाना स्वनिमित्ततयैकस्वरूपमाक्षिपतीत्यर्थः । एवंरूपस्य भवनस्य किं पर्यायान्तरमप्यस्ति ? अस्तीत्याह-**भूतिरिति** । भूतिश्चोत्पत्तावपि प्रयुज्यते-"भूतिर्येषां क्रिया सैव कारणं सैव चोच्यते" इत्यादौ, एवञ्च तस्याद्यक्षणसम्बन्धस्याद्यक्षणवृत्तित्व एव पर्यवसानाच्च द्वितीयादिक्षणेऽपि सत्त्वं कुतः पर्यायप्रवाहानुयायित्वमनुगतमतिनिमित्तत्वमित्यत आह-**सत्त्वमिति,** भू सत्तायामित्यनुशासनाद्भूतेः सत्त्वरूपताऽध्यवसातव्या । ननु सत्त्वमपि न सर्वभेदानुगामि, द्रव्यगुणकर्मसु त्रिष्वेव सत्तासामान्यस्य वैशेषिकैरभ्युपगमादत आह-**आश्रितसत्तातिरिक्तमिति,** आश्रिता द्रव्यगुणकर्ममात्रवर्त्तिनी या सत्ता वैशेषिकाभ्युपगता तद्व्यतिरिक्तमित्यर्थः, अतिरिक्तसत्ताखण्डनं च स्याद्वादमञ्जरीप्रभृतिग्रन्थतोऽवसेयम् । नन्वेवं सर्वपदार्थानां स्वरूपसत्त्वमेवानया वाचोभङ्ग्या प्रतिपादितम्, तच्च प्रतिव्यक्ति भिन्नमेव सर्वपर्यायस्वरूपाणां भिन्नत्वात्, तत्कथं तदेकरूपमित्यत आह-**भेदप्रत्ययवमर्शेनेति,** सर्वं वस्तु सद्रूपमेव, यदेव सत्तदेव सत्त्वं, सतसत्त्वयोर्द्वयोर्द्धर्मधर्मिणोः कल्पनापेक्षयैकस्य सतः कल्पनस्यैव युक्तत्वात्, तच्चैकमपि **भेदप्रत्ययवशेन** भेदावगाहिविकल्पनेन, **भिन्नवद्** भिन्नमिवावभासते, यथैक एव चन्द्रस्तैमरिकद्विचन्द्रावभासिप्रत्ययेन द्विधाऽवभासत इति । **तदेव चास्तीति मन्यत इति,** उक्तलक्षणं सत्त्वमेवास्तीति मन्यते यो नयः स द्रव्यास्तिकः, तद्विषयभावमाभेजानं सदपि द्रव्यास्तिकमिति गीयते । सङ्ग्रहनैगमव्यवहारास्त्रयो नया द्रव्यास्तिकतया प्रसिद्धास्तत्र कं नयमाश्रित्य सद्द्रव्यास्तिकमित्युक्तमिति जिज्ञासायामाह-**तच्चेति,** सच्चेत्यर्थः । **असङ्कीर्णस्वभावं** पर्यायाव्यतिमिश्रम् । **शुद्धप्रकृतिरूपं** सर्वापेक्षया सामान्यस्वरूपमेव न तु कस्यचिदपेक्षया विशेषस्वरूपं महासामान्यमिति यावत् । अत एव च सर्वानुगतत्वादेकमद्वितीयम् । सजातीयद्वितीयराहित्यलक्षणमेकत्वं तस्य विजातीयविशेषकदम्बकसद्भावेऽपि उपपद्यत एवातः किञ्चिन्निष्ठभेदाप्रतियोगित्वमेवानैक्यं वस्तुप्रतियोगिकभेदानाधारत्वलक्षणमेव वैकत्वं विवक्षितमित्याशयेनाह-**प्रत्याख्यातेति,** स्वनिष्ठभेदप्रतियोगितया स्वभेदाश्रयतया वा निराकृतेत्यर्थः । एतच्चैकस्यैव विशेषस्याभ्युपगमे शुद्धपर्यायनयविषयत्वाच्छुद्धप्रकृतिरूपस्यापि तस्य सम्भवेन निरुतापर्यवसायितेत्यत आह-**द्रव्यात्मकमिति,** पूर्वोत्तरक्षणानुगामिस्वरूपमित्यर्थः । पर्यायसङ्कीर्णस्याप्येवम्भावः सम्भवत्येकस्य नातोऽसङ्कीर्णस्वभावता लभ्यत इत्यतो द्रव्यात्मकमित्यस्यैव व्याख्यानम्-**द्रव्यमात्रमिति** । एवम्भूतस्वरूपं प्रमाणस्य नापि कस्यापि नयस्य विषय इति नास्त्येवात उक्तम्-**सङ्ग्रहप्ररूपणाविषयमिति,** तथा चैवम्भूतार्थसद्भाव एव सङ्ग्रहोऽन्यनयासङ्कीर्णनयस्वरूपतयाऽऽत्मलाभं भजते नान्यथेति । **अभिहितं** "द्रव्यास्तिकम्" इत्यनेनोक्तम् । तत किं द्रव्यास्तिकमन्यनयप्ररूपणाविषयमप्यस्ति यद्व्यावृत्तये प्रकृतं द्रव्यास्तिकमित्थं व्याख्यायत इत्यत आह-**अपरमिति,** सङ्ग्रहप्ररूपणाविषयद्रव्यमात्रस्वरूपसत्त्वभिन्नमित्यर्थः । कथमेवम्भूतस्य द्रव्यस्याशुद्धप्रकृतित्वमित्यतस्तत्र हेतुमुपन्यस्यति-**यस्मादिति** । **स्वतन्त्रौ** द्रव्यस्वरूपं सामान्यं विशेषेभ्यो भिन्नमेव विशेषाश्च पर्यायलक्षणाः सामान्यादत्यन्तविविक्ता एवेत्येवं परस्परं विभिन्नावित्यर्थः । स्वरूपकार्यभेदाभ्यामतिरिक्तं सामा-

धानप्रत्ययहेतुस्तयोर्निर्निमित्तयोः सर्वथाऽनुपाख्ये प्रवृत्त्यभावात्, व्यावृत्तिबुद्धिहेतुर्भेदकरोऽन्य एव विशेष इति भेदाभ्युपगतेरशुद्धप्रकृतित्वम्, व्यवहारोऽप्यशुद्धप्रकृतिरेव, परस्परविभिन्नरूपैरर्थैः संव्यवहारः सिध्यतीत्यभिप्रायात्, नैगमस्य वा सङ्ग्रहव्यवहारानुप्रवेशाच्छुद्धाशुद्धप्रकृतित्वं द्रव्यास्तिकस्य, तत्र सङ्ग्रहाभिप्रायानुसारि द्रव्यास्तिकम्, व्यवहारनयानुसारि मातृकापदास्तिकम्, शुद्धाशुद्धप्रकृतिद्वयसन्दर्शनार्थं द्विधोपादानम्, सर्ववस्तुसल्लक्षणत्वादसत्प्रतिषेधेन सर्वसङ्ग्रहादेशो द्रव्यास्तिकम्, नहि सता किञ्चिदनाविष्टमस्ति द्रव्येण वा, तच्च निर्भेदत्वाल्लोकयात्राप्रवृत्तिवहिर्मुखम्, अत एव व्यवहारप्रवृत्तिस्त्यागोपादानोपेक्षारूपेण वस्तुषु प्रायो भेदसमाश्रया, स च भेदो मातृकापदास्तिकनिबन्धनो व्यवहारस्याशुद्धप्रकृतित्वाल्लोकव्यवहारप्रसाधनाय द्रव्यास्तिकं भिनत्ति व्यवहारनयः, किमन्यद्धर्मा-

---

न्यमुपपादयति-**सामान्येति** । "अर्थान्तरभूतम्" इत्यनेन शशशृङ्गाद्यसद्विविक्ततामाह, "अन्यद्" इत्यनेन विशेषेभ्यो व्यावृत्तिमाह, "आश्रितम्" इत्यनेन "आश्रितसत्तातिरिक्तम्" इति यदुक्तं प्राक् तद्व्यवच्छिनत्ति । एवम्भूतस्य सामान्यलक्षणद्रव्यस्याविविक्तार्थक्रियाकारित्वाभावान्नास्त्येव तत्त्वरूपतेत्यतस्तस्यार्थक्रियाकारित्वोपपादनायाह-**सदभिधानेति**, तथा च सच्छब्दप्रवृत्तिनिमित्ततया सत्सदित्यनुगतबुद्धिनियामकतयाऽर्थक्रियाकारित्वेन तस्य वस्तुत्वमभ्युपेयमित्यर्थः । **तयोः** सदभिधानप्रत्यययोः । **निर्निमित्तयोः** सत्त्वसामान्यरूपनिमित्तासमवहितयोः । **सर्वथाऽनुपाख्ये** सर्वोपाख्याविधुरिते शशशृङ्गादौ । **प्रवृत्त्यभावात्** प्रवृत्तेरनुपलम्भात् । यदि निमित्तमन्तरेण तयोः प्रवृत्तिरभ्युपगम्येत तदा शशशृङ्गादावपि तयोः प्रवृत्तिस्स्यात्, न च तत्र प्रवर्त्तते, ततो यदभावात्तयोस्तत्राप्रवृत्तिः तत्सत्त्वसामान्यमतिरिक्तन्तन्निमित्तमभ्युपगन्तव्यमित्यर्थः । सामान्यरूपद्रव्याद्विशेषरूपाणां पर्यायाणां भेदमुपपादयति-**व्यावृत्तिबुद्धिहेतुरिति**, सजातीयविजातीयेभ्यो व्यावृत्तिबुद्धिनिबन्धनम् । अत एव **भेदकरः** स्वाश्रयस्य तदन्यस्माद्भेदस्य प्रयोजकः । **अन्य एव** सामान्याद्भिन्न एव । विभिन्नार्थक्रियाकारित्वस्यापि विरुद्धधर्मत्वेन तदध्यासाद्भेदो युक्त इत्यभिसन्धिः । **इति**रत्र हेतौ, अस्मात्कारणात् । **भेदाभ्युपगतेः** भेदस्यापि स्वीकारात् । द्रव्यास्तिके शुद्धप्रकृतित्वं सामान्यमात्राभ्युगन्तृत्वं, तदभावरूपमशुद्धप्रकृतित्वं सामान्याभ्युपगन्तृत्वे सति विशेषाभ्युपगन्तृत्वादत्र निराबाधमतोऽशुद्धप्रकृतित्वान्नैगमप्ररूपणाविषयं सत्त्व प्रकृते "द्रव्यास्तिकम्" इत्यनेन नाभिमतम्, अत एव च व्यवहारप्ररूपणाविषयमपि नानेनाभिहितमित्याशयेनाह-**व्यवहारोऽप्यशुद्धप्रकृतिरेवेति** । व्यवहारस्याशुद्धप्रकृतित्वे हेतुमाह-**परस्परेति**, लोकयात्रेत्थमेव निर्वहति न केवलसामान्यस्वरूपत्वे घटपटादिभेदतदर्थक्रियाभेदादिव्यवहार आपामरसाधारणः सुदृढनिरूढ आञ्जस्येनोपपद्येत, नाप्यन्त्यविशेषाभ्युपगममात्रेण तस्य चतुरस्रता, तस्माद्यथा यथा लोकव्यवहारस्तथा तथा वस्त्वभ्युपगन्तव्यमिति, एवमशुद्धप्रकृतित्वमेव तेनात्मनि क्रोडीकृतम् । नैगमनयो वा द्रव्यनयस्य तृतीयः प्रकारो नास्त्येव, यतस्तस्य यः सामान्याभ्युपगमांशः सङ्ग्रह एवासौ, यश्च विशेषाभ्युपगमांशः स व्यवहार एव, नयद्वयसमुदायरूपेण तदुपगमे शुद्धाशुद्धप्रकृतित्वं तस्य युक्तमित्याह-**नैगमस्य वेति**, अस्य द्रव्यास्तिकस्येत्युत्तरेण सम्बन्धः । एवञ्च द्रव्यास्तिकनयस्य शुद्धाशुद्धप्रकृतिभेदेन द्वौ भेदौ सङ्ग्रहो व्यवहारश्च, तत्र सङ्ग्रहाभिप्रायेण सतो द्रव्यास्तिकमिति प्रथमरूपं, व्यवहाराभिप्रायेण मातृकापदास्तिकमिति, आभ्यां नित्यत्वमनुगमितं भवतीत्याह-**तत्रे**त्यादिना । एकेनैव नित्यत्वोपोद्वलनं किमर्थमिति प्रश्नप्रतिविधानायाह-**शुद्धाशुद्धेति** । तत्र शुद्धप्रकृतिसन्दर्शनप्रयोजनमाह-**सर्ववस्त्विति** । अशुद्धप्रकृतिसन्दर्शनप्रयोजनमुपदर्शयितुमाह-**तच्चेति**, सर्वसङ्ग्रहादिष्टं सद् द्रव्यं वेत्यर्थः । **निर्भेदत्वाद्** व्यवहारोपयोगिविशेषविकलत्वात् । **लोकयात्राप्रवृत्तिवहिर्मुखम्**, लोकयात्रानिर्वाहकम्, तावन्मात्राभ्युपगमे न कश्चित्कुतश्चित्कुत्रापि प्रवर्त्तेत निवर्त्तेत वेति निरीहं जगत्स्यात्, न चैवमेव न्याय्यम् अनुभवबाधादिति भावः । **अत एवेति**, निर्भेदस्य सामान्यस्य लोकयात्राप्रवृत्तिवहिर्मुखत्वादेवेत्यर्थः । प्रवृत्तिनिवृत्त्युपेक्षालक्षणो व्यवहारो भेदसमाश्रयणेनैव प्रवर्त्तत इत्याह-**व्यवहारप्रवृत्तिरिति** । भेदस्यावश्यमपेक्षितत्वे तद्ग्राहकनयोऽवश्यमाश्रयितव्यस्तत्प्ररूपणाप्रवण इत्याह-**स च भेद इति** । **मातृकापदास्तिकेति**, व्यवहारनयेत्यर्थः । व्यवहारनयनिबन्धनत्वं भेदस्योपपादयति-**व्यवहारस्येति** । **द्रव्यास्तिकं** सत्सामान्यं द्रव्यं वा । तस्य विशेषस्वरूपव्यतिरेकेण नात्मप्रतिलम्भ इत्युपदर्शयति-**किमन्यदिति**, नास्ति धर्मादिभ्यो भिन्नं द्रव्यसामान्यमित्यर्थः । ननु द्रव्याव्यतिरेकाद्धर्मास्तिकायादयोऽपि परस्पर-

धर्माकाशपुद्गलजीवास्तिकायेभ्यस्तद्द्रव्यास्तिकं नाम ?, ते चास्तिकायाः परस्परं भिन्नस्वभावाः, तुल्येऽपि हि द्रव्यत्वे न धर्मास्तिकायो भवत्यधर्मास्तिकायः, पक्वापक्ववत्, तथेतरेऽपि विविक्ता एव लोकयात्रां वर्तयन्ति, सन्मात्रं शुद्धद्रव्यमात्रं वा विद्यमानमपि न जातुचिद् व्यवहारक्षमम्, अतः स्थूलकतिपय-व्यवहारयोग्यविशेषप्रधानं मातृकापदास्तिकम्, एते च धर्मास्तिकायादयः समस्तसामान्यविशेषपर्यायाश्रयत्वान्मातृकापदशब्दवाच्याः, मातृका ह्यशेषवर्णपदवाक्यप्रकरणादिविकल्पानां योनिः, इत्थं धर्मादयोऽपि व्यवहारनिबन्धनानेकपर्यायोपपन्नास्तद्विपरीतपर्यायाश्रयाश्च तत्र तत्र व्यवह्रियन्ते व्यवहारार्थिभिः, अतो मातृकापदमेवास्ति व्यवहारयोग्यत्वात्, न शेषमिति व्यवहारनयाभिप्रायः। सङ्ग्रहव्यवहारौ च प्रत्येकं शतभेदत्वादनेकमुखौ, व्यवहार इति चान्वर्थसंज्ञत्वादेवास्य नयस्य, अवहरणमवहारः, कस्य ? एकसत्त्वस्य, केन ? विशेषेण–घटादिना, नानासत्त्वेन लोकयात्रासिद्धेः ॥

---

मभिन्ना एवेत्यत आह–ते चेति, धर्मादयश्चेत्यर्थः। **परस्परभिन्नस्वभावा** गतिस्थित्यवगाहचैतन्यमूर्त्याख्यपरस्परविरुद्धधर्मालिङ्गितत्वात् परस्परव्यतिरिक्तमूर्तयः। परस्परविरुद्धधर्मभाजां न भवत्यैक्यमित्यत्र सर्वाविप्रतिपन्नं दृष्टान्तमाह–**पक्वापक्ववदिति**। यथा धर्मास्तिकायो न भवत्यधर्मास्तिकायः, एवं धर्मास्तिकायोऽपि न भवति धर्मास्तिकायः, एवमाकाशास्तिकायोऽपि न धर्मास्तिकायादिः, जीवास्तिकायपुद्गलास्तिकायावपि तथैवावधार्यावित्याह–**तथेतरेऽपीति**। भेदस्य लोकव्यवहारक्षमत्वमभिधाय निर्भेदस्य न तत्त्वमित्याह–**सन्मात्रमिति**। अतः भेदस्यैव व्यवहारक्षमत्वं नाभेदस्येत्यस्माक्कारणात्। धर्मास्तिकायादीनां मातृकापदवाच्यत्वे सत्येव तदस्तित्वप्ररूपणप्रवणस्य व्यवहारनयस्य मातृकापदास्तिकसंव्यवहार्यत्वेन तद्विषयस्य तदभेदोपचारान्मातृकापदास्तिकत्वं स्यादित्यतो धर्मादीनां मातृकापदवाच्यत्वमुपपादयति–**एते चे**त्यादिना। मातृका स्वरव्यञ्जनाक्षरमालाऽभिधीयते, तत्र येन प्रवृत्तिनिमित्तेन मातृकेतिपदं प्रवर्त्तते तदत्रापि धर्मास्तिकायादिषु समस्तीति युक्तमेव मातृकापदवाच्यत्वमित्याशयेनाह–**समस्तसामान्यविशेषपर्यायाश्रयत्वादिति**। **मातृकापदशब्दवाच्या इति**, "मातृका" इति यत्त्र्यक्षरं पदं तद्रूपो यः शब्दस्तेन वाच्या इत्यर्थः, तेन अक्षरमालायां "मातृका" इति त्र्यक्षरशब्दस्य वाच्यत्वं तन्निमित्तं कथं मातृकापदरूपपञ्चाक्षरशब्दस्येति मातृकापदस्य समासरूपतया वाक्यत्वेन न तत्र नैयायिकनीत्या शक्तिरपीति च शङ्काया नावकाशः, अथवा समासरूपवाक्येऽपि शक्तिर्वैयाकरणैरभ्युपगम्यते तन्नीत्या मातृकापदस्यापि शक्तिर्भविष्यतीति मातृकापदरूपो यः शब्दस्तस्य वाच्या इत्यर्थोऽपि सङ्गच्छत एव। न चैवं मातृकामातृकापदयोः पर्यायत्वे मातृकास्तिकमित्येव कुतो नोक्तं लाघवैषिणा भाष्यकारेणेति शङ्क्यम्, शब्दाद्वैतावबोधप्रसङ्गभयेन तथानभिधानात्, मातृकाशब्दस्य प्रवृत्तिनिमित्तं यत्किमपि भवतु तद्रूढिस्तु लोकेऽक्षरमालायामेवेति कृत्वाऽक्षरतादात्म्याध्यवसितिस्तथाभिधाने स्फटित्येवोल्लसेदिति सुधीभिश्चिन्तनीयम्। यथा मातृका तथा धर्मादयोऽपीत्येतद्दर्शयति–**मातृकेत्यादि**। **योनिरभि**व्यक्तिस्थानम्। **पर्यायोपपन्नाः** पर्यायाश्रयाः। **अतः**, यतो व्यवहारार्थिभिर्धर्मास्तिकायादिरेव व्यवहारायाद्रियते ततः। संग्रहव्यवहारयोराश्रयणे सर्वेऽपि द्रव्यप्रपञ्चा उक्तभेदयोरेवान्तर्भवन्तीति द्वाभ्यामेव द्रव्यास्तिकमातृकापदास्तिकाभ्यां सम्पूर्णं सतोऽनुगमस्वरूपणमिति भाष्ये न न्यूनता नवाधिकसङ्ख्याव्यवच्छेदानुपपत्तिरित्याशयेनाह–**संग्रहव्यवहारौ चेति**। मातृकापदास्तिकत्वेनाभिमतस्य नयस्य व्यवहार इति संज्ञा व्युत्पत्तिनिमित्तार्थानुगतेत्याह–**व्यवहार इतीति**। **अस्य** मातृकापदास्तिकस्य। अन्वर्थत्वं व्युत्पत्त्युपदर्शनेन स्पष्टयति–**अवहरणेति**, अवहरणं विभजनं पृथक्स्वरूपतापादनमिति यावत्। अवहरणं सम्बन्धिनिरूप्यमिति पृच्छति–**कस्येति**। एकस्यैव लोकयात्रानिर्वाहार्थमनेकरूपताश्रयणेन विभजनं सम्भवति, तच्च सत्त्वातिरिक्तं दुर्वचमित्याशयेनोत्तरयति–**एकसत्त्वस्येति**। विभजनञ्च सामान्यधर्मव्याप्यपरस्परविरुद्धनानाधर्मैर्भवतीति तादृशधर्मादिगमेच्छया पृच्छति–**केनेति**। अविशिष्टस्य सत्त्वस्य विशिष्टस्वरूपतापादक एव विशेषो नान्य इत्याशयेनोत्तरयति–**विशेषेणेति**। एतदेव स्पष्टयति–**घटादिना नानासत्त्वेनेति**। किमर्थमित्थं व्यवहरणमित्यपेक्षायामाह–**लोकयात्रासिद्धेरिति**, घटमानय घटं नय घटं त्यज घटमुपेक्षस्वेत्यादिरूपाया लोकयात्राया द्रव्यमात्रेऽनुपपत्तेरित्यर्थः। सतो नित्यत्वोपपत्तये द्रव्यास्तिकमातृकास्तिके प्रदर्श्य तस्यानित्यत्वोपपत्तये पर्यायनयविषयं विकल्पद्वयम-

अधुना द्रव्यास्तिकमातृकापदास्तिकाभिहिताविशिष्टवस्तुप्रतिक्षेपेण भेदा एव वस्तुत्वेनावध्रियन्ते पर्यायनयेन, अनवरतोत्पादविनाशप्रवाहमात्रमेव वस्तु सकलव्यवहारनिबन्धनम्, न तु स्थितमस्ति किञ्चित्, आत्मभावलक्षणानन्तरविनाशित्वान्न किञ्चित् केनचिदेकेनाभिन्नेन स्थित्यंशेनावबध्यमानं सम्भाव्यते, तत्राशेषस्थूलसूक्ष्मोत्पादकलापस्य प्रतिपादकमुत्पन्नास्तिकमुत्पन्नेऽस्तिमति, नानुत्पन्ने वान्ध्येयव्योमोत्पलादाविति, योऽप्यात्मलाभक्षणोऽस्ति सन्नित्येवंविधशब्दवाच्यः सोऽप्यभूतप्रादुर्भावः प्राग् नासीत् पश्चाल्लब्धात्माऽस्ति सन्नित्यादिशब्दव्यपदेश्यः, न तु भूत्वाऽस्तिमनुभवन्नस्तीत्याख्यायते, क्रियायाः कृतकत्वात् पचत्यादिवत्, कर्तुश्च तत्सम्बन्धेन कर्तृत्वप्रतिलम्भस्य कृतकत्वान्न स्थितसत्ताकमेकमस्ति किञ्चित्, प्रथमक्षणविलक्षणाश्चोत्तरोत्तरक्षणाः सन्तानाकारेणोपजनमासादयन्ति। तथा पर्यायास्तिकमित्युत्पत्तिमतोऽवश्यं विनश्वरत्वाद् यावन्त उत्पादास्तावन्त एव विनाशा इति विनाशेऽस्तिमति पर्यायास्तिकम्, पर्यायो भेदो विनाशलक्षणः सोऽस्त्येवोत्पन्नस्येति, पर्यायो हि विनाशपर्यायः, यथा प्राप्तपर्यायो **देवदत्त** इति, समस्तविस्रसाप्रयोगापादितविनाशसूचनाकारि च पर्यायास्तिकम्॥ अपरे तु वर्णयन्त्यन्यथा उत्पन्नास्तिकं पर्यायास्तिकं च, तत्र सामग्रीग्रहणादेकद्रव्यभाविनां पर्यायाणां काल-

---

वतारयति-**अधुनेति,** द्रव्यास्तिकमातृकापदास्तिकस्वरूपद्वयावधारकद्रव्यनयप्ररूपणानन्तरमित्यर्थः। **अविशिष्टवस्त्विति,** सामान्यसामान्यविशेषान्यतरात्मकानुगतवस्त्वित्यर्थः। **भेदा एवेति,** उत्पादविनाशस्वभावा पर्याया एवेत्यर्थ। पर्यायनयवक्तव्यतामाविष्करोति-**अनवरतेति,** मध्यकालस्थितिरूपव्यवधानरहितेत्यर्थः। एवकारव्यवच्छेद्यमाह-**न त्विति।** स्थित्यभावे हेतुमाह-**आत्मभावलक्षणेति,** आत्मलाभक्षणेति पाठोऽत्र भवितुमर्हति, तथा च आत्मलाभ पूर्वमसतः सत्त्वमुत्पत्तिरिति यावत्, तत्क्षणानन्तरक्षणविनाशित्वाद्भावमात्रस्येत्यर्थः। **तत्रोत्पत्तिक्षणानन्तरविनाशिनि भावे।** उत्पन्नास्तिकमित्यस्य निरुक्तिलभ्यमर्थमाह-**उत्पन्नेऽस्तिमतीति,** उत्पन्न इति विशेषोक्तिव्यवच्छेद्यमाह-**नानुत्पन्न** इति, यथानुत्पन्नधर्मस्वभावमपि सदित्येवमभ्युपेयात्स वान्ध्येयादिकमपि सदित्येवमवधारयेन्न त्वसदित्यर्थप्रकाशनाय **वान्ध्येयेत्यादि** विशेष्योपवर्णनम्। आत्मलाभक्षणोऽपि तिरोभूततया सत एवाविर्भावलक्षणो न सोऽस्ति सन्नित्यादिशब्दवाच्यो येन तिरोभूताविर्भूतावस्थाऽनुगामिनो वस्तुत्वं स्यात्किन्त्वभूत्वा भवनलक्षण एवास्त्यादिशब्दवाच्य इत्याह-**योऽप्यात्मलाभेति। अभूतप्रादुर्भावः** पूर्वमभूतस्य पश्चात्प्रादुर्भाव। अस्यैव विवरणं-**प्राग्नासीत्पश्चाल्लब्धात्मेति।** तर्हि अस्तिपदेन किन्नाभिधीयते इत्यपेक्षायामाह-**नन्विति। भूत्वा** पूर्वकाले सत्त्वमनुभूय। **अस्तिमनुभवन्** वर्त्तमानकालस्थितिमाभेजानः। उत्पत्त्यादिक्रियाधारस्योत्पत्तिकर्त्तुः कृतकत्वेन न स्थित्याधारत्वसम्भव, एकक्षणा च स्थितिरुत्पत्तिरेव, द्व्यादिक्षणा च स्थितिर्न सम्भवत्येव तद्व्यवहारस्य तत्तत्क्षणस्थित्यन्यतमेनैव सम्पादनीयत्वादित्याशयेनाह-**क्रियाया इति,** धात्वर्थत्वमत्र क्रियात्वम्, सत्तापि भूधात्वर्थतयाऽसधात्वर्थतया वा क्रियैव, तदभिसम्बन्धवतश्च सतः कर्त्तुः स्थिरत्वलक्षणं स्थितत्वं तदा स्याद्यदि सा स्थिरा स्यात्, सा च क्रियात्वात्कृतका न स्थिरेति। क्रियात्वस्य कृतकत्वेन व्याप्तेरवगतये दृष्टान्तमाह-**पचत्यादिवदिति। तत्सम्बन्धेन** क्रियासम्बन्धेन। **कर्तृत्वप्रतिलम्भस्य** कर्त्तृत्वस्वरूपप्राप्ते। एतेन यदा कुलालो न घटं करोति किन्तूदासीन एवास्ते तदा न कुम्भकर्त्तृकुम्भकारपदव्यपदेश्य इत्यावेदितम्। तथा च घटादिरपि प्रतिक्षणमन्यान्य एव, व्यवहारश्चोत्पत्तिक्षणमारभ्याविनाश नैकघटव्यक्तिमुपादाय किन्तु तत्सन्ततिसमाश्रयणेनेत्याह-**प्रथमक्षणेति। उपजनम्** आत्मलाभम्। उत्पन्नास्तिकं व्याख्याय पर्यायास्तिक व्याख्यानयति-**तथेत्यादिना।** पर्यायशब्दस्य विनाशार्थकत्वस्फुटीकरणायाह-**यथेति। प्राप्तपर्यायः** प्राप्तविनाश, यथाऽशेषस्थूलसूक्ष्मोत्पादकलापप्ररूपणाप्रवणत्वमुत्पन्नास्तिकस्य तथाशेषविनाशकलापप्ररूपणाप्रवणत्वं पर्यायास्तिकयस्येत्याभ्या पर्यायमात्रप्ररूपणायत्ताशेषानित्यप्रकारसमन्वयतो न न्यूनोक्तिता नाप्यधिकसङ्ख्याव्यवच्छेदानुपपत्तिरित्याशयेनाह-**समस्तेति।** उत्पन्नास्तिकपर्यायास्तिकयोर्व्याख्यानान्तरं केषाञ्चिदुपन्यस्यति-**अपरे त्वित्यादिना। अन्यथा,** पूर्वोपदर्शितप्रकारादन्यप्रकारेण। किं वर्णयन्तीत्यपेक्षायामाह-**उत्पन्नास्तिकं पर्यायास्तिकञ्चेति।** प्रथमोद्दिष्टमुत्पन्नास्तिकं तावदाह-**तत्रेति,** उत्पन्नास्तिकपर्यायास्तिकयोर्मध्य इत्यर्थः। सिध्यमानसिद्धवदिति यदुक्तं

तोऽर्थतो वाऽप्यव्यभिचारिणां यत्र व्यपदेशस्तदुत्पन्नास्तिकं सिध्यमानसिद्धवत्, यथा सिध्यमानः सिद्ध इति कालतोऽर्थतश्चाव्यभिचारी शब्दः, तथैकद्रव्यभाविनां पर्यायाणामयुगपद्वृत्तीनां युगपद्ग्रहणात् सामग्रीग्रहणाच्च यत्र व्यपदेशः स पर्यायादेशः, यथा स्पर्शादिमतां पुद्गलानामिन्द्रियैर्युगपद्ग्रहणादपि व्यपदेशः क्रियते–स्पर्शरसगन्धवर्णवन्तः पुद्गला इति ॥ अपरे व्याचक्षते—

"तेषामुत्पादसम्भक्तेरुत्पन्नास्तिकदेशना । उत्पद्यमानाः पर्यायाः, पर्यायास्तिकमुच्यते ॥"

तेषामिति, द्रव्यमातृकापदास्तिकभेदानामुत्पादयोगादुत्पन्नास्तिकदेशना, पर्यायनयस्यानुत्पन्नेन व्यवहाराभावात् तदानीमेव सन्, न ह्यनुत्पन्नाः केचिद् द्रव्यादयः सन्ति, अतीतानागतवर्तमानेष्वविशेषात्, यदा पुनरुत्पादसमावेशिनो वर्तमानकालावच्छिन्नाः पर्याया विवक्ष्यन्ते तदोत्पद्यमानावस्थायां पर्यायास्तिकमुच्यते ॥ अन्ये त्वभिदधति—न मातृकापदास्तिकं द्रव्यास्तिकाद् भिद्यत इति द्रव्यनयपरिग्रहः, पर्यायास्तिकं च नोत्पन्नास्तिकाद् विविच्यत इति पर्यायनयपरिग्रहः, तदेवं चतुर्भिरपि विकल्पैर्नयद्वयी प्रतिपिपादयिषिता, एवं तर्हि द्रव्यादिचतुष्टयी किमर्थेति चेत्, तदुच्यते—उभयनयस्वभावप्रदर्शनार्था चतुष्टयी । एवमेतान्यन्यव्याख्यानान्यालोच्य भाष्यं कथमपि गमनीयम् । स्वव्याख्यानानुसारेण तावदुच्यते, पर्यायनयश्चोत्पादविनाशद्वैविध्यप्रदिदर्शयिषया भाष्यकारेणोपचक्रमे–**उत्पन्नास्तिकं पर्यायास्तिकमिति** । स एष पर्यायनयमहाविटपी प्रौढदढानवद्यर्जुसूत्रनयादभ्रस्कन्धः सुप्रतिष्ठिताधारनानागमगहनशब्दनयशाखस्तदाश्रयसमभिरूढैवंभूतविविधविकल्पप्रशाखोऽर्थशब्दज्ञानशून्य-

---

तदेवोपपादयति–**यथा सिध्यमान** इति । पर्यायास्तिकं विवृणोति–**तथैकद्रव्यभाविनामिति** । **अयुगपद्वृत्तीनामि**त्यनेन कालतोऽर्थतो वा व्यभिचारिणामित्येवार्थः पूर्वस्माद्विशेषोऽवबोद्धव्यः । **सामग्रीग्रहणादिति**, रूपरसगन्धस्पर्शानामेकैवोत्पादिका यदि सामग्री तदा**ऽयुगपद्वृत्तीनामिति** न घटते तथाऽपि भिन्नाऽपि सामग्र्यभिन्नसामग्रीरूपतयैव गृह्यत इत्यभिप्रायेण **सामग्रीग्रहणादिति** व्याख्येयम्, पूर्वमपि **सामग्रीग्रहणादि**त्यस्येत्थमेव व्याख्यानम्, अन्यथा सर्वेषामेकसामग्रीप्रभवस्यैकत्वे एकद्रव्यभाविनामिति बहुवचनमसमञ्जसं स्यादिति बोध्यम् । **पर्यायादेशः** पर्यायास्तिकम् । एतदेव दृष्टान्तेन भावयति–**यथेति** । व्याख्यानान्तरमुपनिबध्नाति–**अपरे व्याचक्षत इति** । उत्पन्नास्तिकपर्यायास्तिकव्याख्यानरूपं तत्पद्यं विवृणोति–**तेषामितीति** । तेषामित्यस्यार्थकथनम्–**द्रव्यमातृकापदास्तिकभेदानामिति** । **उत्पादसम्भक्ते**रित्यस्यार्थः–**उत्पादयोगादिति** । कथमुत्पादयोगादुत्पन्नास्तिकदेशनेत्याकाङ्क्षायामाह–**पर्यायनयस्येत्यादि** । **तदानीमेव** उत्पन्नावस्थायामेव । एवकारव्यवच्छेद्यमाह–**न ह्यनुत्पन्ना इति** । अत्र हेतुः–**अतीतेति** । **उत्पद्यमाना** इत्याद्युत्तरार्द्धं पर्यायास्तिकव्याख्यानरूपं विवृणोति–**यदेति** । **उत्पद्यमाना** इत्यस्य विवरणम्–**उत्पादसमावेशिनो वर्तमानकालावच्छिन्ना इति** । **पर्याया** इत्यस्यार्थकथनम्–**पर्याया विवक्ष्यन्त इति** । **पर्यायास्तिकमुच्यते** इत्यस्य किञ्चिद्विशिष्यार्थकथनम्–**तदोत्पद्यमानावस्थायां पर्यायास्तिकमुच्यत इति** । अन्येषां चतुर्विधविकल्पस्यान्यथोपवर्णनमुपनिबध्नाति–**अन्ये त्वभिदधतीति** । एवं सति द्रव्यास्तिकं पर्यायास्तिकमित्येव वाच्यं किमर्थं विकल्पचतुष्टयाभिधानमित्यारेकते–**एवं तर्हीति** । स्वभाववर्णनपरैव विकल्पचतुष्टयी नान्यत्प्रयोजनं तस्या इत्युत्तरयति–**तदुच्यत इति** । **उभयनयस्वभावेति,** द्रव्यपर्यायनयस्वभावेत्यर्थः । एतानि च परव्याख्यानानि यथोपपद्यन्ते तथा स्वयमेव प्रेक्षादक्षास्तत्र तत्र स्वबुद्धिवैभवमाधास्यन्ति ग्रन्थगौरवभयान्न सर्वोपपादनायास्माभिर्लेखनी व्याप्रियते इत्युपदिशति–**एवमिति** । स्वव्याख्याने व्याख्यानान्तरापेक्षया विशेषं मनसि निधायाह–**स्वव्याख्यानानुसारेणेति** । पर्यायनयरूपमहावृक्षस्य समन्तत उपबृंहणार्थं भाष्यकारेण **उत्पन्नास्तिकं पर्यायास्तिकमि**त्येतज्जलावसेकरूपमुपनिबद्धमित्यर्थावगमनाय पर्यायनयस्य महावृक्षस्वरूपतयोपवर्णयति–**स एष पर्यायनयमहाविटपीति** । स्कन्धशाखाप्रशाखापत्रपुष्पफलसमन्वितस्य एव महावृक्षत्वमस्य घटत इत्येतत्तदुपदर्शयति–**प्रौढेत्यादि, प्रतन्यत** इत्यन्तं व्यक्तार्थम् । तत्र

ताङ्कुरपत्रपुष्पफलोपशोभितः पर्यायप्रधानत्वादुत्पादविनाशमात्रजलावसेकसंवर्धनीयः प्रतन्यते, तत्रर्जुसूत्रः कुटिलातीतानागतपरिहारेण वर्तमानक्षणावच्छिन्नवस्तुसत्तामात्रमृजुं सूत्रयति—अन्यतो व्यवच्छिनत्ति सूत्रपातवत्, न ह्यतीतमनागतं वाऽस्ति, यदि स्यातामतीतानागते न तर्हि मृतपुत्रिका युवतिः पुत्रकमुद्दिश्य रुद्यात्, न च पुत्रार्थिनी योपिदौपयाजिकादि विशिष्टदेवतासन्निधौ विदध्यात्, तद्धि वस्तु वर्तमानक्षणावस्थाय्येव, न जातुचित् ततः परं सत्तामनुभवति, नाप्यतीतकालासादितात्मलाभं किञ्चित् तत्रान्वेति, स्वकारणकलापसामग्रीसन्निधावुत्पद्य स्वरसभङ्गुरतामवलम्बन्ते तत्क्षणमात्रावलम्बिनः सर्वसंस्काराः । एवं च सति य एते कर्तृभूतद्रव्यशब्दसन्निधौ क्रियाशब्दाः प्रयुज्यन्ते यथा **देवदत्तः** पचति पठति गच्छतीति, कर्मभूतद्रव्यशब्दसन्निधौ वा यथा घटो भिद्यते घटं वा भिनत्तीत्येवमादयो न यथार्थाः, कथम् ? यतो नामशब्देनाविकृतरूपस्य द्रव्यस्याभिधानात्, क्रियाशब्देन च विकारस्य प्रतिपाद्यत्वात्, न च विकाराविकारयोरैकाधिकरण्यमस्ति विरुद्धत्वात्, अर्थप्रत्यायनाय हि प्रयुक्तः शब्दो विरुद्धमर्थं प्रतिपादयन्नैव सम्यग्ज्ञानमाधत्ते । अयथार्थत्वात्, मृगतृष्णायां सलिलशब्दवदिति । उक्तार्थसंवादी च श्लोको गीतः पुराविदा—

"पलालं न दहत्यग्नि–र्भिद्यते न घटः क्वचित् । नासंयतः प्रव्रजति भव्यो–ऽसिद्धो न सिद्ध्यति ॥"

पलालं दह्यत इति यद् व्यवहारस्य वाक्यं तद् विरुध्यते, अत्र वाक्ये वाक्यार्थप्रतिपत्तये

---

स्कन्धरूपस्य ऋजुसूत्रस्य स्वरूपमुपवर्णयति—**तत्रर्जुसूत्र** इत्यादिना । **कुटिलेति,** कुटिलं यदतीतमनागतं च तत्परिहारेण तत्परित्यागेनेत्यर्थः । **वर्त्तमानेति,** वर्त्तमानक्षणावच्छिन्ना या वस्तुसत्ता तन्मात्रमित्यर्थ । **सूत्रयतीत्यस्यान्यतो व्यवच्छिनत्तीत्यर्थकथनम्** । **सूत्रपातवदिति,** लोके ऊर्ध्वाधस्तिर्यग्व्यवस्थिताना पदार्थाना समश्रेणिव्यवस्थितत्वपरिज्ञानाय यथा सूत्रपातोऽनन्यसाधारणोपायस्तेनासमश्रेणिव्यवस्थितिपरिहारेण समश्रेणिव्यवस्थित्यवगतिस्तथेत्यर्थः । नन्वतीतानागतयोरपि वस्तुनो सद्भावात्तद्व्यवच्छेदकस्यास्यासद्विपयकत्वेन दुर्णयत्वमेवेत्यत आह—**न ह्यतीतमनागतं वाऽस्तीति** । नहि वाङ्मात्रेण कस्यचिद्विधि प्रतिषेधो वा सम्भवतीत्यतस्तत्र युक्तिमुपदर्शयति—**यदीति** । **न तर्हीत्यादिना**ऽतीतवस्तुसद्भावे दोष उट्टङ्कित । अनागतवस्तुसद्भावे दोषमुपदर्शयति—**न च पुत्रार्थिनीति** । अतीतस्यापि पुत्रस्य सद्भावेन तद्विरहस्याभावात्तन्निबन्धनशोकस्याभावे तत्कार्यं रोदनं न स्यात्, एवं भाविनः पुत्रस्य पूर्वमपि भावेन तदप्राप्तेरेवाभावेन तन्निबन्धनपुत्रार्थिताया अभावेन तन्निबन्धनपुत्रप्राप्तिफलकमीष्टदेवतोत्तरकालीनाराधनाविशेषौपयाजिकादिसङ्कल्पनमपि न स्यादित्यर्थः । एवं च यद् ऋजुसूत्रवक्तव्यं तत्सम्पीण्ड्य दर्शयति—**तद्धि वस्त्वित्यादिना** । एवकारव्यवच्छेद्यमाह—**न जातुचिदिति,** कदाचिदपि नेत्यर्थः । **ततः परं** वर्त्तमानक्षणादूर्ध्वम् । वर्त्तमानकालीनस्योत्तरकालासत्त्वे पूर्वकालीनस्यापि यदा तस्यावस्थानं तत्काल एव तस्य वर्त्तमान इति न तस्य तदुत्तरकालः, यस्य वर्त्तमानस्तस्मिंस्तत्क्षणावच्छिन्ने नान्वयसम्भव इति प्राप्तमेव तथापि स्पष्टप्रतिपत्त्यर्थमाह—**नाप्यतीतेति** । **तत्र** वर्त्तमानक्षणावस्थायिनि वस्तुनि । तर्हि ऋजुसूत्रविषया पदार्था कीदृशाः ? इत्यपेक्षायामाह—**स्वकारणकलापेति** । **सर्वसंस्काराः** सर्वपदार्थाः । कर्तृकर्मक्रियाविपयाणां शब्दाना नास्मिन्मते याथार्थ्यमित्युपपादयन्नाह—**एवं च सतीति,** सर्वभावाना क्षणमात्रावलम्बित्वे च सतीत्यर्थ । अविगानेन सर्वैर्लौकिकपरीक्षकैः प्रयुज्यमानाना कर्तृसमभिव्याहृताना कर्मसमभिव्याहृतानां वा क्रियाशब्दानां कथं न याथार्थ्यमिति पृच्छति—**कथमिति** । अविकृतयो कर्तृकर्मणो विकारात्मकक्रियाकालेऽभावात्सामानाधिकरण्यानुपपत्तेरनुपपद्यमानार्थकत्वादयाथार्थ्यमित्याशयेनोत्तरयति—**यत इति** । **नामशब्देन** व्याकरणकर्तृनामसङ्केतविपयशब्देन । **क्रियाशब्देन** क्रियाविशेपार्थसङ्केतितधातुना । अयथार्थत्वाच्चोक्तशब्दाना सम्यग्ज्ञानजनकत्वलक्षणं प्रामाण्यमपि कुत इत्याह—**अर्थप्रत्यायनाय हीति** । **आधत्ते** जनयति । उक्तर्जुसूत्रप्ररूपणं सवादयितुमाह—**उक्तार्थसंवादी चेति** । **"पलालं न दहत्यग्निः"** इतिप्रथमचरणार्थमुपपादयति—**पलालं दह्यत इतीत्यारभ्य प्रमत्तगीतावेताविती**त्यन्तेन । पलाल-

पदार्थप्रविभागकाले पलालशब्दो विशिष्टाकारद्रव्यवचनो नामशब्दः, तद्धि द्रव्यं यावत् तस्मिन्नेवाकारे वर्तते तावदेव पलालशब्दवाच्यम्, अन्यदा तु पलालभावेन तस्याभाव एव, तद्भावेनाभावात् पटवत्, तस्मात् स्थिररूपमव्यापारमुदासीनमविकृतं पलालशब्देन वस्तु प्रतिपादितम्, कथं तदेव दह्यत इत्यनेन शब्देनोच्येत ? क्रियाशब्दस्य विकाराभिधायित्वात्, न हि स एवार्थो विकारश्चाविकारश्च भवितुमुत्सहते, यदि हि तत् पलालं न तर्हि तदेव दह्यते, अविपरिणतत्वात् प्रागवस्थावत्, विपरिणममानं च पलालमेव तन्न भवति, विपरिणामशब्दस्य भावान्तरवाचित्वात्, तस्माद् यावत् तत् पलालं तावन्न दह्यते, यदा दह्यते तदा पलालं न भवतीत्यतो नैतावेकस्यार्थस्य प्रत्यायनाय सम्यग्ज्ञानोपजननकारणम्, शब्दान्तरापत्त्यसहिष्णुत्वात् प्रमत्तगीतावेताविति, एवं घटाद्युदाहरणभावना कार्या । एवं च सदेकक्षणवृत्त्येव, नित्यं पुनर्नैवास्ति वस्तु किञ्चिदिति ॥

एवमृजुसूत्रनयेन निरूपिते वस्तुनि शब्दनयस्तद्व्यावृत्त्यर्थमाह–शब्दप्रयोगोऽर्थगत्यर्थः, तत्र वक्तुरर्थानुविधायी शब्दोऽर्थवशात् तस्य शब्दप्रयोगः, श्रोतुः पुनः शब्दवशादर्थप्रतिपत्तिरिति शब्दानुविधाय्यर्थः, शब्दनयाश्च शब्दानुरूपमर्थमिच्छन्ति, यथा शब्दस्तथाऽर्थोऽपि प्रतिपत्तव्यः, समनन्तरनयप्रतिपादितं वर्तमानरूपप्रवृत्तं वस्तु सूक्ष्मतरेण शब्देन भिद्यते, ऋजुसूत्रस्तु वर्तमानानेकधर्मरूपमपि घटं शब्देनाभिधीयमानं सम्यगभ्युपैति, यथा मृद्घटोऽस्ति घटो द्रव्यं घट इति, यद्यसौ मृद्रूपेण द्रव्यतया च न

---

शब्दवाच्यस्य विशिष्टाकारद्रव्यस्याविकृतरूपस्य दह्यत इति शब्दवाच्यस्य विकारविशेषाक्रान्तस्य विरुद्धधर्माध्यासादन्योन्यं भिन्नत्वेनाभेदासम्भवान्न सामानाधिकरण्यमुपपद्यत इत्येतत्प्रपञ्चत आह–**अत्र हीति** । **तद्धि** विशिष्टाकारं हि । **अन्यदा** विशिष्टाकारप्रच्युतिवेलायाम् । **तस्य** विशिष्टाकारद्रव्यस्य । **तद्भावेन** पलालभावेन । **पटवदिति,** पलालभावेनाभावात्पटो यथा न पलालं तथेत्यर्थः । **पलालमिति** नाम्नो **दह्यत** इति क्रियाया विरोधमेव निगमयति–**तस्मादिति** । **तत्** दाहकालावस्थितं वस्तु । **पलालं** विशिष्टाकारद्रव्यरूपमविकृतम् । **तदेव** अविकृतं विशिष्टाकारद्रव्यरूपमेव । **विपरिणममानं च** विशिष्टाकारपरित्यागेनान्यथाकारपरिग्रहेणोपजातञ्च । उपसंहरति–**तस्मादिति** । **नैताविति,** पलालं दह्यत इति शब्दौ नेत्यर्थः । **नञः कारणमित्यनेन** सम्बन्धः । निषेधे हेतुमाह–**शब्दान्तरापत्त्यसहिष्णुत्वादिति,** तयोरेकशब्दवाच्यस्यापरशब्दवाच्यत्वयोग्यत्वाभावादित्यर्थः । **"भिद्यते न घटः कश्चिद्"** इत्यादीनामपीत्थमेवार्थभावना कार्येत्यतिदिशति–**एवं घटाद्युदाहरणभावना कार्येति** । ऋजुसूत्रवक्तव्यमुपसंहरति–**एवं चेति** । एवकारव्यवच्छेद्यमाह–**नित्यं पुनरिति,** एतावता प्रौढदृढानवद्यर्जुसूत्रनयादभ्रस्कन्ध इति विशेषणोपपत्तिः कृता । इदानीं **सुप्रतिष्ठिताधारनानागमगहनशब्दनयशाख** इति विशेषणं भावयितुं शब्दनयं प्ररूपयति–**एवं ऋजुसूत्रनयेनेति** । **शब्दनयः** साम्प्रतसमभिरूढैवम्भूतभेदेन त्रिविधः, तत्र साम्प्रतस्य सामान्यशब्देनाप्यभिधानमिति बोध्यम् । **तद्व्यावृत्त्यर्थम्** ऋजुसूत्रनयाभिप्रेतवस्तुव्यवच्छित्तये । **आहेति** क्रियायाः कर्मोपनिबध्नाति–**शब्दप्रयोगोऽर्थगत्यर्थ इति,** अर्थविशेषावगतये शब्दविशेषोपादानमित्यर्थः । यथाऽर्थस्तथा शब्दं प्रयुञ्जते वक्तारः, यतो वाक्यरचनां प्रतिवाक्यार्थज्ञानस्य हेतुत्वादित्यर्थानुरोध्येव वक्तुः शब्दप्रयोगः । श्रोता तु गृहीतसङ्केतिकं यादृशं शब्दं शृणोति तादृशशब्दानुरोधिनमेवार्थमवगच्छतीति तस्य शब्दानुरोध्यर्थ इत्याह–**तत्र वक्तुरिति** । **तस्य** वक्तुः । शब्दानुरूपार्थाभ्युपगमे त्रयाणामपि शब्दनयानामैकवाक्यतेत्यभिसन्धायोक्तम्–**शब्दनयाश्चेति** । शब्दानुरूपमर्थमिच्छन्तीति यदुक्तं तदेव प्रपञ्चयति–**यथा शब्दस्तथाऽर्थोऽपि प्रतिपत्तव्य इति** । **समनन्तरनयेति,** ऋजुसूत्रनयेत्यर्थः । **वर्तमानरूपप्रवृत्तं** वर्तमानकालवृत्तियावद्धर्मसमन्वितम् । **सूक्ष्मतरेण** पुंस्त्वस्त्रीत्वनपुंसकत्वादिना । **शब्देन** पुंस्त्रीनपुंसकलिङ्गादिभेदभाजा शब्देन । **भिद्यते** भिन्नमेव भवति । एतदेव क्रमेण ऋजुसूत्रशब्दनययोरपेयोपवर्णनेन दर्शयति–**ऋजुसूत्रस्त्वित्यादिना** । मृत्त्वास्तित्वद्रव्यत्वानि घटेऽभ्युपेत्यानीत्यत्र शब्दप्रयोग एवार्थानुरोध्युपदर्श्यतेऽभ्युपगमसमानाकारः–**यथेति** । उक्ताभ्युपगमेऽनिष्टप्रसङ्गरूपस्तर्कोऽन्यथाभ्युपगमबाधकतयोपोद्बलक इत्याह–**यद्यसाविति, असौ** घटः । ऋजुसूत्रनयोपेयमुपदर्श्य साम्प्रतनयरूपशब्दनयो-

स्याद्मृद्द्रव्यं च घटः स्यात्, अतः सोऽसौ तेन रूपेण वृत्तत्वाद् वर्तमानरूपघटवदिति । शब्दनयस्तु वर्तमानकालवृत्तमपि लिङ्गसङ्ख्यापुरुषकालादिभिन्नमवस्त्वेव मन्यते, स्त्रीपुंनपुंसकलिङ्गानां गुणानां भिन्नत्वात्, मृद्घटो द्रव्यमिति न सामानाधिकरण्यम्, यथा गौरश्वः, संस्त्यानप्रसवस्थितिलक्षणाः परस्परविरुद्धाः खल्वेते गुणाः शीतोष्णादिवत्, मृदादिशब्दाच्च भिन्नरूपप्रत्ययप्रसवो दृष्टः, पटकुटादिभिन्नध्वनिवत्, तस्माल्लिङ्गादिभिन्नमसम्यगभिधानम्, तस्यार्थस्य तेन रूपेणाभूतत्वात्, कातरे शूरशब्दप्रयोगवदिति, एवं चाभिन्नलिङ्गसङ्ख्याद्युच्यमानं वस्तु वस्तुतामधिवसति, तेन रूपेण वृत्तत्वात्, यथा शूरे शूरशब्दप्रयोगः, समानलिङ्गशब्दाभिधेयतायां च वस्तुनः पर्यायान्तरैः सामानाधिकरण्यं सिध्यति, घटः कुटो हस्ती दन्ती चेति ॥

एवं शब्दनयेनर्जुसूत्रे व्यावर्तिते वस्तुनि चाभिन्नलिङ्गादिशब्दवाच्ये प्रतिष्टापिते वर्तमानस्याभिन्नलिङ्गादिकस्य वस्तुनः सूक्ष्मतरं भेदमभिधत्ते समभिरूढनयः—न जातुचित् पर्यायान्तरैकाधिकरण्येन शब्दैरुच्यमानं वस्तु यथावस्थितमुक्तं भवति, संज्ञानिमित्तभेदाद् । द्विविधा संज्ञा—पारिभाषिकी नैमित्तिकी

---

पेयमुपदर्शयति—**शब्दनयस्त्विति** । **अवस्त्वेव,** एव वस्त्वनात्मकमेव, भिन्नं भिन्नं च तद्वस्त्वभ्युपगम्यमानं भवत्येव वस्त्वित्यग्रे व्यक्तम् । एवं च यावन्तः समानलिङ्गाः पर्यायास्तावतामेकवस्त्वभिधायकत्वेन पर्यायत्वम्, ये च विभिन्नलिङ्गभाजः शब्दास्तेषामर्था अपि विभिन्ना एवेति न तेषा पर्यायतेति भावः । यश्च मृद् घट. द्रव्यं घट इति प्रयोगो घटे मृत्त्वस्य द्रव्यत्वस्य च साधनायोपन्यस्त. सोऽपि न युक्त इत्याह—**मृद्घट इति** । तत्र स्त्रीपुंनपुसकलिङ्गाना गुणाना विभिन्नलक्षणत्वेन परस्पर विरुद्धत्वाद्विभिन्नत्वमुपपादयति—**संस्त्यानेति,** सस्त्यानं रुपान्तरेण भवनम्, तदेव पूर्वरूपविनाश., प्रसव उत्पादः, स्थितिर्ध्रौव्यम्, तल्लक्षणं चैषां पारिभाषिकम्, अत्र मृदः स्त्रीलिङ्गत्वात्तद्वाच्यं संस्त्यानम्, घटपदस्य पुंलिङ्गत्वात्तद्वाच्यः प्रसवः, द्रव्यपदस्य नपुंसकलिङ्गत्वात्तद्वाच्यं ध्रौव्यमिति परस्परविरुद्धार्थकत्वेन नैषा सामानाधिकरण्यसम्भव इत्यभिसन्धिः । विभिन्नाववोधजनकत्वादपि न मृदादिशब्दानां सामानाधिकरण्यमित्याह—**मृदादिशब्दाच्चेति** । **तस्मादिति,** यतः स्त्रीपुंनपुंसकानां भिन्नत्वं तस्माल्लिङ्गादिभिन्नं यद् एकवस्तुवाचकत्वेन ऋजसूत्रसम्मतमभिधानं तत्तथाऽसम्यगित्यर्थ. । **तस्यार्थस्य,** एकस्य स्त्रीत्वविशिष्टस्य पुंस्त्वविशिष्टस्य नपुंसकत्वविशिष्टस्य वाऽर्थस्य । **तेन रूपेण,** परस्परविरुद्धानेकलिङ्गाद्यात्मना । **अभूतत्वात्,** अयथार्थत्वात् । शब्दनये यथोच्यमानं वस्तु वस्तुत्वं प्रतिपद्यते तथोपदर्शयति—**एवञ्चेति,** विभिन्नलिङ्गादिवाच्यस्यावस्तुत्वे चेत्यर्थः । **तेन रूपेण** अभिन्नलिङ्गसङ्ख्यादिरूपेण । **वृत्तत्वात्** यथार्थत्वात् । विभिन्नलिङ्गानां मृद्घटद्रव्यपदाना न सामानाधिकरण्यमेतन्मते इत्युपपादितत्वे समानलिङ्गशब्दाना सामानाधिकरण्यमर्थादागतमेव तथापि विभिन्नप्रवृत्तिनिमित्तकपदै. सह सामानाधिकरण्यमपि मा प्रसाङ्क्षीत्किन्तु समानप्रवृत्तिनिमित्तकपदैरेवेत्याशयेनाह—**समानलिङ्गेति** । साम्प्रतनयस्वरूपं शब्दनयमभिधाय समभिरूढनामानं शब्दनयं प्ररूपयति—**एवं शब्दनयेनर्जुसूत्र इति** । **व्यावर्त्तित** इति पूर्वान्वयि, एवं **प्रतिष्ठापित** इत्यपि । समभिरूढनयाभिमतं सूक्ष्मतरभेदमेवोपदर्शयति—**न जातुचिदित्यादिना** । **पर्यायान्तरैकाधिकरण्येन** घटकुटादिशब्दसामानाधिकरण्येन । **शब्दैः** कलसकुम्भादिशब्दै. । **उच्यमानं** घटः कलसः कुम्भ· कुट इत्येवं प्रतिपाद्यमानम् । **वस्तु** एकं वस्तु, घटशब्दवाच्यं न कुटादिशब्दवाच्यतया प्रतिपाद्यमानं वस्तुभावं प्रतिपाद्यते किन्तु घटशब्दवाच्यमन्यत् कुम्भशब्दवाच्यञ्चान्यदित्यर्थः । कुतश्च घटशब्दवाच्यात्कुम्भशब्दवाच्यमन्यदित्यपेक्षायामाह—**संज्ञानिमित्तभेदादिति,** 'घटि चेष्टायाम्' इत्यनुसाराद्घटनक्रियानिमित्तका घट इति संज्ञा, कुं पृथिवीं भासयतीति व्युत्पत्त्यनुसारेण भूभासनरूपक्रियानिमित्तका कुम्भ इति सज्ञा, इत्येवं व्युत्पत्तिनिमित्तभेदात्सर्वशब्दाना भिन्नार्थत्वम्, व्युत्पत्तिनिमित्तमेव चास्मिन्नये प्रवृत्तिनिमित्तमिति । समुदायशक्त्यात्मकरूढिप्रवृत्ता च संज्ञा नास्यार्थतत्त्वावभासिका किन्त्ववयवशक्तिरूपयोगप्रवृत्तैवेत्याशयेन सज्ञाद्वैविध्यमुपदर्शयति—**द्विविधा संज्ञेति** । **पारिभाषिकी** समुदायशक्तिकल्पनसमुत्थापिता सज्ञा । **नैमित्तिकी** अवयवशक्तिरूपयोगबलप्रभाविता । प्रथमायाः नार्थतत्त्वाववोधकत्वमित्याह—**तत्रेति**

च, तत्र पारिभाषिकी नार्थतत्त्वं ब्रवीति, यदृच्छामात्रप्रवृत्तत्वात्, नैमित्तिकी तु सर्वैव संज्ञा युक्ता, यथाऽऽह—

"नाम च धातुजमाह निरुक्ते, व्याकरणे शकटस्य च तोकम्। यन्न विशेषपदार्थसमुत्थं, प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥ १ ॥" [ वार्तिकम् ]

एवं च सर्वे क्रियानिमित्ताः शब्दा धातुजत्वात्, निमित्तभेदाच्चार्थभेदो दृष्टश्छत्रिदण्ड्यादिवत्, अतो यां यां संज्ञामभिधत्ते तां तां समभिरोहतीति समभिरूढस्तामेवैकामारोहति, द्वितीयां निमित्तान्तरवृत्तां न क्षमते, तस्माद् वर्तमानेनाभिन्नलिङ्गादिनाऽप्येकेनैव ध्वनिनाभिधीयमानोऽर्थः सम्यगुक्तो भवति, नान्यथेति ॥

क्रियाभेदादित्थं समभिरूढनयेन प्रतिपादिते वस्तुन्येवंभूतनयः तद्वस्तु सूक्ष्मतरभेदं प्रतिपादयितुमुपक्रमते—यदि घटत इति घटः क्रियानिमित्तशब्दवाच्योऽभ्युपेतस्त्वया ततो यत् तन्निमित्तं सा क्रिया यदैव वर्तमाना तदैव नैमित्तिकः शब्दो युक्तश्चित्रकरादिवत्, तस्माद् यदैव घटते—चेष्टते तदैव घटः, तन्निमित्ताभावे पटादिवदेवासौ न घटः, न चातीतानागतनिमित्तसम्बन्धः, तयोरभावात्, न ह्यतीतं भावि वा छत्रदण्डादि छत्रिदण्ड्यादीनां निमित्तं युज्यते, यदि स्यात्, त्रैलोक्यस्य छत्रिदण्डित्वप्रसङ्गः, अतो घटमान एव घटः, क्रियाविशिष्टस्यैव घटता, ततश्च घटशब्देनापि नैवासौ सर्वदा वाच्य इति, एवमेष पर्यायनयः सूक्ष्मतरभेदस्तावदाधावति यावज्ज्ञानमात्रमवशिष्यते शून्यता वा, न त्विह सकलक्रमभेदाख्यानं क्रियतेऽन्यत्र प्रपञ्चितत्वात्। एवमेतयोर्द्रव्यास्तिकपर्यायास्तिकयो-

---

तयोर्मध्य इत्यर्थः। उत्तराया अर्थतत्त्वावबोधकत्वेन युक्तत्वमित्याह—**नैमित्तिकी त्विति**। उक्तमर्थं संवादयति—**यथाहेति**। **नाम चेति, निरुक्ते** व्युत्पत्तिप्रतिपादकग्रन्थे व्युत्पत्तिकारः, **व्याकरणे तु शकटस्य तोकम**पत्यं शाकटायनः, **धातुजं नाम आह**। तत्र परिगणितशब्दानां व्युत्पादनादन्येषु नामसु का गतिरित्याह—**यन्नेत्यादि, यद् नाम, पदार्थविशेषसमुत्थं** पदार्थविशेषेण प्रकृतिविशेषेण प्रत्ययविशेषेण च उत्थं जातं व्युत्पादितं न, **तद् नाम, प्रत्ययतः** प्रत्ययविशेषं परिकल्प्य, **प्रकृतेः** प्रकृतिविशेषं परिकल्प्य च **ऊह्यं** तर्क्यम्, व्युत्पाद्यं साधनीयमिति यावत्, सर्वेषां शब्दानां व्युत्पत्तिनिमित्तभेदावश्यम्भावेऽर्थभेद आवश्यक इत्याह—**एवं चेति,** सर्वनाम्नां धातुजन्यत्वे सतीत्यर्थः। अस्य नयस्य समभिरूढसञ्ज्ञाप्यन्वर्थेत्याह—**अतो यां यामिति**। **तामेवे**त्येवकारव्यवच्छेद्यमाह—**द्वितीयामिति**। उपसंहरति—**तस्मादिति**। **वर्त्तमानेने**त्यनेन ऋजुसूत्रार्थस्यैव **अभिन्नलिङ्गादिने**त्यनेन साम्प्रतनयार्थस्यैव **एकेनैवे**त्यनेन विशेषिततरभावेनैवार्थोऽस्येति ख्यापितम्। समभिरूढनयरूपपर्यायनयविटपिप्रशाखा निरूप्यैवम्भूतरूपतत्प्रशाखा निरूपयति—**क्रियाभेदादित्थमिति**। **त्वया** समभिरूढनयेन। **चित्रकरादिवदिति,** आदिपदात्कुम्भकारादेः परिग्रहः, चित्रकरणवेलायां चित्रकारव्यपदेशः कुम्भकरणवेलायामेव कुम्भकारव्यपदेश इत्यस्याभिमानः। न च कदाचिदसौ चेष्टां कृतवान् करिष्यतीति चेति कृत्वोपलक्षणभृतया चेष्टया घटपदवाच्योऽचेष्टमानोऽपि किं न स्यादित्याशङ्कायामाह—**न चातीतेति**। **तयोः,** अतीतानागतयोः। एतदेवोपपादयति—**न ह्यतीतमिति,** उत्तानार्थोऽयं ग्रन्थः। पर्यायनयमूलकावेव विज्ञानवादशून्यवादौ **योगाचार-माध्यमिक**प्रवर्त्तिताविलेतस्य माहात्म्यख्यापनायाह—**एवमेष पर्यायनय इति**। यथा यदैव क्रिया तदैव तन्निमित्तकशब्दवाच्योऽर्थस्तथा यदैव ज्ञानं तदैवार्थसिद्धिः, न ज्ञानादृतेऽर्थसत्तायां मानमस्ति, एवं निष्पीड्यमानोऽर्थो ज्ञानाकारस्वरूप एव प्रविशति, आकारोऽपि विचार्यमाणो न ज्ञानाद्भिन्नस्वरूपतामुपढौकते, ज्ञानमपि ग्राह्यग्राहकाकारविकलं निरुच्यमानं न कथञ्चिद्व्यवतिष्ठत इति शून्यतायामेव विश्राम्यतीत्यभिसन्धिः। ननु पर्यायनयस्य केन क्रमेण विज्ञानमात्रे शून्यतायां च पर्यवसानं? वाङ्मात्रेण पर्यवसानं तु पूर्णतायामप्यस्त्यतो वक्तव्य एव तदुपपादकक्रम इत्यत आह—**न त्विहेति,** अपूर्वार्थप्ररूपणे हि शास्त्रव्यापारः साफल्यमञ्चति, अन्यत्र प्ररूपितस्यार्थस्य प्ररूपणं त्वनुवादकतामात्रेण ग्रन्थगौरवापादकं नादरणीयम्, दिङ्मात्रप्रदर्शनमेव तु न्याय्यम्, तत्तु कृतमेवेति भावः। **एषामि**त्याद्यनन्तरं भाष्यमवतारयति—**एवमेतयोरिति**। **वचनचतुष्टयेति,** द्रव्यास्तिकं मातृका-

वचनचतुष्टयोपात्तयोः परस्परापेक्षयोरर्पणानर्पणविशेषतः सम्भवद्भिर्विकल्पैर्भाष्यकृत् स्वयमेव सन्नित्यादिभेदभावनां करोति—

[भाष्यम्-] **एषामर्थपदानि द्रव्यं वा द्रव्ये वा द्रव्याणि वा सत्। असन्नाम नास्त्येव द्रव्यास्तिकस्य।**

**एषामर्थपदानी**त्यादि, एषां—द्रव्यपर्यायनयभेदानां द्रव्यास्तिकादीनां चतुर्णाम् अर्थानि पदानि **अर्थपदानि—द्रव्यं वा द्रव्ये वा** इत्यादीनि, द्रव्यास्तिकादीनां योऽर्थोऽभिधेयो—वाच्यस्तत्प्रतिपादनप्रयोजनान्येकत्वादीनि युक्तानि द्रव्यादीनि, एभिर्हि द्रव्यास्तिकादीनि व्याख्यायन्ते विकल्पैः, तेषां चार्थाभिधानप्रत्ययभेदेन भिन्नानामन्तरङ्गाभिधानप्रत्ययपदापेक्षया वहुतिथविद्वज्जनाभिमतवहिरङ्गार्थपदचिन्ता क्रियते, तिष्ठतां तावदभिधानप्रत्ययावित्यर्थपदमेव प्राक् प्रदर्श्यत इत्यर्थः। तत्र द्रव्यं भव्यं योग्यं स्वपर्यायपरिणतेः, सर्वं धर्मादि भेदवाद्यभिमतमभिन्नलक्षणार्पणयैकत्वेन विवक्ष्यते द्रव्यमिति द्रव्यस्वभावात्यागात्, न च द्रव्यव्यतिरिक्तं गुणकर्मादि किञ्चिदस्ति, रूपरसादयस्तद्द्रव्यद्वारेणैवोपलब्धिमार्गमवतरन्तो द्रव्यवृत्तिमात्रत्वेनावधार्यन्ते, न भिन्नजातीयत्वेन, चक्षुरादिग्रहणभेदात्

---

पदास्तिकमुत्पन्नास्तिकं पर्यायास्तिकमिति वचनचतुष्टयेत्यर्थ। **द्रव्यं वे**त्यादि संग्रहनैगमनयाभिप्रेतस्य द्रव्यास्तिकमिति प्रथमवचनस्य व्याख्यानम्। **अर्थपदानी**त्यत्र कर्मधारयसमास इत्यावेदनायाह—**अर्थानि पदानीति। इत्यादीनीति**, आदिपदाद्द्रव्याणि वा मातृकापदं वेत्यादीनामुपग्रहः। द्रव्यं वा द्रव्ये वा द्रव्याणि वा सत् सती सन्तीत्येतानि एकवचनद्विवचनवहुवचनान्तानि द्रव्यास्तिकमित्येतस्यार्थपदानि व्याख्यानप्रयोजनानीत्येतदर्थावेदनायाह—**द्रव्यास्तिकादीनामिति। अर्थपदानी**त्येतत्पदं **मातृकापदास्तिकस्यापी**त्याद्युत्तरभाष्येऽपि सम्बध्यत इत्यतोऽत्रादिपदमुपात्तं मातृकापदास्तिकादीनां सङ्ग्रहाय, एवमग्रेऽपि। **एकत्वादीनि युक्तानीति**, अत्र **एकवचनादियुक्तानी**ति पाठो युक्तः। **द्रव्यादीनीति**, आदिपदान्मातृकापदादेरुपग्रहः। **एभिः**, द्रव्यमित्यादिभिः, अस्य **विकल्पै**रित्यनेन सम्बन्धः, अर्थाभिधानप्रत्ययास्तुल्यनामधेया इति वचनाद्द्रव्यास्तिकादीनां स्वस्वरूपाभिधानस्वस्वार्थतत्प्रत्ययवाचकत्वेऽपि यत्तदर्थमात्रप्रत्यायनप्रयोजनकतयाऽर्थपदानीत्यस्योपवर्णनं तदभिप्रायमाविष्करोति—**तेषामि**त्यादिना, तेषा द्रव्यास्तिकादीनाम्। अभिधानप्रत्यययोराकारतो न भेद, द्रव्यास्तिकमित्यादिनाम्नः द्रव्यास्तिकमित्यादिज्ञानस्य च स्वरूपतोऽविशेषादतोऽन्तरङ्गत्वं तयो', अर्थस्तु भिद्यतेऽतो वहिरङ्गत्वमस्य, तस्य व्याख्यानतः प्रतिपत्तित एव विदुषामिष्टसिद्धिरिति तत्प्रपञ्चनमेव न्याय्यमित्याशयेनाह—**अन्तरङ्गेति। वहुतिथेति**, वहुप्रकारेत्यर्थ', अस्य वहिरङ्गार्थपदेऽन्वयः। चिन्ताकरणस्वरूपमुपदर्शयति—**तिष्ठतामिति**। द्रव्यं सदित्येकवचनसमन्वितं संग्रहनयाभिमतं व्याख्यानयति—**तत्र द्रव्यमि**त्यादिना। द्रव्यं च भव्य इत्यनुसाराद्द्रव्य**मिति भव्यमाह**। स्वपर्यायरूपेण भवनाद्युज्यते भव्यं द्रव्यम्। कारणे द्रव्यशब्दप्रयोगात्, कारणं च स्वरूपयोग्यतया फलोपहिततया च भवति, तत्र स्वरूपयोग्यताश्रयणेनाह—**योग्यमिति**। कस्य योग्यमित्यपेक्षायामाह—**स्वपर्यायपरिणतेरिति**। अत्रार्पणाकल्पमुपनिवध्नाति—**सर्वमिति**। **धर्मादी**त्यत्रादिपदादधर्माकाशजीवपुद्गलानां ग्रहणम्। गतिस्थित्यादिरूपेण परिणमदपि धर्मादि द्रव्यस्वभावं न जहातीत्येकद्रव्यात्मकमेवेत्याह—**द्रव्यस्वभावात्यागादिति**। **द्रव्यमि**त्येकवचनान्तमवधारणार्थाकलितमेकत्वविशिष्टद्रव्यमाह, ततो द्रव्यव्यतिरिक्तस्य सत्त्वमपवदतीत्याह—**न च द्रव्यव्यतिरिक्तमिति। गुणकर्मादीति**, आदिपदात्सामान्यविशेषयोरुपग्रहः। तत्र तावद्गुणस्य द्रव्याव्यतिरिक्तत्वमुपपादयति—**रूपरसादय** इत्यादिना। **द्रव्यवृत्तिमात्रत्वेन** द्रव्यपरिणाममात्रत्वेन। **अवधार्यन्ते** रूपरसादिरूपद्रव्याकारोपलब्धिलक्षणज्ञानेन निश्चीयन्ते, न तु तत्तज्ज्ञाने द्रव्यविजातीयत्वमपि तेषा' भाषत इति न द्रव्यविजातीयत्वेन तेषामवधारणमित्याह—**न भिन्नजातीयत्वेनेति**। चक्षुर्जन्यज्ञानविषयभावापन्नं द्रव्यं रूपमिति, रसनाग्राह्यतापन्नं तदेव रस इति, त्वगिन्द्रियगोचरतामितं स्पर्श इति, घ्राणेनाघ्रायमाणं गन्ध इति रूपादयस्तद्वृत्तय एवेत्याह—**चक्षुरादिग्रहणभेदात्त्विति**। ता रूपरसादिस्वरूपाः, **वृत्तयः** परिणतय.,

तु वृत्तयस्तास्तस्य भिद्यन्ते, पितृपुत्रमातुलत्वाद्यनेकसम्बन्धिसम्बन्धविशिष्टपुरुषवत्, अभिन्नस्यैकस्य जिनदत्तादेर्जन्यजनकाद्यनेकसम्बन्धापेक्षाः पित्रादिव्यपदेशाः प्रवर्तन्ते, न तु तस्मात् पुरुषवस्तुनोऽर्थान्तरभूतं पितृत्वं नामार्थो जात्यन्तरमस्ति पुरुषवृत्तिमात्रत्वात्, तथा द्रव्यमपि चक्षुर्ग्रहणादिविषयभूयमासादयद् रूपादिव्यपदेशमनेकमासादयति, अतोऽनर्थान्तरं रूपरसादयो द्रव्यादिति, कर्मापि विस्रसाप्रयोगसापेक्षो द्रव्यपरिणामस्तद्भावलक्षणो द्रव्यादव्यतिरिच्यमानो द्रव्यमेव, सामान्यविशेषयोरपि तद्ग्रहे तद्बुद्ध्यभावात् द्रव्यमात्रतैवेति, एवमेकमेव द्रव्यं शुद्धप्रकृतेर्द्रव्यार्थस्य। अविशुद्धद्रव्यार्थभेदनैगमस्त्वभिन्नद्रव्येण व्यवहाराभावाद् भेदनिबन्धनद्वित्वादिसङ्ख्याव्यवहारः सकललोकयात्राक्षमः सिद्ध्यतीति द्रव्ये वा द्रव्याणि वेत्याह, अन्यथैकसङ्ख्याऽपि न स्याद्, व्यवहारस्य वा शतभेदत्वात् कश्चिदंशः प्रतिपन्नदेशकालसङ्ख्याभेदः प्रतिमन्यते—द्रव्ये वा द्रव्याणि वेति विकल्पसम्भवः, सच्च त्रिविधमुत्पादादि, तच्च द्रव्येणार्प्यमाणमङ्गीकृतसङ्ख्याभेदमेवात्मलाभं प्रतिपद्यते—द्रव्यं

---

तस्य द्रव्यस्य। एकस्यैवापेक्षाभेदतोऽनेकरूपेण व्यवहरणमित्यत्रानुरूपं दृष्टान्तमाह—**पितृपुत्रेति**। दृष्टान्तमेवोपपादयति—**अभिन्नस्यैकस्येति**। **जन्यजनकादीति,** भावप्रधाननिर्देशाज्जन्यत्वजनकत्वादीत्यर्थः, आदिपदाज्जननीमातृजन्यत्वभगिनीजन्यत्वादे. परम्परासंबन्धस्य ग्रहः। **पुरुषवस्तुनो** जिनदत्तादेः। **पितृत्वमि**त्युपलक्षणं पुत्रत्वमातुलत्वादीनामपि। पितृत्वादिकं कुतो न जात्यन्तरमित्यपेक्षायामाह—**पुरुषवृत्तिमात्रत्वादिति**। दृष्टान्तोपदिष्टन्यायं दार्ष्टान्तिके योजयति—**तथेति**। **विषयभूयं** विषयत्वम्। कर्मणो द्रव्यादव्यतिरिक्तत्वमुपपादयति—**कर्मापीति**। **तद्भावलक्षणः,** द्रव्यस्य तद्रूपेण परिणमनस्वभावः। सामान्यविशेषयोरपि द्रव्याव्यतिरिक्तत्वमावेदयति—**सामान्यविशेषयोरपीति**। **तद्ग्रहे** द्रव्याग्रहे। **तद्बुद्ध्यभावा**दनुगतव्यावृत्तबुद्ध्यभावात्, अनुगतव्यावृत्तस्वभावतया द्रव्यमेव सामान्यविशेषगोचरबुद्धिविषय इति तद्भिन्ने तद्विषयत्वे नानाभाव इति हृदयम्। समवायश्च सम्बन्धो नाविष्वग्भावलक्षणसम्बन्धिस्वरूपाद्व्यतिरिच्यत इति गुणकर्मसामान्यविशेषाणां तत्सम्बन्धिनां द्रव्याव्यतिरिक्तत्वे तस्यापि तदव्यतिरिक्तत्वमर्थात्प्राप्तमेवेति न पृथगुक्तिः। संग्रहनयाभिप्रायेण **द्रव्यमि**त्येकवचनान्तमुक्तमिति। तन्निगमयति—**एवमेकमेवेति**। **शुद्धप्रकृतेः** पर्यायामिश्रितद्रव्याभ्युपगन्तुः। **द्रव्यार्थस्य** सङ्ग्रहनयस्य। इदानीं द्रव्ये वा द्रव्याणि वेति अर्थपदयोरुपपादको नैगमनय इत्यावेदयन्तो प्ररूपयति—**अविशुद्धेति,** अवान्तरसामान्याभ्युपगन्तृत्वेनाविशुद्धत्वं बोध्यम्। **द्रव्यार्थभेदः,** द्रव्यार्थिकनयविशेषः। **नैगमस्त्विति,** अस्येत्याहेत्यनेन सम्बन्धः। **अभिन्नद्रव्येण** महासामान्यसत्तामात्रेण। **व्यवहाराभावात्,** प्रवृत्तिनिवृत्त्यादिलक्षणव्यवहृतेरभावात्, एकस्यैवेष्टत्वानिष्टत्वादितत्साधनत्वादिरूपेण ग्रहणासंभवे तन्निबन्धनप्रवृत्त्यादेरप्यसम्भवादित्याशयः। **भेदनिबन्धनेत्यादि** निगदार्थम्। **अन्यथा** द्वित्वादिसङ्ख्यानभ्युपगमे सर्वस्यैव वस्तुनः प्रत्येकमेकत्वात्तादृशैकत्वमन्यावर्तकत्वान्न विशेषणभावमश्नुतीति सजातीयद्वितीयराहित्यलक्षणमेव तद्विशेषणतयोपादेयमिति एकत्वाभ्युपगमनान्तरीयक एवेत्याशयेनाह—**एकत्वसङ्ख्यापि न स्यादिति**। अथवा एकत्वमिति कस्यापि विशेषणमेवातस्तद्व्यतिरिक्तं विशेष्यमावश्यकम्, विशेष्यस्वरूपत्वे च द्रव्यं द्रव्यमिति एकं द्रव्यमित्यपि न स्यात्, विशेषणत्वान्यथानुपपत्त्या च व्यवच्छेद्यमपि किञ्चित्तृतीयमभ्युपेयमित्यभिप्रायकमिदमिति बोध्यम्। यदि च नैगमनयः सङ्ग्रहव्यवहाराभ्यामतिरिक्तो नास्त्येव, यतस्तस्य यः सामान्याभ्युपगमांशः स सङ्ग्रह एव, यश्च विशेषाभ्युपगमांशः स व्यवहार एव, ताभ्यां व्यतिरिक्तस्य कस्यचित्प्रकारस्याभावात्, निविक्तविषयाभावे विषयिणोऽपि विविक्तस्याभावादिति विभाव्यते तदा शुद्धप्रकृतिकद्रव्यार्थिकस्य सङ्ग्रहस्य द्रव्यमित्यर्थपदे निर्धारितेऽशुद्धप्रकृतिकद्रव्यार्थिकस्यैव व्यवहारस्य कश्चिदंशस्तादृशोऽस्ति यो मातृकापदास्तिकव्यतिरिक्तो द्रव्ये वा द्रव्याणि वेत्यभ्युपगच्छति किन्तो विशेषगवेषणयेत्याशयेनाह—**व्यवहारस्य वेति, कश्चिदंश** इत्यनेनान्वयः। एकस्य तस्य मातृकापदास्तिकतयैव निर्णीतत्वात्कथमेवमित्यत आह—**शतभेदत्वादिति,** बहुविधत्वादित्यर्थः। विशेषतो विशेषस्योपदर्शयितुमशक्यत्वादुक्तम्—**कश्चिदिति,** य एव नैगम इति अतिरिक्तनैगमनयाभ्युपगन्तृभिष्यते स एव तथाविधो व्यवहारांशोऽस्त्वित्यभिसन्धिः। न खलु स सर्वथा दुर्निरूपणत्वादश्रद्धेय इति विषयतस्तमवधारयति—**प्रतिपन्नेति**। **द्रव्ये वा द्रव्याणि वेतीति** देहलीदीपन्यायेन **प्रतिमन्यते** इति पूर्वेणाऽप्यन्वेति **विकल्पसम्भव** इत्यनेनापि। सच्चास्यसदित्यनेन किं ग्राह्यमित्यपेक्षा-

वा द्रव्ये वा द्रव्याणि वेति, न तु कदाचिद् वचनत्रयप्रतिपाद्यद्रव्यव्यतिरेकेणान्यत् किञ्चित् सदस्ति, यतो द्रव्यमित्यपदिष्टे सत् प्रतीयते, द्रव्ये इत्यपि सती, द्रव्याणि च सन्तीत्येवं व्यस्तेषु समस्तेषु च प्रतीयते द्रव्येष्वेव सत्, द्रव्यमात्रे नियतवृत्तित्वात्, द्रव्यव्यतिरिक्तपदार्थाभावाच्चान्यत्र नोपलभ्यते, यदि स्याददद्रव्यं किञ्चिद् गुणः कर्मादि वा तत्राप्याशङ्केत सतो वृत्तिः, तत् तु नैवास्तीत्ययमर्थोऽनेन भाष्यवचनेन प्रत्याय्यते—**असन्नाम नास्ति,** असदिति यस्य नाम संज्ञिनस्तत्संज्ञिरूपमसन्नामकं नास्ति, संज्ञिरूपाभावाद् वा संज्ञा नास्ति, परस्परापेक्षत्वात् संज्ञासंज्ञिनोः, एवं चासच्छब्देन गुणाद्यभाव एवोच्यते, स च गुणाद्यभावो द्रव्यमात्रमेव, **द्रव्यास्तिकस्ये**त्युक्तेन प्रकारेण द्रव्यार्थिकस्यार्थपदभावना । अन्ये भाष्यमेवं पठन्ति—**असन्नाम नास्त्येव** सावधारणोऽसतः प्रतिषेधः, सर्वं द्रव्यमिति सञ्जिघृक्षतो द्रव्यास्तिकस्य हि मातृकापदास्तिकाद्यपि सर्वमन्तर्वसतीति, तस्मात् सदित्युक्ते एषामेकत्वद्वित्वबहुत्वानामन्यतमोक्तौ तदवरोधः सन्मात्रत्वादिति । एवं सङ्ग्रहनयेन स्वाभिप्राये द्रव्यास्तिकमात्रतया प्रकाशिते व्यवहारनयः स्वाभिप्रायमाविष्करोति मातृकापदास्तिकोपन्यासेन—

---

यामाह—**सच्च त्रिविधमुत्पादादीति** । **तच्चो**त्पादादित्रयञ्च । उत्पादव्ययावेकीकृत्यैक ध्रौव्यञ्चैकमिति कृत्वा **द्रव्ये** इति, उत्पादश्चैको व्ययश्चैको ध्रौव्यं चैकमिति कृत्वा **द्रव्याणीति,** समुदितस्यैवैक्यं विवक्षित्वा **द्रव्यमिति** । तथा चैवंभूतद्रव्यार्थिकनयार्पणया त्रीण्यप्यर्थपदानि सिद्ध्यन्तीत्याह—**द्रव्येणेति** । वचनत्रयप्रतिपाद्यद्रव्यतिरेकेण सन्नास्तीत्यत्र हेतुमाह—**यत इति** । **अपदिष्टे** प्रयुज्यमाने । **द्रव्ये इत्यपीति,** अपदिष्टे इत्यस्यानुकर्षः । **सती** प्रतीयेते इति वचनविपरिणामेनाग्रेतनस्य **प्रतीयते** इत्यस्य सम्बन्धः । **द्रव्याणि चेति,** चकारादपदिष्ट इत्यस्यानुकर्षः । **सन्तीत्येवमिति,** सन्तीत्येवंरूपेणेत्यर्थः । **द्रव्येष्वेव सत्, प्रतीयते** इत्यनेन सम्बन्धः । द्रव्येषु कथम्भूतेष्वित्यपेक्षायामाह—**व्यस्तेषु समस्तेषु चेति,** व्यस्तेषु द्रव्येषु उत्पादव्ययोरैक्यं द्रव्यस्य चैक्यमि विवक्षायांति **द्रव्ये** इति, त्रयाणा प्रत्येकमैक्यविवक्षायां बहुरूपत्वसम्पत्तौ **द्रव्याणी**ति, समस्तेषूत्पादव्ययध्रौव्येषु एकद्रव्यत्वविवक्षाया **द्रव्यमि**तीति विवेकः । द्रव्येष्वेव सत्प्रतीतौ हेतुमाह—**द्रव्यमात्रे नियतवृत्तित्वादिति,** यच्च द्रव्यं तत्रैव सत्त्वस्य वृत्तित्वात्, यच्च यत्र वर्त्तते तत्रैव तस्यैवोपलम्भः प्रमा, अन्यत्र तस्य प्रतीतिर्भ्रान्तिरेव न वस्तुसाधिकेत्याशयः । ननु द्रव्यनियतवृत्तित्वाद्द्रव्येष्वेव सदिति प्रतीयते इति तदा स्याद्यदि द्रव्यव्यतिरिक्ते तत्प्रतीतिर्न स्यात्तत्रैव तु किम्मानमित्यत आह—**द्रव्यव्यतिरिक्तेति** । एतदेवोपपादयन्नाह—**यदि स्यादिति** । अयं च ग्रन्थोऽसन्नाम **नास्तीति** भाष्यस्यावतरणरूप इत्यावेदयितुमाह—**अयमर्थ** इति । **असन्नाम नास्तीति** भाष्यं व्याचष्टे—**असदितीति** । यदि किमपि वस्तु असच्छब्दवाच्यं नास्ति नाप्यसच्छब्दः कस्यापि संज्ञा, तर्हि तस्य प्रयोगोऽपि दुर्घट इत्यत आह—**एवं चेति,** द्रव्यव्यतिरिक्तस्य कस्यचिद्वस्तुनोऽसंज्ञकस्याभावे तादृशवस्तुवाचकतयाऽसदिति शब्दस्य संज्ञात्वाभावे चेत्यर्थः । ननु गुणाद्यभाव एव द्रव्यव्यतिरिक्तो वस्तुभूतोऽसदिति नाम्नः सञ्ज्ञी सन्नृत्तस्तस्य संज्ञाऽसदिति **असन्नाम नास्ती**ति भाष्यमसङ्गतमापतितमित्यत आह—**स चेति** । तथा च द्रव्यव्यतिरिक्तमसन्नाम **नास्तीति** युक्तमेवेति । इयं चार्थपदभावना कस्य नयस्येत्यपेक्षायां **द्रव्यास्तिकस्ये**ति भाष्यमित्याह—**द्रव्यास्तिकस्येत्युक्तेनेति** । **नास्ती**त्यत्र सावधारणपाठं केचिन्मन्यन्ते तदुपदर्शयति—**अन्ये इति** । द्रव्यास्तिकाभिप्रायमुपवर्णयन्ति—**सर्वमिति** । **संजिघृक्षतः,** द्रव्यत्वेन रूपेण सर्वं सङ्गृह्णतः । **द्रव्यास्तिकस्ये**त्यनन्तरं मते इति शेषः । **मातृकापदास्तिकाद्यपीति,** आदिपदादुत्पन्नास्तिकपर्यायास्तिकयोरपि ग्रहः । **सर्वमन्तर्वसति,** सर्वान्तर्गतमेव । तेन तेषामपि **द्रव्यं द्रव्ये द्रव्याणि** चेत्युक्तावुपक्षेपो भवत्येवेत्याह—**तस्मादिति,** सद्वचनद्रव्यवचनयोः पर्यायत्वे सदित्युक्ते **द्रव्यं द्रव्ये द्रव्याणी**ति वचनान्यतमाभिधानं प्राप्तमेव, ततश्च सर्वपदार्थसङ्ग्रहणम् । असन्नाम नास्त्येव येन तदसङ्ग्रहः सम्भाव्येतापीत्याह—**सदित्युक्त इति,** सदित्युक्ते एषा **द्रव्यं द्रव्ये द्रव्याणी**त्यन्यतमाना**मवरोधः** सत्त्वेन सङ्ग्रहणम्, **द्रव्यं द्रव्ये द्रव्याणी**त्यन्यतमोक्तौ च सतो**ऽवरोधो** द्रव्यत्वेन सर्वेषां सतां सङ्ग्रहणम्, सन्मात्रस्य द्रव्यत्वादसतश्चाभावादित्यर्थः । **मातृकापदास्तिकस्यापी**त्युत्तरभाष्यमवतारयति—**एवं सङ्ग्रहनयेनेति** । **उद्देशमात्रं** सामान्यतो नाम्ना सङ्कीर्त्तनम् । व्यवहारनयवक्त-

[भाष्यम्–] **मातृकापदास्तिकस्यापि मातृकापदं वा मातृकापदे वा मातृकापदानि वा सत् । अमातृकापदं वा अमातृकापदे वा अमातृकापदानि वाऽसत् ।**

**मातृकापदास्तिकस्यापीत्यादि** । धर्मास्तिकायादीनामुद्देशमात्रं मातृकापदास्तिकलक्षणम्, एवं मन्यते व्यवहारः—न द्रव्यमात्रमभेदं सत् संज्ञास्वालक्षण्यादिशून्यं व्यवहर्तॄणां लौकिकपरीक्षकाणां धियं धिनोति, व्यवहारार्थश्च वस्त्वभ्युपगमः, स च भेदेन प्रायः साध्यते, त्वयाऽपि च भेद एष प्रदर्शितो द्रव्यं वा द्रव्ये वा द्रव्याणि वेति, एकस्मिन्नर्थे एकवचनं द्वयोरर्थयोर्द्विवचनं बहुष्वर्थेषु च बहुवचनमित्येवं सतो भेदिका सङ्ख्या, न च द्रव्यसतोर्भेदस्ते द्रव्यमेव सत्सदेव द्रव्यम्, यच्चैकसङ्ख्यावच्छिन्नं सत् तत्र द्वित्वादिसङ्ख्ययाऽऽश्रयितुं शक्यम्, न ह्येको द्वौ, द्वौ वा एक इत्येवं लोकव्यवहारप्रवणेन भेदोऽभ्युपेयः, किं तद् द्रव्यं ? धर्माधर्माकाशपुद्गलजीवभेदं गतिस्थित्यवगाहशरीरादिपरस्परोपग्रहणाद्युपकारि, संज्ञास्वलक्षणादिविविक्तं संव्यवहारआपणप्रत्यलं भवति ?, निर्भेदं पुनर्वस्तु न काञ्चिद् व्यवहारमात्रामभिमुखीकरोति, भेदप्रधानतायां तु धर्मादीनामन्यतमैकविवक्षायां सत् मातृकापदम्, द्वित्वविवक्षायां सती मातृकापदे, त्रित्वादिविवक्षायां सन्ति मातृकापदानीति प्रतिविशिष्टव्यवहारप्रसिद्धिः, अतो धर्मादयः परस्परव्यावृत्तसत्त्वस्वभावार्पणयैव सन्ति, नान्यथा । धर्मास्तिकायस्वलक्षणं य(त् त)न्न जातुचिदधर्मास्तिकायलक्षणं भवति, अतो यदस्ति तन्मातृकापदं वेत्यादिना विकल्पत्रयेण सङ्गृहीतं

---

व्यतामाविष्करोति–**एवं मन्यत** इत्यादिना । **न द्रव्यमात्रमिति, धियं धिनोती**त्यनेन सम्बन्धः, बुद्धिमादधातीति, बुद्धिविषयो भवतीति यावत् । द्रव्यमात्रस्य सत्त्वे विभिन्नप्रवृत्तिनिमित्तिका संज्ञाप्यर्थभेदभिन्ना नास्ति, स्वलक्षणस्य भावः स्वालक्षण्यं स्वसाधारणधर्मः प्रवर्त्तकनिवर्त्तकतावच्छेदको नास्ति, तथा च लोकयात्राविलोप एवैतन्मत इत्याह–**व्यवहारार्थश्चेति** । स च व्यवहारश्च । **त्वयापि** द्रव्यास्तिकनयाभ्युपगन्त्राऽपि । **इत्येवम्** अमुना प्रकारेण । **सतो भेदिकेति,** एकत्वमेकस्मिन् वर्त्तते द्वित्वञ्च नैकस्मिन् किन्तु द्वयोरेव, बहुत्वं च बहुष्वेव नैकस्मिन्द्वयोर्वेति सतो भेदो यदि न स्यात्तदा धर्मिण उभयस्वरूपस्य बहुस्वरूपस्याभावाद्धर्मस्वरूपा द्वित्वादिसङ्ख्या कुत्र वर्त्तेतेति तदन्यथानुपपत्त्या सतो भेद आवश्यक इति । ननु सदेवैकं द्रव्यं तु नानाऽतो द्रव्ये द्रव्याणीति विकल्पोपपत्तिरित्यत आह–**न च द्रव्यसतोर्भेदस्ते इति** । **ते** शुद्धद्रव्यास्तिकाभ्युपगन्तुः, द्रव्यसतोर्द्धर्मिणोर्भेदो नास्त्येवेत्यर्थः । तत्र हेतुः–**द्रव्यमेव सत्सदेव द्रव्यमिति, द्रव्यमेव** सदित्यनेन द्रव्यव्यतिरिक्तस्य सत्त्वव्यवच्छेदः, **सदेव द्रव्यमि**त्यनेन सद्व्यतिरिक्तस्य द्रव्यत्वव्यवच्छेदः, तथा च सत्त्वद्रव्यत्वयोः समनियतत्वे सत एकत्वे द्रव्यमप्येकमेव स्यात्तथा चैकवचनमेव स्यान्न द्विवचनबहुवचने इति । एकस्मिन्द्रव्ये सति द्वित्वबहुत्वयोरपि पर्याप्तिरस्तु को दोष इत्यत आह–**यच्चैकसङ्ख्येति** । एकत्वावच्छिन्ने द्वित्वाद्यवृत्तौ तथाप्रतीत्यभाव एव प्रमाणमित्याह–**नह्येक इति** । तस्माल्लोकयात्रानिर्वहणाय भेदोऽभ्युपेय इत्याह–**एवमिति** । भेदः कथमभ्युपेय इति पृच्छति–**किन्तद्द्रव्यमिति** । उत्तरयति–**धर्माधर्मेति,** अनेन पञ्चसङ्ख्यापरिच्छिन्नद्रव्यभेदस्वरूपप्ररूपणम् । किमर्थमेतावतामभ्युपगम इत्यपेक्षायामाह–**गतीत्यादि,** गत्युपकारो धर्मस्य स्थित्युपकारोऽधर्मस्यावगाहोपकार आकाशस्य शरीराद्युपकारः पुद्गलस्य परस्परोपग्रहणं जीवस्य प्रयोजनम् । **धर्माधर्मे**त्यादिना द्रव्यभेदानां संज्ञा विविक्ता गतिस्थित्यादिना विविक्तं लक्षणमतस्ते विभिन्नस्वभावभाज इत्याशयेनाह–**संज्ञास्वलक्षणादिविविक्तमिति,** आदिपदात्प्रत्ययोपग्रहः । एतादृशभेदभाजनमेव द्रव्यं लोकयात्राक्षममित्याह–**संव्यवहारेति** । संग्रहाभिमतस्य तु द्रव्यस्य न लोकयात्राक्षमत्वमित्याह–**निर्भेदमिति** । इदानीं **मातृकापदास्तिकस्यापी**त्यादिभाष्यानुगमनायाह–**भेदप्रधानतायां त्विति** । **अत इति,** यतो भेदमुपादायैव प्रतिविशिष्टव्यवहारप्रसिद्धिस्तस्मादित्यर्थः । एवकारव्यवच्छेद्यमाह–**नान्यथेति,** परस्परव्यावृत्तस्वभावार्पणे तु न सन्ति धर्मादय इत्यर्थः । यतो धर्मादीनां पञ्चानामन्योन्यासङ्क्रमस्वरूपेण व्यवस्थितिरतो मातृकापदानां तेषां सत्त्वमुपादाय मातृकापदमित्यादिविकल्पोपपत्तिरित्याह–**धर्मास्तिकायस्वलक्षणमिति** । कथं धर्मादिपञ्चकं मातृकापदवाच्य-

धर्मादि पञ्चविधम्, सकलभेदजालप्रसूतिहेतुत्वान्मातृकापदं मातृकास्थानीयमुच्यते धर्मादि, नातोऽन्यदस्तीति, अमातृकापदं वेत्यादिना तामेव परस्परव्यावृत्तिमभिव्यनक्ति, यदि धर्मादिपञ्चकव्यतिरेकि किञ्चिद् भवेत् ततस्तत्रामातृकापदं वेत्यादिव्यपदेशो युज्येत, संज्ञास्वालक्षण्याद्यभावात् तच्चासत्, तस्मात् धर्म एवाधर्मलक्षणाद् व्यावर्तमानस्तेनाधर्मस्वलक्षणरूपेणासन्नित्युच्यते । एवं शेषेष्वपि भावना विधेया ॥

सर्वसद्गतिविशेषाणां प्रसवहेतुत्वाद् धर्मास्तिकायो मातृकापदम्, स एव च सर्वसत्स्थितिविशेषप्रसवव्यावृत्त्यपेक्षया अमातृकापदम्, एवं द्विवचनबहुवचने विभावनीये । तस्मान्न द्रव्यास्तिकादि किञ्चिन्मातृकापदव्यतिरेकि विद्यते, स्वभावासंक्रान्त्या तु परस्परापोहभावतः पदार्थव्यवस्थानम्, स चापोहः सल्लक्षणव्यवच्छेदेनैको यथा-प्रमाणं प्रमेयं च सद्, यन्न प्रमाणं न प्रमेयं तदसदेव, अपरो धर्म्यन्तरस्य धर्म्यन्तरोत्पन्नवैशिष्ट्येनापोहः, तद्यथा-जीवोऽजीवो न भवत्यश्वो गौर्न भवतीति, तथाऽनपोहश्चेतनाचेतनयोर्द्रव्यादेशात्, परस्परापोहे च द्रव्यादेशात् सर्वेषां धर्मादीनामनपोह इत्येवं

---

मित्यपेक्षायामाह-**सकलभेदेति** । यथा सकलवर्णपदवाक्यप्रकरणग्रन्थादिप्रपञ्चमूलत्वादकारादिहकारान्ताक्षरमाला मातृकेति व्यपदिश्यते तथा धर्मादिपञ्चकमपि सकलभेदजालप्रसूतिहेतुत्वान्मातृकापदमित्युच्यते । मातृकापदमित्यस्य **मातृकास्थानीयमिति** विवरणम् । सत्त्वं धर्मादिपञ्चकान्यतमत्वव्याप्यमित्यावेदयितुमाह-**नातोऽन्यदस्तीति**, अतो धर्मादिपञ्चकादन्यद्भिन्नं नास्ति न सदित्यर्थः । धर्मादिपञ्चकादन्यस्यासत्त्वव्याख्यापनपरमेव **अमातृकापदं वे**त्यादि भाष्यमित्याह-**अमातृकापदं वेत्यादिनेति**, धर्मास्तिकाय एव अधर्मास्तिकायरूपमातृकापदस्वलक्षणव्यावृत्तत्वादमातृकापदम्, एवमधर्मास्तिकाय एव धर्मास्तिकायरूपमातृकापदस्वलक्षणव्यावृत्तत्वादमातृकापदम्, एवमाकाशास्तिकायादिष्वपि योज्यम्, धर्मास्तिकाय एव च अधर्मास्तिकायस्वलक्षणव्यावृत्तत्वात्तद्रूपेणासदित्युच्यत इत्याद्यपि बोध्यम् । धर्मास्तिकायादिभ्यो व्यतिरिक्तमेव किञ्चिदमातृकापदव्यपदेश्यमसत्पदवाच्यं च किन्न स्यादित्याशङ्कायामाह-**यदीत्यादि** । **ततः**, तदा । **तत्र** धर्मादिपञ्चकव्यतिरिक्ते । धर्मादिपञ्चकव्यतिरिक्तस्य तु नास्ति काचिदखण्डनामरूपा सञ्ज्ञा नापि तस्य किञ्चिदसाधारणं लक्षणमतस्तत्र व्यपदेशकरणोपायाभावादमातृकापदव्यपदेशोऽसम्भव इत्याह-**संज्ञेत्यादि** । तर्हि अमातृकापदमित्यनेन किमुच्यते ? किञ्च तथाऽसदित्युच्यते ? इत्यपेक्षायामाह-**तस्मादिति** । उक्तन्यायमन्यत्राप्यतिदिशति-**एवमिति**, उक्तप्रकारेणेत्यर्थः, अस्य भावनेत्यनेनान्वयः । **शेषेष्वपि**, अधर्मादिष्वपि । धर्मे मातृकापदामातृकापदव्यपदेशावुपपादयति-**सर्वसद्गतिविशेषाणामिति** । **स एव च** धर्मास्तिकाय एव पुनः । पञ्चानां मध्ये स्वलक्षणवत्तया द्वयोर्विवक्षाया मातृकापदे इति विकल्पः, त्रयाणां चतुर्णां पञ्चानां च स्वलक्षणवत्तया विवक्षाया मातृकापदानीति विकल्पः, एवं द्वयोरन्यव्यावृत्तत्वेन विवक्षायाममातृकापदे इति, त्रयाणां चतुर्णां पञ्चानां वा परस्परव्यावृत्तया विवक्षायाममातृकापदानीति विकल्प इत्याह-**एवमिति** । भेदव्यवस्थितौ च निर्भिन्नं द्रव्यं नास्त्येवेत्याह-**तस्मादिति** । **द्रव्यास्तिकादीति**, आदिपदादुत्पन्नास्तिकपर्यायास्तिकयोरुपग्रहः, एतन्मते तयोरपि मातृकापद एवान्तर्भावादिति बोध्यम् । धर्मास्तिकायादीनामपोहानपोहरूपताव्यवस्थापनपूर्वकं तद्रूपाणां मातृकापदास्तिकत्वमुपपादयति-**स्वभावासङ्क्रान्त्या त्विति**, स्वभावसङ्क्रान्तौ तु विरुद्धधर्माध्यासो भेदहेतुरेव ततो व्यावर्तेत, ततश्च परस्परापोहभावोऽपि दुर्घट इति पदार्थव्यवस्थापनमसमञ्जसं स्यादित्यभिसन्धिः । अपोहस्यानुगतत्वाननुगतत्वाभ्यां द्विप्रकारतां मनसि निधाय तत्रानुगतमपोहम्प्रथममुपदिशति-**स चापोह इति** । **सल्लक्षणव्यवच्छेदेनेति**, सल्लक्षणस्यान्यतो यो व्यवच्छेदस्तेनेत्यर्थः । **एकः** सर्वानुगतः । तमुदाहरति-**यथेति** । अत्र प्रमाणप्रमेययोरुभयोरप्येकेनैवासद्व्यावृत्तिस्वरूपसत्त्वलक्षणापोहेन सङ्ग्रहः । **अपरः**, अननुगतः । **धर्म्यन्तरोत्पन्नवैशिष्ट्येनेत्य**त्र धर्म्यन्तरात्यन्तवैशिष्टेनेति पाठो युक्तः । अस्योदाहरणमाह-**तद्यथेति**, धर्मादीना परस्परभेदव्यवस्थापनायापोहक्लृप्तावपि द्रव्याणि पञ्चेति व्यवहारोपपादनाय द्रव्यत्वमपि तत्रोररीकार्यम्, तच्च धर्मादिसकलसाधारणत्वादनपोह इत्याह-**तथानपोह इति** । एतदेवोपपादयति-**परस्परापोहे चेति**, स्वस्वासाधारणधर्मलक्षणभेदादन्योन्यं व्यावृत्तत्वे सतीत्यर्थः । **द्रव्यादेशात्** द्रव्यनयेन सर्वानुगतस्य द्रव्यरूपसामान्यांशस्य विवक्षातः । **अनपोहः**, द्रव्यत्वेन सर्वेषामव्यावृत्तत्वमैक्यमिति यावत् । **एवम्** उक्तप्रकारेण । **सामा-**

सामान्यविशेषानेकधर्मत्वाद् धर्मादयोऽपोहानपोहरूपाः सर्वे मातृकापदास्तिकम्, एवं द्रव्यार्थनयाभिप्रायो द्रव्यास्तिकमातृकापदास्तिकाभ्यामाख्यातः । पर्यायार्थनयावसरे त्विदमुच्यते—

[भाष्यम्—] **उत्पन्नास्तिकस्य उत्पन्नं वा उत्पन्ने वा उत्पन्नानि वा सत् । अनुत्पन्नं वाऽनुत्पन्ने वाऽनुत्पन्नानि वाऽसत् ॥**

**उत्पन्नास्तिकस्ये**त्यादि । पर्यायार्थस्य मूलमृजुसूत्रः, स च प्रत्युत्पन्नं वर्तमानलक्षणमात्रं सर्वमेव धर्मादिद्रव्यं प्रतिजानीते, क्षणं क्षणं प्रत्युत्पन्नं पूर्वपूर्वक्षणविलक्षणम्, इदमेव च सतो लक्षणं—यदुत्पद्यते प्रतिक्षणम्, उत्पादो हि वस्तुनो लक्षणम्, अनुत्पादाश्च व्योमोत्पलादयो न कथञ्चिल्लक्ष्यन्ते, तत्रात्मनां तावत् प्रतिक्षणमपरापरज्ञानदर्शनक्रियाद्युत्पादो लक्षणम्, पुद्गला वर्ण-गन्ध-रस-स्पर्श-शब्द-संस्थान-तम-श्छायाद्युत्पादलक्षणाः, धर्माधर्माकाशास्तु गन्तृस्थात्रवगाहमानगतिस्थित्यवगाहाकारोत्पादतः, प्रतिक्षणमन्ये चान्ये च भवन्तीति, एषां च वर्तमानक्षण एव सत्त्वः, तस्मादेकमभिन्नं सकलभेदहेतुर्मातृकापदं नाम किञ्चिन्नास्ति व्यवहारनयपुरस्कृतम् । अपि च—व्यवहारोऽपि लौकिकः प्रत्युत्पन्नक्षणसाध्य एव, सतोऽर्थक्रियासामर्थ्यात्, स च वर्तमानक्षणः, क्रान्तानागतक्षणयोरसत्त्वान्नार्थक्रियासामर्थ्यं सम्भाव्यते, तस्मादुत्पन्न एवास्ति क्षणः, तस्मिंश्च नान्वयि किञ्चिद् द्रव्यत्वादि विद्यते, ततश्च भूतान्वेषिणो न द्रव्यास्तिकं न मातृकापदास्तिकं किञ्चिदस्ति, उत्पन्नास्तिकमेव तु सत् सन्तत्या द्रव्यं वा धर्मादि वाऽभिधीयते, न भूततस्तदस्ति, सन्तानस्य सांवृतत्वात्, ते च वर्तमानक्षणा भूयांसः, तत्रैक-

---

**न्यविशेषानेकधर्मत्वादिति**, द्रव्यत्वादि सामान्यं धर्मत्वादिर्विशेषस्तद्रूपानेकधर्मवत्त्वादित्यर्थः । **अपोहानपोहरूपा इति**, विशेषात्मनाऽपोहरूपाः सामान्यात्मनाऽनपोहरूपा इत्यर्थः । द्रव्यनयेनार्पितसिद्धिनिरूपणमुपसंहरति—**एवमिति** । एवमित्यस्यैव विशिष्यार्थावेदनम्—**द्रव्यास्तिकमातृकापदास्तिकाभ्यामिति** । उत्पन्नास्तिकस्येत्याद्युत्तरभाष्यमवतारयति—**पर्यायार्थनयावसर इति**, अवसरसङ्गतिरनेनावेदिता । **पर्यायार्थस्य** पर्यायार्थिकनयस्य ऋजुसूत्रशब्दसमभिरूढैवम्भूतनयचतुष्टयस्य । **मूलं** प्रधानम्, ऋजुसूत्रनयविषयं वर्त्तमानक्षणमुपादायैव सर्वेषां पर्यायार्थिकनयानां प्रवृत्तेरित्याशयः । ऋजुसूत्रनयवक्तव्यमाविष्करोति—**स चे**त्यादिना, स च ऋजुसूत्रश्च, अस्य **प्रतिजानीते** इत्यनेन सम्बन्धः । **वर्त्तमानलक्षणमात्रमि**त्यत्र वर्त्तमानक्षणमात्रमिति पाठो युक्तः, **प्रत्युत्पन्नमि**त्यस्य वर्त्तमानक्षणमात्रमिति स्वरूपं व्याघर्णितं तदेव स्पष्टयति—**क्षणं क्षणमिति** । **इदमेवेति**, प्रतिक्षणं यदुत्पद्यते इदमेव च सतो लक्षणमित्यन्वयः, प्रतिक्षणमित्यस्य देहलीदीपन्यायेन पूर्वोत्तरान्वयित्वं बोध्यम् । प्रतिक्षणमुत्पादस्य सल्लक्षणत्वं व्यवस्थापयति—**प्रतिक्षणमुत्पादो हीति**, आत्मनो यत्सत्त्वोपपत्तये तल्लक्षणमुत्पादस्वरूपं तत्र सङ्गमयति—**तत्रात्मनामिति** । पुद्गलेषु तत्सङ्गमयति—**पुद्गलास्त्विति** । धर्माधर्माकाशानां तदुपपादयति—**धर्माधर्माकाशास्त्विति** । **एषां** जीवादीनाम् । विषयाभावान्मातृकापदं न युक्तिपथमुपैतीत्याह—**तस्मादेकमभिन्नमिति**, जीवपर्यायेष्वनुगतं जीवद्रव्यं मातृकापदम्, एवं पुद्गलादिपर्यायेष्वनुगतं पुद्गलादिद्रव्यं मातृकापदं सकलस्वस्वपर्यायकलापहेतुभूतं व्यवहारनयाकलितं नास्तीत्यर्थः । ननु व्यवहारनयापवादे तन्मूलिका सा लोकव्यवस्था स्यादित्यत आह—**अपि चेति** । **प्रत्युत्पन्नेति**, वर्त्तमानेत्यर्थः । लौकिकव्यवहारस्य वर्त्तमानक्षणसाध्यत्वोपपादनमाह—**सत इति** । **क्रान्तेति**, अतीतेत्यर्थः । **तस्मादिति**, यतः प्रत्युत्पन्नक्षणसाध्य एव सकललोकव्यापकत्वो लौकिको व्यवहारस्तस्मादित्यर्थः । **तस्मिन्** प्रत्युत्पन्नक्षणे । **भूतान्वेषिणो** यथार्थवस्तुतत्त्वगवेषणपरायणस्य । **द्रव्यास्तिकं** सङ्ग्रहनैगमनयविषयः । **मातृकापदास्तिकं** व्यवहारनयविषयः । तर्हि द्रव्यमिति किमुच्यते ? धर्मादिपदेन वा किमभिधीयते ? इत्यपेक्षायामाह—**उत्पन्नास्तिकमेव त्विति** । **सन्तत्या** सन्तानस्वरूपतया । **भूततः** परमार्थतः । न तदस्ति द्रव्यं वा धर्मादि वा नास्तीत्यर्थः । अत्र हेतुः—**संतानस्य सांवृतत्वादिति**, सन्तानात्मनाऽभ्युपगम्यमानस्य

क्षणविवक्षायामुत्पन्नास्तिकं सदिति विकल्पः द्वित्वविवक्षायामुत्पन्नास्तिके वा सती, त्रित्वादिविवक्षायामुत्पन्नास्तिकानि वेति यत् तत् सदेवं विवक्षया नियम्यते सङ्ख्याभेदेन व्यवहारार्थम् । यच्च परेण द्रव्यास्तिकं मातृकापदास्तिकं वाऽभ्युपेतं तदुत्पन्नमनुत्पन्नं वा स्यात् ?, यदि पूर्वः कल्पः, अस्मत्समीहितसिद्धिः, अथोत्तरस्ततोऽसदेव द्रव्यास्तिकादि, कथञ्चिदप्युत्पादनेनायोगादत आह–**अनुत्पन्नं वाऽनुत्पन्ने वाऽनुत्पन्नानि वा सर्वमसत्** स्वलक्षणस्योत्पादस्याभावादिति । एवमुक्तेन प्रकारेण धर्मादि द्रव्यं स्यात् सत् स्यादसत् स्यान्नित्यं स्यादनित्यमिति प्रतिपाद्यत्वेन सूचितम्, अधुना विपञ्च्यते–तत्र द्रव्यार्थनयप्रधानतायां पर्यायनयगुणभावे च प्रथमविकल्पः, प्राधान्यं शब्देन विवक्षितत्वाच्छब्दाधीनम्, शब्दानुपात्तस्यार्थतो गम्यमानस्याप्रधानता १ । पर्यायनयप्रधानतायां द्रव्यनयगुणभावे च द्वितीयः २ । **अर्पितेऽनुपनीते न वाच्यं सदित्यसदिति** वेत्यनेन भाष्यवचनेन तृतीय-

---

द्रव्यादेः कल्पितत्वादित्यर्थः । उत्पन्नास्तिकं सत् उत्पन्नास्तिके सती उत्पन्नास्तिकानि सन्तीति विकल्पत्रयोपपादनायाह–**ते चेति । तत्र** भूयस्सु वर्त्तमानक्षणेषु । एकक्षणादिविवक्षाप्रयोजनमाह–**यत्तत्सदेवमिति** । द्रव्यास्तिकमातृकापदास्तिकयोरुत्पन्नास्तिकस्वरूपत्व एव सत्त्वमन्यथा त्वसत्त्वमेवेत्याह–**यच्चेति, अभ्युपेतमि**त्यनेनान्वयि । **परेण** द्रव्यार्थिकनयाभ्युपगन्त्रा । **पूर्वः कल्पः,** द्रव्यास्तिकमातृकापदास्तिकयोरुत्पन्नस्वरूपत्वपक्षः । **अस्मत्समीहितसिद्धिः** पर्यायार्थिकनयाभ्युपगन्तृमतस्योत्पन्नास्तिकं सदिति पक्षस्य सिद्धिः । **उत्तर इति,** द्रव्यास्तिकं मातृकापदास्तिकमनुत्पन्नमिति पक्षः । असत्त्वे हेतुः–**कथञ्चिदप्युत्पादेनायोगादिति,** उत्पादेन सह कथञ्चिदपि सम्बन्धाभावादित्यर्थः । **अत आहेति,** अस्य स्थाने इत्याहेति पाठो युक्तः । सप्तभङ्गीप्रसिद्धिमूलभङ्गद्वयसूचनमनेन कृतमित्याह–**एवमिति** । प्रथमद्वितीयभङ्गयोरुपपादनायाह–**अधुनेति । विपञ्च्यते** विविच्य प्रपञ्चत उपदर्श्यते । **प्रथमविकल्पः,** स्यात्सदिति स्यान्नित्यमिति च भङ्गः । सत्त्वासत्त्वादीनां सर्वेषामेव धर्मादिषु भावात्कथमेकस्य प्राधान्यमित्यपेक्षायामाह–**प्राधान्यमिति,** तथा च शब्दोपात्तत्वमेव प्राधान्यमित्यर्थ. । एवञ्च शब्दानुपात्तस्य धर्मान्तरस्यार्थतो गम्यमानत्वमेवाप्राधान्यमित्याह–**शब्दानुपात्तस्येति** । द्रव्यार्थपर्यायार्थनयप्रधानगुणभावाभ्यां प्रथमभङ्गमुपपाद्य पर्यायार्थद्रव्यार्थनयप्रधानगुणभावाभ्या द्वितीयभङ्गमुपपादयति–**पर्यायनयप्रधानतायामिति । द्वितीय इति,** स्यादसदिति स्यादनित्यमिति च भङ्ग इत्यर्थः । ननु भङ्गद्वयमात्रप्रतिपादने सप्तभङ्गीस्वरूपं न सिद्ध्यति सप्तधर्मप्रतिपादनत एव तस्या निष्पत्तेरतो न्यूनत्वमपरिहार्यमतस्तृतीयभङ्गप्रतिपादकमुत्तरभाष्यमनुसन्धाय वृत्तिकृदाह–**अर्पित इति,** स्यादवक्तव्यमिति तृतीयविकल्पो वक्ष्यत इत्येवमन्वयः । भङ्गत्रयसिद्धौ च धर्मद्वयधर्मत्रयसंयोजनोपनिपातिधर्मान्तरप्रसिद्धिसौकर्यादग्रिमभङ्गचतुष्टयसंसिद्धिरयत्नोपनतेति परिपूर्णैव सप्तभङ्गीति न न्यूनत्वमिति भावः, । कालात्मरूपार्थसम्बन्धोपकारगुणिदेशसंसर्गशब्दै. द्रव्यार्थादेशेन गुणानामनन्तानामप्येकवस्तुगतानामभेदवृत्तिप्राधान्यात्पर्यायार्थादेशेनाभेदोपचाराद्वैकधर्मप्रतिपादनमुखेन सकलधर्मप्रतिपादनतस्तदात्मकवस्तुप्रतिपादकत्वेन प्रत्येकं सप्तानामपि भङ्गानां सकलादेशत्वम्, तथा तैरेव कालादिभिरष्टभिः पर्यायार्थादेशेन भेदवृत्तिप्राधान्याद्द्रव्यार्थादेशेन च भेदोपचाराद्वा सप्तभिरपि भङ्गै. प्रत्येकमेकैकस्यैव धर्मस्य प्रतिपादनतो वस्तुभागस्यैव प्रतिपादकत्वं न वस्तुन इति विकलादेशत्वमत. स्सकलादेशस्वभावस्वात्सप्तभङ्गीप्रतिभङ्गापेक्षया प्रमाणवाक्यं विकलादेशस्वभावत्वान्नयवाक्यमिति परे परिकीर्तयन्ति, **देवसूरयो**ऽपि तथैवाभ्युपगच्छन्ति, तेषामयमाशय.–अस्तित्वादिविशिष्टमवक्तव्यत्वादिकमप्यर्थान्तरमेव, न तु विशेषणस्वरूपपरिकलितं विशेष्यस्वरूपमात्रं तथा सति विशेषणविशेष्यभावव्यत्यासेन सप्ताधिकधर्मार्पितस्सप्तभङ्गीस्वरूपव्याहतिः स्यात्, विशिष्टस्य धर्मान्तरत्वे च विशेषणविशेष्यभावव्यत्यासेनानेकविशिष्टस्वरूपनिष्पत्तावपि समनियतविशिष्टानामैक्यमिति तादृशानेकविशिष्टप्रतिपादनमेकेनैव भङ्गेनेति न सप्ताधिकभङ्गप्रसङ्गः, तादृशश्च विशिष्टरूपोऽखण्ड एव धर्म इति तदभिव्यञ्जकतयैव विशेषणविशेष्ययोरुपयोग इति धर्मद्वयभेदानुसन्धानस्य न नियमेनापेक्षेति तादृशविशिष्टधर्मस्यापि कालादिभिरभेदवृत्त्यभेदोपचाराश्रयणस्य धर्मान्तरैस्सह कर्त्तुं शक्यत्वादेकधर्मप्रतिपादनमुखेन सकलधर्मात्मकवस्तुप्रतिपादनस्य सप्तभिरपि भङ्गै.

विकल्पो विवक्ष्यते—स्यादवक्तव्यमिति ३ । एते त्रयः सकलादेशाः । यदा त्वभिन्नमेकं वस्त्वनेकेन गुणरूपेणोच्यते, गुणिनां च गुणरूपमन्तरेण विशेषप्रतिपत्तेरभावादिहात्मादिरेकोऽर्थः सत्त्वादेरेकस्य गुणस्य रूपेणाभेदोपचारतो मतुब्लोपेन वा निरंशः सकलो व्याप्तो वक्तुमिष्यते, विभागनिमित्तस्य प्रतियोगिनो गुणान्तरस्यासत्त्वादेस्तत्रानाश्रयणात्, तत्र द्रव्यार्थाश्रयं सत्त्वगुणमाश्रित्य तदा स्यात् सन्नि-

---

प्रत्येकं सम्भवात्प्रतिभङ्गसकलादेशस्वभावा सप्तभङ्गी, एवमुक्तदिशा विकलादेशस्वभावापि तथैवेति तन्मतव्यपोहायाह—**एते त्रयः सकलादेशा इति**, अयमाशय—विशिष्टानां समनियतानामखण्डानामैक्येऽपि विशिष्टस्वरूपावभासो विशेषणविशेष्यस्वरूपभेदावभासनियत एवाभ्युपगन्तव्य एव, अन्यथा विशिष्टस्य विशेषाभ्यां सर्वथाभिन्नस्यैवाभ्युपगमे सत्त्वविशिष्टस्यासत्त्वस्य नित्यत्वविशिष्टानित्यत्वभेदविशिष्टाभेदादिस्वरूपतो न भेदेन प्रतिभासः स्यात्, एवं सति सर्वासामपि सप्तभङ्गीनामाद्यभङ्गत्रयवैलक्षण्यकृतमेव वैलक्षण्यं भवेत्, न त्वन्तिमभङ्गचतुष्टयवैलक्षण्यप्रयुक्तमवभासमानं वैलक्षण्यं युज्येत, न च व्यञ्जकवैलक्षण्यकृतमेव वैलक्षण्यमिति वाच्यम्, विशिष्टस्यावैलक्षण्ये व्यञ्जकवैलक्षण्यस्यापि वक्तुमशक्यत्वात् । न चैवं सत्त्वविशिष्टासत्त्वादसत्त्वविशिष्टसत्त्वस्यापि भेदप्राप्तौ सप्तभङ्गाधिकभङ्गप्रसङ्ग इति वाच्यम्, सत्त्वविशिष्टासत्त्वादेरसत्त्वविशिष्टसत्त्वादिना तुल्यवित्तिवेद्यत्वस्याभ्युपगमेनैकेनैव भङ्गेन तदुभयावगतौ निष्प्रयोजनतया विशेषणविशेष्यव्यत्यासकृतभङ्गभेदस्योपन्यासानर्हत्वादतो विशिष्टप्रतिपादकभङ्गचतुष्टये भेदभानमावश्यकमिति नाभेदवृत्त्युपचाराश्रयणसंकथेति न ततोऽखण्डवस्तुप्रतिपादनमिति न तेषां सकलादेशतेति ।

आद्यानां त्रयाणां भङ्गानां सकलादेशत्वं यदुक्तं तदुपपादनायाह—**यदा त्विति । यदेति** तदा सन्नित्युच्यते इत्यग्रेतनतदाशब्दसम्बन्धाश्रयणेन, अनेकेन गुणरूपेणाभिन्नमेकं वस्तु यदा द्रव्यार्थाश्रयं सत्त्वगुणमाश्रित्योच्यते, तदा सकलादेशः कथमुच्यते ? इति कथम्भावाकाङ्क्षायामग्रे प्रतिपादितं स्यात्सन्नित्युच्यत इति । अनन्तधर्मात्मकस्य वस्तुनः कथं गुणरूपेणाभिधानं ? तदन्तरेण कथं स्यात्सन्नित्येवंरूपेण सत्त्वात्मकगुणसमाश्रयणतस्तदवबोधकवचनप्रवृत्तिस्तदभावे कस्य सकलादेशत्वमित्याशङ्काशङ्कानिवृत्तये त्वाह—**गुणिनां चेति** । अनन्तधर्मात्मकं वस्तु तदाऽवगतं भवेद्यदि येन येन गुणेन सह तस्याभेदः प्रत्येकं तत्तद्गुणात्मतया तत्प्रतिपत्तिः स्यात्, अन्यथा तद्गुणकोऽयमित्येव न सिद्ध्येत् कुतोऽनन्तगुणात्मकतावानाऽयमिति, वस्तुस्वरूपमात्रप्रतिपत्तिस्त्वविशिष्टा न व्यवहारक्षमेत्याशयः । गुणपदञ्च धर्ममात्रोपलक्षणम्, गुणानां परस्परं भेदमन्तरेण कथमनन्तता ?, तथा च सति कथमेकस्य वस्तुनो गुणिनो गुणाभेदः, तमन्तरेण कथं गुणात्मना गुणरूपेण तत्प्रतिपत्तिरित्यपेक्षायामाह—**इहेति । अभेदोपचारत इति**, वास्तविकैकगुणाभिन्नत्वे तदन्यगुणभिन्नत्वाभावतोऽनन्तधर्मात्मकत्वमेव न स्यादित्येकगुणमयत्वलक्षणतद्गुणाभिन्नत्वस्योपचार एवेत्यभिसन्धिः । एवमपि गुणगुणिभावो न प्रतीयेत, तस्य भेदप्रतिपत्त्यधीनत्वादतः पक्षान्तरमाह—**मतुब्लोपेन वेति**, तथा च गुणवाचकशब्दान्मतुपो लुग्विधानेन तस्य गुणवाचकशब्दस्य गुणिपरतया गुणविशिष्टत्वेन वस्तुनः प्रतीतिरुपपद्यते । **निरंशः**, अखण्डः, एतेन एकदेशे तस्यैकस्य गुणस्य सद्भावोऽपरदेशे तदन्यगुणस्य सद्भाव इत्येवं भागवृत्तयो न तत्र गुणाः किन्तु सम्पूर्ण एव वस्तुनि सर्व एव गुणा इत्येकगुणरूपेण न वस्तुभागप्रतिपत्तिः किन्त्वखण्डैकवस्तुप्रतिपत्तिरेवेति सूचितम् । सूचितमेव स्पष्टीकृतम्—**सकल** इत्यनेन, सकलशब्दश्चात्र सम्पूर्णार्थको न तु यावदर्थकः, एकस्याखण्डस्य यावत्त्वाभावात् । अनन्तधर्मात्मकस्य वस्तुन एकेन गुणरूपेण व्यापनं संपूर्णस्वरूपाक्रन्दनं न वस्तुतः सम्भवति तथा सति तदेकगुणमयत्वे गुणान्तरव्याप्तिस्तत्र न स्यात् गुणत्वसाम्याद्गुणान्तरव्याप्त्यभाववत्तद्गुणव्याप्तिरप्यचतुरस्रा स्यादत आह—**व्याप्तो वक्तुमिष्यत इति**, निरंशे वस्तुनि सर्वेऽपि गुणाः स्वस्वनिमित्तापेक्षया व्याप्यैव वर्तन्ते न तु भागेन तदभावात्, तथाप्येकस्यैव गुणस्य व्याप्तिस्तत्र विवक्षिता, अन्यगुणव्याप्तेस्तत्र सत्त्वेऽपि न विवक्षा, अत एकगुणरूपेण वस्तुप्रतिपत्तिर्घटत इति । एतदेव स्पष्टयति—**विभागनिमित्तस्येति**, यद्यपि वस्तुनो भागाभावान् कुतो विभागः ? कुतस्तरां तद्विभागनिमित्तं किञ्चित्, तथापि—

"भागे सिंहो नरो भागे योऽर्थो भागद्वयात्मकः । तमभागं विभागेन नरसिंहं प्रचक्षते ॥ १ ॥" इति

न्यायेन यद्वद्भागद्वयात्मनो विभाग आरोपितोऽस्त्येव तत्तन्निमित्तं गुणान्तरमप्यस्त्येव तच्च न विवक्ष्यतेऽत एकेन गुणरूपेण स्याद्योऽखण्डं वस्तु वक्तुमिष्टं भवतीति । एवं सति प्रथमभङ्गः सकलादेशः सम्पद्यते सत्त्वगुणसमाश्रयणादित्याह—**तत्रेति** । सप्तभङ्ग्यां सत्त्वगुणसमाश्रयणेन प्रवृत्तिरिति प्रथमभङ्गः कं नयमाश्रित्य प्रवर्तत इत्यपेक्षायामाह—**द्रव्यार्थाश्रयमिति**, द्रव्यार्थिकनयविषयमित्यर्थः । प्रथमभङ्गविषयस्य सत्त्वस्य द्रव्यार्थिकनयविषयत्वे तद्विषयकस्य भङ्गस्य द्रव्यार्थिकनयापेक्षत्वं प्राप्तमेवेति ।

त्युच्यते सकलादेशः, गुणद्वयं तु गुणिनो भागवृत्ति भवत्युभयात्मकत्वाद् गुणिनः, न त्वेको गुणो भागवृत्तिरिति । एवं स्यान्नित्य इत्यपि वाच्यम् । तथा पर्यायनयाश्रयमसत्त्वमनित्यत्वं चाङ्गीकृत्य स्यादसत् स्यादनित्य आत्मेति वाच्यम् । युगपद् भावादुभयगुणयोरप्रधानतायां शब्देनाभिधेयतयाऽनुपात्तत्वात् स्यादवक्तव्यः । का पुनर्भावना—स्याद् सन्निति ?, किमत्र भाव्यम् ? एकं द्रव्यमनन्तपर्यायमतीतानागतानन्तकालसम्बन्ध्यनेकार्थव्यञ्जनपर्यायात्मकतया विश्वरूपम्, तदेवंविधावस्थं वस्तु वर्तमानपर्यायवृत्तमपि येन येन शब्देनोच्यते तेन तेन रूपेण तदभिसम्बद्धम्, द्रव्यस्य पर्यायसचिवत्वात् पर्यायाणां च द्रव्यसहायत्वात्, अतोऽनेकान्तवादसामर्थ्याद् वस्तुनो यदुक्तसूक्तिका न च व्यवहारविरोधिनी, यथा—घटः पटादिरपि भवति स्यात्कारसंलाञ्छनशब्दाभिधेयतायामिति जैनेन्द्रो न्यायः ।

---

गुणद्वयरूपेण गुणिनोऽभिधायकं वचनं न सकलादेशस्तत्र गुणद्वयविवक्षाया भेदविवक्षामन्तरेणाघटनात्, तदात्मकविवक्षणमपि गुणिनो भागकल्पनेनैव, यत एको भागोऽस्यायं गुण एकश्चायमित्यतोऽयं गुणी भागद्वयात्मक इत्येवं सखण्डता तस्येति नाखण्डरूपस्य सकलस्य वस्तुनो गुणद्वयरूपेण प्रतिपादनं खण्डते, एकस्तु गुणः स्वयमखण्डत्वाद्वस्तुनो भागोऽपि भागान्तराविवक्षाया वस्तुस्वरूपवदखण्डतयैव विवक्षितत्वात्तद्रूपेण वस्तुप्रतिपादनस्य सकलादेशत्वं घटत एवेत्यभिसन्धानेनाह—**गुणद्वयं त्विति** । यथा च सत्त्वासत्त्वविधिनिषेधकल्पनया प्रवृत्तायास्सप्तभङ्ग्याः स्यात्सन्निति प्रथमभङ्ग उक्तयुक्त्या सकलादेशस्तथैव नित्यत्वानित्यत्वविधिनिषेधकल्पनाप्रवृत्तसप्तभङ्गीप्रथमभङ्गोऽपि सन्नित्य इति सकलादेशोऽवसेय इत्याह—**एवं स्यान्नित्य इत्यपि वाच्यमिति** । पर्यायार्थिकनयसमाश्रयणेन प्रवृत्तो द्वितीयभङ्गोऽप्येकगुणरूपेण वस्त्वभिधायकत्वादुक्तदिशा सकलादेश इत्यतिदिशति—**तथेति । पर्यायनयाश्रयं** पर्यायनयविषयम् । सकलादेशतयाऽभिमतस्य तृतीयभङ्गस्योपपादनायाह—**युगपदिति,** गुणद्वयस्य युगपत्प्रधानतया विवक्षायां प्रधानतयोभयप्रतिपादकस्य कस्यचिच्छब्दस्यावक्तव्यशब्दव्यतिरिक्तस्याभावादभिधेयस्याप्यभावापत्तौ सत्यां तथाऽप्रधानतैव तयोरित्यभिसन्धानेनोक्तम्—**अप्रधानतायामिति,** शब्देनाभिधेयतयाऽनुपात्तत्वादिति च देहलीदीपन्यायेन पूर्वोत्तराभ्यामन्वेति, ततश्च यद्यप्यस्ति तयोः प्राधान्येन युगपद्विवक्षा तथापि तथाविवक्षायां तथातत्प्रतिपादकः शब्द एव न कोऽपि विद्यत इत्यप्राधानतैव प्राप्ता, एवं युगपत्प्रधानतया विवक्षितगुणद्वयरूपेण गुणिनोऽभिधायकमपि वचनं नास्तीत्यवक्तव्य एव स, एवं च युगपत्प्रधानतया विवक्षितगुणद्वयमव्यक्तरूपतापन्नमेकगुणरूपमेव तद्रूपेण धर्मिणोऽभिधायकत्वात्तृतीयभङ्गोऽपि सकलादेश इत्याशयः । इदानीं सप्तभङ्गीस्वरूपावश्यकताप्रतिपत्तये उपक्रम्यते, तत्र प्रथमभङ्गभावनाय परपृच्छामुट्टङ्कयति—**का पुनर्भावना स्यात्सन्नितीति** । उत्तरयति—**किमत्र भाव्यमिति,** सप्तभङ्गी नापूर्वमर्थङ्कथयति किन्तु यदेव वस्तुस्वरूपं तदेव प्रकाशयति, अतः प्रमाणप्रतीतार्थख्यापनमेवानेन क्रियत इति कल्पनोपनीतभावनाविषयत्वलक्षणं भाव्यत्वमत्र नास्तीत्यर्थः । प्रमाणप्रतीतानन्तधर्मात्मकवस्तुन एव स्यात्सन्नित्यादिभङ्गप्रतिपाद्यत्वमित्येतत्प्रपञ्चत उपदर्शयति—**एकमिति,** एकत्वविशिष्टं सदेव विश्वरूपमनेकात्मकं वस्त्वित्यर्थः । एकत्वमनेकत्वं विरुद्धं कथं वस्तुनि ?, नैवं शङ्क्यम्, द्रव्यात्मनैकत्वस्य पर्यायात्मनाऽनेकत्वस्य च सम्भवादित्याह—**द्रव्यमित्यादि** । अनन्तपर्यायमित्येतावतैव विश्वरूपत्वावगतौ कथं तथेत्याशङ्कोन्मूलनाय विशेषतस्तत्प्रपञ्चनम्—**अतीतानागतेत्यादिकम्** । वचनस्य विवक्षापरतन्त्रत्वाद्यदा य एव पर्यायः प्रयोजनवशाद्विवक्षितस्तदा तत्पर्यायरूपेणैव कथनमनन्तपर्यायस्यापि वस्तुन इत्याशयेनाह—**तदेवंविधावस्थमिति** । अतीतानागतपर्याययोर्वर्त्तमानसमये तथाऽसत्त्वेन यथाऽविवक्षया वचनाप्रवृत्तिस्तथा वर्त्तमानसमयेऽवस्थितपर्यायाणामपि यस्यैव येनैव रूपेण विवक्षा तस्यैव तेनैव रूपेण वचनं प्रयोजनवशादित्यावेदनायोक्तम्—**वर्त्तमानपर्यायवृत्तमपीति । येनेति,** शब्देन येन येन रूपेणोच्यते तेन तेन रूपेण तदभिसम्बद्धमुच्यत इत्यर्थः । तथा च वचनप्रवृत्तिरीदृशी नैतावता यद्रूपेणाभिधानं तावन्मात्रात्मकमेव वस्त्वित्याशयः । यथा चैकः पर्यायः पर्यायान्तरासंवलितोऽपि वचनमार्गगामी तथा द्रव्यासंवलितोऽपि किन्तथा न स्याद्द्रव्यमपि पर्यायविनिर्मुक्तमेव किन्न तथेत्याशङ्काशङ्कुसमुद्धरणायाह—**द्रव्यस्येति,** तथा चान्योन्यसङ्घटितमूर्त्तित्वान्नैकस्यापरसम्भेदमन्तरेण वचनमिति । वस्तुन एकानेकात्मकत्वेन तथैव तदभिधाने परिपूर्णं वचनं नान्यथा, तच्च स्यात्कारलाञ्छितवचनप्रयोगेणैव निर्वहतीत्याह—**अत इति,** वस्तुन एकानेकत्वतः । घटस्यानन्तधर्मात्मकत्वे पटाद्यात्मकत्वमपि, तथा च घट पट इत्यादिरपि वचनं प्रमाणं भवेदत आह—**यदुक्तसूक्तिका न च व्यवहारविरोधिनीति,** यदित्यस्य येन रूपेणेत्यर्थः । कथं घटादेः पटादिरूपेणोक्तौ न व्यवहारविरोध इत्यपेक्षायामाह—**यथेति** । घटः स्यात्पट इत्येवं स्यात्कारलाञ्छि-

एवं न्यायव्यवस्थायामनन्तपर्याये पुरुषादौ सप्तधा वाचकः शब्दः प्रवर्तते—स्यादस्त्येवेत्यादिः, यथा—युवत्ववृत्तिः, पुरुषः पुरुषत्वेनास्ति न तु बालवृत्त्या, ततः स्यादस्त्येव न पुनः सर्वात्मनैव, पुरुषः द्रव्यार्थेनान्वयिना वर्तमानेन यौवनेन विद्यते न तु तत्र सम्भविनान्येनापि पर्यायेण बालादिना, यदि पुनरस्त्येवेति नियमेनैवोच्यते तत आमरणकालवृत्तत्वात् पुरुषशब्दपुरुपार्थयोर्नास्तित्वनिरवकाशास्तित्वप्रतिज्ञावशात् यथा पुरुषत्वयौवनाभ्यां विद्यते तथा बालपुरुषतयाऽपि स्याद्, अन्याभिश्च वृत्तिभिः सत्सङ्कीर्णवृत्तिर्भवेत्, नियतवृत्तिश्च दृश्यते, न वा बालता पुरुषस्वभाव एव भवतीत्यभ्युपेयम्, ततश्चावस्थाहानेः पुरुषाभावप्रसङ्गः, अतो बालापेक्षया स्यादस्त्येवेति भवति । तथैकान्तवादिनो नास्त्येवात्मेत्यवधारणेनोक्ते यथैवान्वयिना द्रव्यार्थपुरुषतया स नास्ति एवमुत्पादविनाशप्रवाहरूपपर्यायात्मिकयाऽपि बालादिवृत्त्या न स्यात्, एवं चात्मनास्तित्वमस्तित्वनिरवकाशं भवेत्, ततश्चान्वयिना नैमित्तिकेन वा रूपेण नास्तित्वमात्मनो वान्ध्येयस्येव सर्वप्रकारमनुषक्तम्, अतस्तद्दोषापाकरणेन स्यान्नास्त्येवेत्युच्यते, स ह्यन्वयिन्या वृत्त्या न विद्यते न सर्वात्मनैव, यतो वर्तमानपर्यायः स्वात्मना बालादिरूपेणास्त्येव, पर्यायपरम्परायामपि वर्तमानपर्यायेणैवास्ति नातीतानागतपर्यायापेक्षणेनेत्यतः स्यान्नास्त्येवेति । ये त्वस्तित्वनास्तित्वैकान्तवादिनोऽवधारणमिष्टतः प्रयुञ्जते—अस्त्येवात्मा नास्त्येव चात्मेति, तेषां शब्दशक्तिप्रापितत्वात् सर्वथाऽस्तित्वनास्तित्वप्रसङ्गः । प्रथमविकल्पे तावत् सर्वप्रकारास्तित्वमात्मनः

---

तशब्दप्रयोगे न व्यवहारविरोधः, इयं च प्रक्रिया न तीर्थान्तरीयैर्दृष्टेति सूचनायाह—**जैनेन्द्रो न्याय इति** । उक्तयुक्तिप्रथनफलं प्रकृतमुपन्यस्यति—**एवमिति** । **युवत्ववृत्तिः**, युवावस्थापन्न । **द्रव्यार्थेन** द्रव्यार्थिकनयविषयेण । **अन्वयिना** पूर्वोत्तरपर्यायानुगतेन पुरुषत्वेन । तच्च पुरुषत्वं युवत्ववृत्तौ यौवनेनैकतापन्नमेव भवतीत्यावेदनायाह—**वर्त्तमानेन यौवनेनेति** । **तत्र** पुरुषे । स्यात्पदप्रयोगफलमाह—**यदीति** । ननु पुरुषस्य बालत्वं स्वभाव एव ततश्च पुरुषत्वेन सत्त्वे बालत्वेनापि सत्त्वमेवेत्यत आह—**नवेति**, अस्याभ्युपेयमित्यनेनान्वयः । **ततश्च** बालत्वस्य पुरुषस्वभावतश्च । **अवस्थाहानेः**, एकस्यानुगामिनः क्रमभाविनः परिणामा अवस्थाशब्देनोच्यन्ते, बालस्य त्वननुगामिनो न युवत्वादिपरिणामा इत्यवस्थाहानेः । **पुरुषाभावप्रसङ्गः**, अनुगामिन एव पुरुषत्वेनाननुगामित्वे पुरुषाभाव एव स्यात् । एवञ्च सति यावदुक्तं भवति पुरुषापेक्षयाऽस्त्येव तावदुक्तं भवति बालापेक्षया स्यादस्त्येवेति पुरुषस्वभावस्य बालत्वादभिन्नत्वात्, अनिष्टं चैतत्, यतो युवत्ववृत्तिः पुरुषः पुरुषत्वेन स्यादस्त्येवेति भवति न तु भवति बालापेक्षया स्यादस्त्येवेति सर्वमभिप्रेत्याह—**अत इति** । एवं द्रव्यार्थिकनयविषयमनुगामिधर्ममाश्रित्य प्रथमभङ्गमुपपाद्य पर्यायार्थिकनयविषयमननुगामिधर्ममाश्रित्य द्वितीयभङ्गप्रवृत्तौ स्यात्कारलाञ्छनस्यावश्यकत्वमित्युपपादयति—**तथैकान्तवादिन इति**, नैरात्म्यवादिनो बौद्धस्येत्यर्थः । **स** आत्मा । **बालादिवृत्त्येति**, पूर्वपूर्वज्ञानाद्यवस्थाविशेष एव तन्मते उत्तरोत्तरज्ञानाद्यवस्थापेक्षया बालादिवृत्तिः । पुरुषाद्यात्मना नास्तित्ववद्बालाद्यात्मनाऽपि नास्तित्वे किं स्यादित्यत आह—**एवं चेति** । **अस्तित्वनिरवकाशम्**, अस्तित्वरहितम्, यद्यप्यस्तित्वविकलं नास्तित्वमेकान्तवादिन इष्टमेव तथापि तथातत्त्वस्य गगनकुसुमरूपेण भावात्तथावादिनो न प्रामाणिकप्रवेश इति हृदयम् । एतदभिसन्धानेनैवोक्तम्—**वान्ध्येयस्येवेति** । स्यात्कारलाञ्छितप्रयोगे तु सर्वं समञ्जसमित्याह—**स हि**, पर्यायार्थिकनयाभ्युपगन्तृकवाद्यभिमत आत्मा यतः । **अन्वयिन्या वृत्त्या**, अनुगामिस्वरूपेण पुरुषत्वादिना । **न विद्यते** नास्ति, यतस्तन्मते अनुगामिस्वरूपस्यात्मनोऽनभ्युपगमात्, एवञ्च स्यादित्यस्यानुगामिस्वरूपापेक्षयेत्यर्थः । स्यात्कारोपन्यासप्रयोजनं प्रकटयति—**न सर्वात्मनैवेति**, न विद्यत इत्यस्यानुकर्षः, सर्वात्मना न विद्यत इति नेत्यर्थः । सर्वात्मना नास्तित्वं नास्तीत्यर्थस्योपोद्बलनायाह—**यत** इति । द्वितीयभङ्गे सर्वपर्यायवादिमताश्रयणेन प्रवृत्ते बालाद्यवस्थापदेन यस्य वादिनो यथा पर्यायस्वीकृतिस्तन्मते बालाद्यवस्थापदेन तथापर्यायग्रहणं बोध्यम्, एकान्तवादिनां तु स्यात्कारालाञ्छितास्तित्वाद्यवधारणप्रयोगोऽनिष्टापादक एवेत्याह—**ये त्वित्यादि** । **अस्त्येवेत्ये**वकारेण नास्तित्वस्य सर्वथा व्यवच्छेदे केनापि प्रकारेण न नास्तित्वमिति सर्वप्रकारेणास्तित्वप्रसङ्गः, एवं **नास्त्येवे**त्येवकारेणास्तित्वस्य सर्वप्रकारेण व्यवच्छेदे केनापि प्रकारेणास्तित्वं नेति सर्वप्रकारेण नास्तित्वप्रसङ्ग इत्याह—**तेषामिति** । **शब्दशक्तीति**, अन्यव्यवच्छेदाववोधकैवकारशब्दसामर्थ्ये-

प्रसजति, प्रतिषेधनिरपेक्षत्वादस्तित्वेन स्ववशे व्यवस्थापितत्वादस्तित्वाभावे वात्माभावात्, नास्तित्वस्यापि स्वविषयेऽवधृतत्वात् सति घटे तदप्रसङ्गात्, एकाधिकरणयोश्च सदसतोर्विरोधात् परस्परविषयानाक्रान्तिः, अतः समस्तवस्तुरूपेणास्त्यात्मा नास्तित्वनिरवकाशास्तिशब्दवाच्यत्वादस्तित्वे स्वात्मवत्, अस्तित्वसामान्येन व्याप्तो न त्वस्तिविशेषैः पटादिभिरिति चेत्, यथाऽनित्यमेव कृतकमनित्याभावे तदभावात, साध्यधर्मसामान्येनेति वचनाद् अनित्यत्वसामान्यमनित्यव्यक्तिश्चेति द्विरूपः साध्यधर्मः, साधनधर्मोऽपि हि द्विप्रकारः, तत्तुल्योऽपि हितानामे(? हेतूनामि)त्यादिवचनात्, तथास्वं[ङ्गं] येन रूपेणेत्याद्यभिधानात् सामान्यानित्यतया व्याप्तिर्न विशेषानित्यतया, हन्त भवतैव तर्हि प्रतिपन्नः साध्यधर्मभेदस्तथा चावधारणवैयर्थ्यम्, अनित्यत्वे हि सर्वप्रकारे सत्यवधारणसाफल्यं स्यात्, यदा तु विशेषानित्यतया न भवत्यनित्यं वस्तु तदा व्यर्थमवधारणम् । स्वगतेनापि विशेषेणानित्यं भवत्येवेति

---

त्यर्थः । **सर्वथेति,** अस्त्येव घट इति प्रथमविकल्पे सर्वथाऽस्तित्वप्रसङ्गः, नास्त्येव घट इति द्वितीयविकल्पे सर्वथा नास्तित्वप्रसङ्ग इत्यर्थः । अस्त्येवात्मेति इति प्रथमविकल्पे सर्वथाऽस्तित्वप्रसङ्गोपपादेन द्वितीयविकल्पे सर्वथा नास्तित्वप्रसङ्ग उपपादित एव भवतीत्याशयेनाह-**प्रथमविकल्प इति । प्रतिषेधेति,** नास्तित्वेत्यर्थः । नास्तित्वस्यात्मन्यभावे सति यद्यस्तित्वमात्मनो न स्यान्न स्यादेवात्मा तस्य रूपान्तराभावादित्याह-**अस्तित्वाभाव इति ।** सर्वप्रकारेणाऽस्तित्वे येन येन रूपेण नास्तित्वं तेन तेन रूपेणाप्यस्तित्वस्यैव भावे नास्तित्वमप्यस्तित्वस्वरूपप्रविष्टमेवेति तद्विशिष्टतायामपि सत्त्वमेवागतमिति, तथा सतश्च नासत्त्वमित्याह-**नास्तित्वस्यापीति । स्वविषये** अस्तित्वगोचरे । **तदप्रसङ्गात्,** नास्तित्वाप्रसङ्गात्, नहि अवच्छेदकमन्तरेणावच्छेद्यस्यावस्थिति, अवच्छेदकञ्च सर्वं नास्तित्वस्यास्तित्वस्यैव जातमिति निमित्तस्यावच्छेदकस्याभावादेव नावच्छेद्यव्यवस्थितिरित्याशयः । ननु यद्यदस्तित्वस्यावच्छेदकं तत्तन्नास्तित्वस्याप्यवच्छेदकमिति येन येन रूपेणास्तित्वं तेन तेन रूपेण नास्तित्वमपीति न नास्तित्वस्यानवकाश इत्यत आह-**एकाधिकरणयोश्चेति,** एकावच्छेदेनैकाधिकरणयोश्चेत्यर्थः । **सदसतोरिति,** भावप्रधाननिर्देशात्सत्त्वासत्त्वयोरित्यर्थः । **विरोधादिति,** एकावच्छेदेनैकाधिकरणवृत्तित्वाभावादित्यर्थः । **परस्परविषयानाक्रान्तिरिति,** यदवच्छेदेन यत्र सत्त्वं तदवच्छेदेन तत्र नासत्त्वम्, यदवच्छेदेन यत्रासत्त्वं तदवच्छेदेन तत्र न सत्त्वमिति नियम इत्यर्थः । एवं स्थितौ परवाक्यस्य परम्प्रति स्वतः प्रामाण्याभावात्परार्थानुमानविधयैव प्रामाण्यमिति तथैव प्रयोगमुपदर्शयति-**अत** इति । ननु नास्तित्वनिरवकाशास्तिशब्दवाच्यत्वस्यास्तित्वसामान्येनैवाविनाभावो न तु पटत्वादिनाऽस्तित्वरूपास्तित्वविशेषैरिति ततोऽस्तित्वसामान्यमेव सिद्ध्येन्न तु समस्तरूपेणास्तित्वमिति परश्शङ्कते-**अस्तित्वसामान्येनेति ।** उक्तशङ्काग्रन्थश्चायं संक्षिप्तरूपोऽतस्तमेव प्रपञ्चयति-**यथे**त्यादिना, कृतकत्वमनित्यत्वसामान्येन व्याप्तमनित्यत्वसामान्यमेव गमयति, तथा प्रकृतेऽपीति । कृतकत्वस्यानित्यत्वसामान्यव्याप्तिरुपदर्शनायाह-**अनित्याभाव** इति, अनित्यत्वाभाव इत्यर्थः । **तदभावात्** कृतकत्वाभावात्, न त्वनित्यत्वविशेषेण व्याप्तिस्तस्य, अनित्यत्वविशेषस्य घटादिगतस्य पटादावभावेऽपि कृतकत्वस्य तत्र सद्भावात् । अस्य प्राचीनसम्मतत्वोपदर्शनायाह-**साध्यधर्मेति ।** साध्यधर्मो द्विरूप इति सामान्यपदोपादानं सफलमित्युपदेशनायाह-**अनित्यत्वेति ।** सामान्यस्य सामान्येन व्याप्तिर्न तु विशेषस्येत्यतो हेतोरपि द्वैरूप्यं वाच्यमित्यत आह-**साधनधर्मोऽपीति ।** अत्रापि प्राचीनसम्मतिमुपदर्शयति-**तत्तुल्योऽपीति,** अत्र वचनस्वरूपाववोधक पाठो मुद्रणादिदोषकवलित इवाभाति । एवञ्च यत्सिद्धं तदाह-**सामान्यानित्यतयेति ।** अनित्यमेव कृतकमित्यत्रैवकारेण न नित्यत्वस्य व्यवच्छेदः, नित्यत्वव्यवच्छेदस्यानित्यत्वरूपतया तस्यानित्यमित्यनेनैवावगतत्वात्, नाप्येकानित्यत्वविशेषप्रतिपादकानित्यपदोत्तरत्वेनैवकारस्यान्यानित्यत्वविशेषव्यवच्छेदकत्वम्, अत्रानित्यपदस्य कृतकत्वव्यापकानित्यत्वसामान्यधर्मपरत्वेनैव भवतोररीकारादिति व्यवच्छेद्याभावादवधारणमनर्थकमापाद्येतेति समाधत्ते-**हन्त भवतैवेति ।** अनित्यपदेन सर्वप्रकारानित्यत्वस्याभिधाने सति यत्प्रकारानित्यत्वं साधयितुमिष्टं तदन्यप्रकारानित्यत्वं मा सैत्सीदिति तदपोहायावधारणार्थक एवकारः साफल्यं गच्छेदपीत्याह-**अनित्यत्वे हीति ।** तर्हि कुत्रावधारणं विफलमित्यपेक्षायामाह-**यदा त्विति ।** ननु अनित्यत्वसामान्येनैव वस्तुनोऽनित्यत्वे, अनित्यत्वविशेषेण तदनित्यं न भवत्येवेत्यसम्भवादेव तदप्राप्तौ तदपोहनमपार्थकं भवेत्, पर नैवमभ्युपगम., किन्तु यथाऽनित्यत्वसामान्येनानित्यं वस्तु तथा स्वगतानित्यत्वविशेषेणाऽप्यनित्यमिति परगतानित्यत्वविशेषव्यपोहायावधारणं सफलमेवेति शङ्कते-**स्वगतेनापीति ।** एवमप्यवधारणं व्यर्थम्, अनित्यमित्यनेन स्वगतानित्यत्वविशेषेणानित्यमित्युक्तौ स्वगतेत्य-

चेत्, तन्न, तत्रापि स्वगतेनेति विशेषणसामर्थ्यात् परगतविशेषानित्यत्वाभावः, पुनरप्यफलमेवावधारणम् । न चानवधारणो वाक्यप्रयोगः पण्डितजनमनःप्रीतिहेतुः, सर्ववाक्यानां सावधारणत्वादिष्टतश्चावधारणप्रकल्पनादवश्यंतयाऽवधारणमभ्युपेयम्, अन्यथा त्वनित्यं कृतकमनित्यत्वस्यानवधृतत्वान्नित्यत्वप्रसक्तिरपि ॥ अपरे त्वेवंविधप्रसङ्गभीत्या त्रिधाऽवधारणफलं वर्णयन्ति अयोगान्ययोगात्यन्तायोगव्यवच्छेदद्वारेण, क्वचिदेवकारप्रयोगादयोगव्यवच्छेदः, क्वचिदन्ययोगनिरासः, क्वचिदत्यन्तायोगव्युदासः, तत्रायोगोऽसम्बन्धस्तदवच्छेदफलं विशेषणमस्त्येव घट इत्यादावस्तिना सह घटस्यायोगोनास्त्ययोगमात्रं व्यवच्छिद्यते, यथा **चैत्रो** धनुर्धरः, **चैत्रे** हि धनुर्धरतायामाशङ्क्यमानायां **चैत्रो** धनुर्धर एवेत्यवधार्यमाणे नान्येभ्यो धनुर्धरता व्यावर्तते, तद्वदिहापि प्रकृतवस्तुनीति । स्यात् त्वेष दोषो यद्यन्ययोगव्यवच्छेदेन विशेषणं क्रियेत, यथा **पार्थो** धनुर्धरः, **पार्थे** धनुर्धरतायां प्रतीतायां तादृशी किमन्यत्राप्यस्तीति चिन्तायां **पार्थ** एव धनुर्धरो नान्य इति प्रतिविशिष्टधनुर्धरतायाः सहान्यैर्योगो व्यवच्छिद्यत इति । क्वचिदत्यन्तायोगव्यवच्छेदो नीलमेव सरोजमित्यत्र, न सरोजं सकलद्रव्यभाविनीलगुणमात्मसात्करोति, तथा नीलत्वमपि न समस्तसरोजाक्षेपि, अत एवोभयव्यभिचारादुभयविशेषणत्वम्, अत्र च नीलतायाः किलात्यन्तमयोगो व्यवच्छिद्यते, नात्यन्तमयोगः—असम्बन्धः सरोजेन सह नीलतायाः । सर्वत्र चैवकारस्य विवक्षावशात् साक्षादप्रयोगेऽपि व्यवच्छेदार्थप्रतीतिरतो निरन्वयदोषाभावस्तदयोगव्यवच्छेदेन विशेषणादिति । अत्रोच्यते—सर्वमेतद् व्यामोहभाषितं दुर्बुद्धेरुद्धरतः परप्रयुक्तदूषणानि, यस्मादयोगे व्यवच्छिन्नेऽपि प्रागेतनदोषसम्पातो न निवर्तते, अयोग-

---

नित्यत्वविशेषविशेषणादेव परगतानित्यत्वविशेषव्यावर्त्तनादिति समाधत्ते–**तन्नेति** । ननु माऽस्त्ववधारणमनित्यं कृतकमित्येव प्रयोक्तव्यम्, प्रकृतेऽप्यस्त्यात्मेत्येव प्रयोक्तव्यं किमश्छिन्नमित्यत आह–**न चानवधारण इति** । **अन्यथा** अवधारणप्रयोगाभावे । **अनवधृतत्वात्**, अनित्यत्वमेव न नित्यत्वमित्येवं निर्णयाभावात्, तथा च स्यात्प्रयोगाभावेऽवधारणस्य निष्प्रयोजनत्वप्रसक्तिः, अवधारणविनिर्मुक्तं च वाक्यं नाद्रियन्ते सूरिभिरिति स्यात्कारैवकारोपबृंहितास्तिपदप्रयोग एव पेशल इत्येकान्तवादिनामस्त्येवात्मा नास्त्येवात्मेत्यादिवादा अबोधविजृम्भिता एवेत्याशयः । परप्रयुक्तदूषणोद्धरणे स्यात्प्रयोगमन्तरेणैवैवकारप्रयोगसाफल्यं त्रिधैवकारार्थसमाश्रयणेन सामर्थ्यमात्मनः पूत्कुर्वतां केषाञ्चिदेकान्तवादिनां मतं पूर्वपक्षतयोट्टङ्कयति–**अपरे त्विति** । प्रकृतेऽयोगव्यवच्छेदार्थक एवकारः स्यात्पदमन्तरेणापि निर्वहतीति दृष्टान्तद्वारा समर्थयति–**तत्रेति**, फलत्रयेषु मध्ये । **तदवच्छेदफलमि**त्यत्र तद्व्यवच्छेदफलमिति पाठो युक्तः । एवकारस्यायोगमात्रव्यवच्छेदफलकत्वे दृष्टान्तमुद्भावयति–**यथेति** । अवधार्यमाणेनान्येभ्य इत्यत्रावधार्यमाणे इति छेदः । **तद्वदिति**, यथा धनुर्धरत्वस्यान्येभ्यो न व्यावृत्तिः चैत्रान्यस्यापि धनुर्धरस्य लोके प्रतीतत्वात्, तथाऽस्त्येव घट इत्यत्रापि घटान्येभ्योऽस्तित्वं न व्यावर्त्तते घटान्यस्यापि पटादेरस्तितया प्रतीतेरिति । यद्यन्ययोगव्यवच्छेदो विशेषणस्यैवकारफलं प्रकृते स्यात्तदा तदनुपपत्तिदोष. प्रकृते स्यान्न च तथाऽभ्युपगम्यत इत्याह–**स्यात्त्वेव दोष** इति । अन्ययोगव्यवच्छेदफलकत्वे दृष्टान्तमाह–**यथेति** । **प्रतीतायामि**त्यनेन तावत्सात्रप्रतिपादकत्वे वाक्यत्वस्यानुवादकत्वमेव स्यादिति व्यञ्जितम् । धनुर्धरतामात्रमन्यत्राप्यस्तीत्यतस्तस्यान्ययोगव्यवच्छेदोऽसम्भवग्रस्त इत्यत उक्तम्–**प्रतिविशिष्टधनुर्धरताया** इति । अत्यन्तायोगव्यवच्छेदफलकत्वमुदाहरणोपदर्शनतो निष्टङ्कयति–**क्वचिदत्यन्तायोगव्यवच्छेद** इति । नीलं सरोजमित्यत्र सरोजत्वं नीलस्य विशेषणं नीलत्वञ्च सरोजस्य विशेषणमुभयस्यापि व्यभिचरितत्वादित्युपपाद्य दर्शयति–**न सरोजमि**त्यादिना । सर्वत्रैवकारोऽप्रयुज्यमानोऽस्ति उक्तार्थान्यतमयोगस्य सर्वत्र सम्भवादित्याह–**सर्वत्रेति** । अवधारफलासम्भवादेकान्तवादे एवकारानन्वयदोषो यः प्रागभिहितः सोऽयोगव्यवच्छेदफलसम्भवतो नास्तीत्याह–**अत** इति । सिद्धान्ते उक्तमतं प्रतिक्षेप्तुमाह–**अत्रोच्यत** इति । **सर्वमेतादि**त्यादि स्पष्टम् । **तस्मिन्**, अस्तित्वविशेषायोगे । एकविशेषस्यायोगे सत्यप्यन्यविशेषयोगो न निवर्त्तत इति पटत्वादिनाऽस्तित्वविशेषायोगवत्सर्वात्मनास्तित्वविशेषस्य योगोऽपि स्याद्, एवमपि च घटस्य पटाद्यात्मकत्वप्रसङ्गोऽपरिहार्य इत्या-

व्यवच्छेदेन ह्यस्तिना योग इष्यते, स च योगः किं? सामान्यरूपेणास्तिना प्रत्याय्यतेऽथ विशेषरूपेण उतोभयरूपेणेति, सर्वथा प्राक्तनदोषप्रसङ्गः, व्यवच्छेदोऽप्यस्तित्वसामान्यायोगस्य वाऽस्तित्वविशेषायोगस्य वा उभयायोगस्य वा?, यद्यस्तित्वसामान्यायोगव्यवच्छेदः, ततोऽस्तित्वविशेषायोगव्यवच्छेदाभावप्रसङ्गः, तस्मिंश्चाव्यवच्छिन्ने सर्वास्तित्वविशेषस्वभाव आत्मादिः प्रसक्तः; अथास्तित्वविशेषायोगव्यवच्छेद इष्टः, एवं तर्ह्यस्तित्वसामान्ययोगव्यवच्छेदाभावप्रसङ्गः, ततः प्रागेतनदोषव्रातस्तदवस्थः, अथोभयायोगव्यवच्छेदः, तथापि सामान्यविशेषास्तित्वोभयस्वभावः आत्मादिरभ्युपेतः स्यात्, ततश्च निष्फलमवधारणम्, सामान्यास्तित्वेन चास्त्यात्मादिर्विशेषास्तित्वेन च; ततश्च स्वगतविशेषास्तित्वेनास्ति परगतविशेषास्तित्वेन नास्ति वस्तु, स्यादस्ति स्यान्नास्तीति सिद्धम्, अनेकान्तरूपमेव समस्तवस्तु व्यवहारास्पदतामानयन्तस्तत्कारिणः, तद्द्वेषिणश्च केचिज्जायन्ते जगत्यकारणाविष्कृतमत्सरप्रसराः खलु दुर्जनाः। यत्राप्यन्ययोगव्यवच्छेदोऽभिप्रेतस्तत्रापि योगविशेषो व्यवच्छिद्यते न योगसामान्यम्, यादृक् पार्थे धनुर्धरता तादृगन्यत्र नास्तीति । अत्यन्तायोगव्यवच्छेदेऽपि अत्यन्तमयोगः—नास्ति योग एव सर्वथा, अथवा कदाचिदस्ति कदाचिन्नास्तीत्येवं च विकल्पद्वयेऽपि प्राच्य एव प्रसङ्गो योज्यः ॥ प्रकृतमनुस्रियते—सर्वथा सामान्यविशेषरूपत्वात् प्रकारवदस्तित्वमतः सामान्यास्तित्वेनास्ति विशेषास्तित्वेन

---

प्रायेनाह–**सर्वास्तित्वेति** । ननु योऽस्तित्वविशेषः स्वगतस्तस्यायोगो व्यवच्छिद्यतेऽन्यविशेषायोगो न व्यवच्छिद्यत इति सर्वास्तित्वविशेषायोगेऽव्यवच्छिन्ने सति सर्वास्तित्वविशेषप्राप्तिः कथं स्यादित्याह–**अथेति** । एवं सति अस्तित्वसामान्यस्यायोगोऽपि न व्यवच्छिन्न इति अस्तित्वसामान्यायोगे सति अस्तित्वसामान्ययोग एव न स्यात्, तथा च व्यापकस्य सामान्यस्याभावे व्याप्यस्य विशेषस्य सद्भावोऽपि दुर्घट इति समाधत्ते–**एवं तर्हीति** । **अस्तित्वसामान्ययोगेति**स्थानेऽस्तित्वसामान्यायोगेति पाठो युक्तः, यदि च अस्तित्वस्याप्ययोगो व्यवच्छिद्यते विशेषस्याप्ययोगोव्यवच्छिद्यते तदा सामान्यविशेषोभयात्मकत्वं स्याद्वाद्यभिमतं वस्तुनः प्राप्तमेवेति एकान्तावधारणं निष्फलमेवेत्याह प्रश्नोत्तराभ्यां–**अथेत्यादिना** । विशेषास्तित्वलाभायैव च स्याच्छब्दप्रयोगः, एवञ्चैकस्यास्तित्वविशेषस्यायोगे व्यवच्छिन्नेऽन्यस्यास्तित्वविशेषस्यायोगोऽस्त्येव तत्प्रतिपादकतया च स्यान्नास्तीति द्वितीयभङ्गोऽप्युपपद्यत इति प्रपञ्चयति–**ततश्चेति** । **तत्कारिणः** स्यात्पदप्रयोगकारिणः । **तद्द्वेषिणः** स्याद्वादद्वेषिण । स्याद्वादद्वेषस्तु दौर्जन्यादेवेत्याह–**जगतीति** । अन्ययोगव्यवच्छेदात्यन्तायोगव्यवच्छेदयोरपि स्याद्वादमुखनिरीक्षणेनैव सङ्गतत्वमित्यावेदयितुमाह–**यत्रापीति** । **तत्रापि** अन्ययोगव्यवच्छेदेऽपि । अन्यस्मिन् यो योगः स योगविशेष एवाभिमतः, स एव व्यवच्छिद्यते । **यादृग्** यादृशविशेषधर्मविशिष्टा यादृशसम्बन्धोपरक्ता च, तेन सामान्यधर्मेण कालिकादिसम्बन्धेन च विशिष्टधनुर्धरत्वस्य पार्थभिन्ने योगेऽपि न क्षतिः । **अत्यन्तमयोग** इत्यस्य **नास्ति योग एव सर्वथा** इति विवरणम्, स व्यवच्छिद्यते इति पूरणीयम्, न त्वयोगसामान्यमेव व्यवच्छिद्यते योगवदयोगस्यापि कथञ्चिद्भावात् । अत्यन्तायोगव्यवच्छेदस्य तात्पर्यावलम्बनेन प्रकारान्तरेण विवरणमाह–**अथवेति** । **एवञ्च,** स्याद्वादसमाश्रयत एव अयोगव्यवच्छेदात्यन्तायोगव्यवच्छेदयोरुपपत्तावन्यथानुपपत्तौ च । **विकल्पद्वयेऽपि,** अयोगसामान्यस्य व्यवच्छेदोऽयोगविशेषस्य व्यवच्छेदो वेति विकल्पद्वयेऽपि । **प्राच्य एव प्रसङ्गः,** अयोगसामान्यव्यवच्छेदेऽयोगविशेषोऽव्यवच्छिन्न एव सर्वयोगविशेषस्वभाव एव स्यात्, अयोगविशेषव्यवच्छेदेऽयोगसामान्यमव्यवच्छिन्नमेव स्यात्, एवं सत्ययोगसामान्यस्वरूपप्रविष्टतया सर्वस्याप्ययोगविशेषस्याव्यवच्छेदे अयोगविशेषोऽपि कथं व्यवच्छिद्यत इत्यादिरूप, अयोगसामान्यायोगविशेषोभयव्यवच्छेदे तु कथञ्चिदयोगविशेषो नास्ति कथञ्चिदस्तीत्यायातः स्याद्वाद इत्यत्राप्येकान्तवादिनोऽवधारणं विफलमेवेति । इदानीमाद्यभङ्गद्वयसङ्गमनां प्रस्तुतामधिकरोति–**प्रकृतमनुस्रियत इति** । उक्तयुक्त्याऽस्तित्वस्य सामान्यरूपत्वं विशेषरूपत्वञ्च, तत्र सामान्यस्य प्राधान्यविवक्षणे सति सामान्यास्तित्वेनास्त्यात्मा इति प्रथमभङ्गार्थः, विशेषास्तित्वेन नास्त्यात्मेति द्वितीयभङ्गार्थ इत्याह–**सर्वथेति** । **प्रकारवत्**, विभागवत् । स्वद्रव्यक्षेत्रकालभावैरस्तित्वमाश्रित्य प्रथमभङ्ग परद्रव्यक्षेत्रकालभावैर्नास्तित्वमुररीकृत्य द्वितीयभङ्ग इत्युपदर्शयति–**तथेत्यादिना** । स्वद्रव्यादिनाऽस्तित्वे

नास्त्यात्मा—स्यादस्ति स्यान्नास्तीति, तथा यदस्ति तन्नियमेन द्रव्यक्षेत्रकालभावरूपेणैवात्मलाभं लभते, यथा—आत्मा जीवद्रव्यतया, क्षेत्रत इह क्षेत्रतया, कालतो वर्तमानकालसम्बन्धितया, भावतो ज्ञान-दर्शनोपयोगमनुष्यगतितयेति प्रतिपादिते गम्यत इदम्—द्रव्यक्षेत्रकालभावान्तरसम्बन्धितया नास्त्यात्मा । यदि च सर्वद्रव्यतयाऽऽत्मा स्याद् आत्मैवासौ न भवेत्, द्रव्यत्ववत् सर्ववृत्तितया वा तद्रूपतया च, सर्वकालसम्बन्धित्वाद् व्योमवद्, मनुष्यभावे वा समस्तनारकादिभावप्रसङ्ग एकान्तवादिनाम्, अतो-ऽवश्यं स्वद्रव्यादित्वेनैवास्तित्वमभ्युपेयम्, नान्यद्रव्यादित्वेन । ततश्च स्वैरस्तित्वात् परैश्च नास्तित्वात् स्यादस्ति स्यान्नास्तीति, स्वपरमात्रभावाभावोभयाधीनत्वादात्मास्तित्वस्य, यथैव स्वास्तित्वादस्तीत्युच्यते, तथैव परनास्तित्वान्नास्तीत्यपि वाच्यम्, न च प्रकारान्तरमस्ति किञ्चिदेकान्तवादिनां यदाश्रयणेना-वष्टम्भो दृढप्रतिबन्धः स्यादिति नास्तित्वमस्तित्वानपेक्षमत्यन्तशून्यं वस्तु प्रतिपादयेदन्वयाप्रतिलम्भाद् अस्तित्वमपि नास्तित्वानपेक्षं सर्वरूपं वस्तु गमयेत् व्यतिरेकाप्रतिलम्भात्, न च सता सर्वाभावरूपेण सकलभावरूपेण वा भूयते, अतः सर्वदाऽस्तित्वं नास्तित्वसापेक्षं नास्तित्वं चास्तित्वापेक्षमेवात्मलाभ-

---

प्रतिपादिते सति परद्रव्यादिना नास्तित्वं प्रतिपादितमेव भवतीत्येतदेकत्र दृष्टान्ते प्रदर्शनमुखेनाविष्करोति—**यथे**त्यादिना । **जीवद्रव्यतये**ति, अस्तीति दृश्यम् । एवमिह**क्षेत्रतये**त्यादावपि । **द्रव्यक्षेत्रकालभावान्तरे**त्यत्रोत्तरान्तरपदेन सह द्रव्यादिपदाना प्रत्येकं सम्बन्धः, ततश्च द्रव्यान्तरक्षेत्रान्तरकालान्तरभावान्तरसम्बन्धितयेत्यर्थः । एवमनभ्युपगच्छतामेकान्त-वादिनामनिष्टमापादयति—**यदि चे**त्यादिना । तत्र सर्वद्रव्यसम्बन्धितयाऽस्तित्वाभ्युपगमे दण्डमाह—**सर्वद्रव्यतयेति** । सर्वक्षेत्रसम्बन्धितयाऽस्तित्वाभ्युपगमेऽपि द्रव्यत्ववदात्मैवासौ न भवेदिति प्रसङ्गोऽवतिष्ठत एवेत्याह—**सर्ववृत्तितया वेति** । **तद्रूपतया चे**त्यपि पूर्वान्वय्येव । सर्वकालसम्बन्धितयाऽस्तित्वेऽपि स्वस्वरूपाभावप्रसङ्ग एव दोष इत्याह—**सर्वकाल-सम्बन्धित्वादिति** । **व्योमवदि**ति, यथा सर्वकालसम्बन्धिनो व्योम्नो नात्मत्वं तथाऽऽत्मनोऽपीति, अथवा **तद्रूपतया चे**त्युत्तरान्वयि, द्रव्यरूपतया सर्वकालसम्बन्धित्वाद्व्योमवदात्मत्वं न स्यादित्यर्थः । न च नित्यत्वेन व्योम्नः सर्वकालसम्ब-न्धित्वं स्वस्वरूपत एव न तु द्रव्यत्वरूपतया, एवं च यथा सर्वकालसम्बन्धित्वेऽपि व्योम्नो व्योमस्वभावत्वं तथाऽऽत्मनोऽपि नित्यत्वेन स्वस्वरूपत एव सर्वकालसम्बन्धित्वेऽप्यात्मभावः स्यादेवेति वाच्यम्, यतः कालस्यापि सम्बन्धिभेदेन भेदस्याव-श्यकतया नित्यस्याप्याकाशादेः स्वसम्बन्धिष्वेवातीतानागतवर्त्तमानकालेषु सम्बन्धित्वं तद्भावेनैव चाकाशादित्वं तथात्मनोऽपि स्वीयातीतानागतवर्त्तमानकालसम्बन्धित्वेनैव नित्यत्वमात्मत्वञ्चेति द्रव्यत्वरूपतयैव सर्वकालसम्बन्धित्वस्याकाशादावभ्युपगन्तव्य-तायामाकाशत्वाद्यभावः स्यादेवेति । सर्वभावेनास्तित्वे जीवस्य मनुष्यभावे वर्त्तमानस्य नारकादिभावप्रसङ्ग इत्याह—**मनुष्यभावे वेति** । एवञ्च स्वद्रव्यादिनैवास्तित्वमभ्युपेयमित्युपसंहरति—**अत इति** । एवं सति आद्यभङ्गद्वयं निराबाधतयोपतिष्ठत इत्याह—**ततश्चेति** । एतदेवोपपादयन्नाह—**स्वपरेति**, स्वभावाश्रितं यथाऽस्तित्वं तथा पराभावाश्रितमपीति, तत्र यत्स्वभावाश्रितमस्तित्वं तदुपादानेन स्यादस्तीति, यच्च पराभावाश्रितमस्तित्वं तन्नास्तित्वपर्यवसितमेव तदुपादानेन स्यान्नास्तीति । एतदेव स्पष्टयति—**यथै-वेति** । ननु न स्वरूपेण नापि पररूपेणास्तित्वमस्तिना प्रतिपाद्यते किन्तु सामान्यत एवास्तित्वमस्तिनोपनेयम्, तत्र क्वावकाशः स्याद्वादस्येत्यत आह—**न च प्रकारान्तरमस्तीति**, सामान्यस्य विशेषविनिर्मुक्तस्याभावाद्विशेषस्य चोक्तप्रकारद्वयरूपतयैव व्यव-स्थितेरित्यभिसन्धिः । **अवष्टम्भ** एकान्तनिर्भरः । **दृढप्रतिबन्धः**, दृढनियमः, अवश्यम्भावीति यावत् । एवञ्चैकान्तास्तित्वेन एकान्तनास्तित्वेन चाभ्युपगतमात्मादिवस्त्ववस्त्वेवैकान्तवादिनामित्याह—**नास्तित्वेति** । **अन्वयाप्रतिलम्भात्** सर्वथा नास्तित्वे अस्तित्वस्य केनापि रूपेण भावाभावेनान्वयस्य विधिरूपस्यानवाप्तेः, तथा च सर्वशून्यताप्रसङ्गः । सर्वथाऽस्तित्वमपि न कान्तमि-त्याह—**अस्तित्वमपीति** । **व्यतिरेकाप्रतिलम्भात्**, व्यतिरेकस्य केनापि रूपेण नास्तित्वस्याभावात् । नन्वस्तु सर्वथा नास्तित्वमेव सर्वथाऽस्तित्वमेव वा किन्नश्छिन्नमित्यत आह—**न च सतेति** । तथा चानुभवबाधो व्यवहारबाधश्चात्र, तौ यदि नैकान्तवादिप्रतिकूलौ तदैकान्तकदाग्रहग्रहिलाना नास्तिकोऽपि प्रामाणिकः प्रतिद्वन्द्वीति । यदनुभवव्यवहारावाश्रयणीयावेव व्यव-हारवर्त्तिना परीक्षकेणापि तदा स्याद्वाद एवानुशीलनीय इत्याह—**अत इति** । **एवञ्च** नास्तित्वास्तित्वयोरस्तित्वनास्तित्वसापेक्षत्वे

मासादयति, एवं चात्मनि नाप्रसक्ता घटादिसत्ता निषिध्यते अर्थात् प्रकरणाद् वा, घटादिसत्तानिषेधश्चात्मनो धर्मस्तदधीनत्वादात्मस्वभावस्य, स एव च परेण विशेष्यमाणत्वात् परपर्याय उच्यते, गव्यनश्वत्ववत्, आत्मना विशेष्यमाणत्वादात्मपर्यायः, स्वपरविशेषणायत्तं हि वस्तुस्वरूपप्रकाशनम्, अनेकान्तवादे च स्यादस्त्यात्मेत्यादिभिः सप्तभिर्वाक्यैरभिधीयते वस्तु प्रत्येकक्रियापदप्रयोगेणार्थपरिसमाप्तेः, आत्मेति द्रव्यवाची विशेष्यत्वात्, अस्तीति गुणाभिधायी विशेषणत्वात्, शब्दशक्तिस्वाभाव्याच्च तथा प्रतीतेः, बुद्ध्यारूढस्योपचरितसत्ताकस्य मुख्यसत्त्वविशेषणत्वेनोपात्तस्य धर्मिण उपादानादसत्त्वे इव ।

---

च । अस्तीत्यनेन सर्वप्रकारास्तित्वप्राप्तौ घटत्वरूपेणास्तित्वस्याप्यात्मनि प्रसक्तौ तदपोहाय नास्त्यात्मेत्युक्तिर्नाप्रसक्तनिषेधबोधिकेति एकान्तवादिनो मतमयुक्तम्, यतः सर्वप्रकारास्तित्वस्यात्मन्यसम्भवेन तदाश्रयणेन प्रथमभङ्गानुपपत्त्या स्यात्कारलाञ्छितस्यैव तस्य सम्भवेन तत्र स्वद्रव्यादिनैवास्तित्वस्य सम्प्रतिपत्तिर्न परद्रव्यादिनाऽस्तित्वस्येति घटत्वादिनाऽस्तित्वमप्रसक्तमेव, अप्रसक्तस्य च निषेधो न सम्भवतीति न तत्प्रतिपादको नास्त्यात्मेति, किन्तु यथा स्वद्रव्यादिनाऽस्तित्वमात्मनस्तथा परद्रव्यादिना नास्तित्वमपि तमन्तरेण स्वद्रव्यादिनाऽस्तित्वस्यैवाघटमानकत्वादिति तत्प्रतिपादनाय स्यान्नास्त्यात्मेति द्वितीयभङ्गो युक्त इत्याह-**आत्मनीति** । अर्थात्प्रकरणाद्वाऽप्रसक्ता घटादिसत्ता द्वितीयभङ्गेन न निषिध्यते, कुत· स्यादस्त्यात्मेत्यनेन प्रथमभङ्गेनाप्रसक्तस्य घटादिना सत्त्वस्य निषेधासम्भवात्, कि तर्हि द्वितीयभङ्गेन प्रतिपाद्यते इत्यपेक्षायामाह-**घटादिसत्तानिषेधश्चेति** । यदि च घटादिसत्ताऽप्राप्तैव तर्हि यथा तन्निषेधे न द्वितीयभङ्गतात्पर्यं तथा विधिरूपे आत्मनि निषेधरूपताया असम्भवादेव न तत्प्रतिपादनेऽपि तात्पर्यं तस्य घटत इत्यत आह-**तदधीनत्वादिति** । न विधिरूप एवात्मा, किन्तु अनन्तधर्मात्मकस्य तस्य विधिरूपत्ववन्निषेधरूपत्वमपि, तयोस्समकक्षत्वेनोभयोः प्रतिपादने सत्येवात्मस्वरूपं प्रतिपादितम्भवतीति प्रथमभङ्गेन विधिप्रतिपादनवत् द्वितीयभङ्गेन निषेधप्रतिपादनमपि युक्तमेवेति । स्वद्रव्यादिनाऽस्तित्ववत्परद्रव्यादिना नास्तित्वस्याप्यात्मधर्मत्वे तस्यैवास्यापि स्वपर्यायत्वमेव युक्तमिति कथमस्य परपर्यायत्वोपवर्णनं क्वचित्सङ्गमित्यत आह-**स एव चेति,** नास्तित्वमेव च परेण घटत्वादिनाऽवच्छेद्यतया विशेष्यमाणत्वात्-परिच्छिद्यमानत्वात् परपर्याय उच्यत इत्यर्थ· । एवं तर्हि तस्यात्मपर्यायत्वं कथं स्वपर्यायस्य परपर्यायत्वाभाववत्, परपार्यायस्यापि स्वपर्यायत्वासम्भवादित्यत आह-**आत्मनेति,** विशेष्यमाणत्वाद् आधाराधेयभावेन आत्मन इदमित्येवं परिच्छिद्यमानत्वाद् आत्मपर्याय उच्यत इत्यर्थः । एकस्य स्वपरपर्यायोभयोपगमे निमित्तमाह-**स्वपरविशेषणायत्तं हीति,** आत्मनः स्वद्रव्यादिना यदस्तित्वं यच्च परद्रव्यादिना नास्तित्वं तदुभयमपि वस्तुस्थित्या स्वपर्यायस्वरूपमेव, कल्पनया त्वनयोस्स्वपरपर्यायरूपता, वस्तुत आत्मभिन्नघटादिगतास्तित्वनास्तित्वादिधर्मस्यैव स्वाश्रयभिन्नत्वादिपरम्परासम्बन्धेनात्मसम्बन्धिन· परपर्यायत्वं साक्षात्सम्बन्धेन च सर्वस्यापि धर्मस्य विधिरूपनिषेधरूपान्यतरात्मकस्य स्वपर्यायत्वमेवेति बोध्यम् । एवमेकान्तवादप्रतिक्षेपेणानेकान्तवादस्योपयोगं प्रथमद्वितीयभङ्गयोरुपदर्श्य तत्र सप्तभिरेव वाक्यैस्सम्पूर्णार्थबोध इत्युपदर्शयितुमाह-**अनेकान्तवादे चेति** । स्यादितिनिपातस्यानेकान्तावबोधकस्यासिधातुप्रकृतिकप्रथमपुरुषाख्यातप्रत्ययनिष्पन्नस्यादित्याकारकक्रियापदप्रतिरूपकत्वेन क्रियापदत्वमुपचर्य तद्घटितत्वेन सप्तसु वाक्येषु प्रत्येकं क्रियापदप्रयोगोऽस्तीत्यभिसन्धानेनाह-**प्रत्येकक्रियापदप्रयोगेणेति** । स्यादस्त्यात्मेत्यादिवाक्ये यस्य पदस्य यदर्थपरत्वं तदुपदर्शयति-**आत्मेतीति,** स्यादस्त्यात्मेति वाक्ये आत्मनः विशेष्यत्वेन द्रव्यत्वम् अस्तीति प्रतिपादितस्यास्तित्वस्य विशेषणत्वेन गुणत्वम् । विशेषणविशेष्यभावेनैव प्रतिपत्तिरिति कुत इत्यपेक्षायामाह-**शब्दशक्तीति,** शब्दस्य साकाङ्क्षस्य विशेषणविशेष्यभावेनैवावबोधकत्वसामर्थ्यं शब्दशक्ति· तत्स्वाभाव्यादित्यर्थ । **तथा प्रतीतेरिति,** आत्मनो विशेष्यतया अस्तित्वस्य च विशेषणतया प्रतीतेरित्यर्थ· । यद्यात्मेति विशेष्यं नोपात्तं स्यात् तदाऽस्तीत्यस्य गुणाभिधायकत्वाभावेन विशेषणपदत्वमपि न स्यात्; प्रकृते च नैवमित्याशयः । ननु सत्त्वविनिर्मुक्त आत्मैव नास्ति कस्य विशेष्यत्वम् ?, सत्त्वयुक्तस्यात्मनो विशेष्यत्वे चात्मपदादेव विशेष्यस्वरूपप्रविष्टतया सत्त्वस्यावबोधनादनर्थकमस्ति पदोपादनम्, अन्वयोऽपि च न सम्भवति नहि स्वविशिष्टे स्वस्यान्वय इत्यत-**बुद्ध्यारूढस्येति** यद्यपि अस्तित्वविशिष्ट एव आत्मा न त्वस्तित्वविनिर्मुक्तस्तथाऽपि बुद्ध्या अस्तित्वात्पृथगात्मतामारोपितस्येत्यर्थ· । एवस्वरूपस्य सत्तोपचरितैव प्रक्लृप्या, उपचारश्च सत्तायास्तदानीमपि कर्त्तव्य एव, अन्यथाऽसतस्तस्य शशशृङ्गस्येव विशेष्यत्वासम्भवादित्याह-**उपचरितसत्ताकस्येति** । उपचारादपि सत्ता विशेषणतया प्राप्तैव, तथाप्यस्तीत्यनेन मुख्यसत्त्वप्रतिपादनमभिमतम्, तस्य न गतार्थतेत्याह-

स्याच्छब्दस्तु द्रव्यधर्मलिङ्गसङ्ख्याभेदवियुक्तत्वादसिप्रकृतिविध्यादिविषयसद्विभक्तिप्रथमपुरुषैकवचनान्तप्रतिरूपको निपातो विधिविचारणास्तित्वविवादानेकान्तसंशयाद्यर्थवृत्तिः, तस्य चानेकान्तावद्योतनमेवार्थो विवक्षितः, केवलस्य च सामान्यविषयत्वावद्योतकत्वाद् विवक्षितार्थप्रतिपादनाय द्रव्यधर्मविशेषोपादानं तन्नान्तरीयकत्वात्, निपातानां चापरिमितत्वादनेकान्तद्योतकतया विवक्षितत्वादिति, स्याच्छब्देनानेकान्ताभिधानादाक्षेपेऽपि सप्तभङ्ग्याः पुनर्भेदेनोपादानं विशिष्टार्थप्रतिपादनाय, यथा—वृक्षशब्देन सामान्यविषयेणाक्षेपेऽपि धवादीनां विशेषप्रतिपिपादयिषया धवादिशब्दोपादानम् एवमेतदपि दृश्यम्, भेदाप्रतिपत्तेर्विवक्षितभेदप्रतिपादनाय भेदपरिमाणनियमाभिधानाय वा सामान्यलक्षणप्रपञ्चव्याख्यानाय वा संक्षेपव्यासाभिधानम्, तत्रास्तित्वनास्तित्वैकान्तनिवारणाय प्रथमद्वितीयौ एकान्तरूपस्यार्थस्यावस्तुत्वादिति । तृतीयविकल्पाभिधित्सया भाष्यकृदाह—

---

**मुख्यसत्त्वेति**, मुख्यसत्त्वं विशेषणं यस्य तन्मुख्यसत्त्वविशेषणं तत्त्वेनेत्यर्थः । **धर्मिण** आत्मनः । **उपादानात्**, आत्मेतिपदेन पृथगुपदर्शनात्, अस्तिपदप्रतिपाद्यस्यास्तित्वगुणस्य विशेषणतया प्रतीतेरित्यर्थः । असत आत्मनो विशेष्यत्वे परस्य नास्त्यात्मेत्यत्रासत्त्वे यथा विशेषणतया प्रतीतिरित्याह—**असत्त्व इवेति** । उपात्तस्य स्याच्छब्दस्य किं स्वरूपम्? तत्कथं निष्पन्नम्?, अर्थाश्च तस्य कतिविधाः?, कमर्थमाश्रित्य प्रकृते तस्य प्रयोग इत्यादिजिज्ञासोपशान्तये आह—**स्याच्छब्दस्त्विति** । **तस्य च**, दर्शितानेकार्थकस्य स्याच्छब्दस्य पुनः । अनेकान्तार्थत्वं स्याच्छब्दस्य न वाचकतया किन्तु द्योतकतयैवेत्यावेदनायोक्तम्—**अनेकान्तावद्योतनमेवेति** । **अर्थः**, द्योत्यत्वेनाभिधेयः । ननु स्यात्पदेनैवानेकान्तावद्योतने अस्तित्वादिधर्मविशेषोपादानमफलम्, सर्वस्यापि धर्मस्यानेकान्तस्वरूपनिविष्टत्वादित्यत आह—**केवलस्य चेति** । स्यात्पदस्येति दृश्यम् । **विवक्षितार्थप्रतिपादनायेति**, सत्त्वादिविशेषधर्मविशिष्टतयाऽर्थप्रतिपादनायेत्यर्थः । **तन्नान्तरीयकत्वात्**, विशेषधर्मेणास्तित्वाद्यनेकान्तस्य सामान्यतोऽनेकान्तत्वव्याप्यत्वात् । कथं च स्यादित्यस्य निपातत्वमनेकान्तद्योतकत्वञ्चेत्यपेक्षायामाह—**निपातानामिति**, नहि परिमिता एव शब्दा निपात्यन्ते येन परिगणितानां तेषाम्मध्येऽपठितत्वात्स्यात्पदस्य निपातत्वं न स्यात् यदा च निपाता अपरिमितास्तदा यथा उभयसम्प्रतिपन्नः कश्चिच्छब्दो निपातनान्निष्पन्नो निपातस्तथा स्याच्छब्दोऽपि, यदा चैतावत्स्वेवार्थेषु शब्दा निपात्यन्त इति नियमो नास्ति तदा यथा कस्यचिच्छब्दस्य प्रतिनियत एवार्थेऽमुकस्मिन्निपातस्तथा स्याच्छब्दस्याप्यनेकान्तरूप एवार्थे निपात इति भवति स्याच्छब्दस्यानेकान्तावद्योतकत्वम् । स्याच्छब्दस्यानेकान्तावद्योतकत्वे एकेनैव स्याच्छब्देन तद्घटितेनैकेनैव भङ्गेन वा सर्वधर्माणामवगतौ सप्तभङ्गी किमर्थं प्रयोक्तव्येत्यपेक्षायामाह—**स्याच्छब्देनेति** । **आक्षेपेऽपि**, एकधर्मप्रतिपादनमुखेन सकलादेशमहिम्ना कालादिभिरष्टभिरभेदवृत्त्यभेदोपचाराभ्यां सकलधर्मप्रतिपादनेऽपि, अथवा स्याच्छब्दद्योतितानेकान्तत्वान्यथानुपपत्त्या सकलधर्मावबोधप्राप्तावपि । तावता सामान्यत एव धर्माणामवगमेऽपि प्रातिस्विकविशेषधर्मेण प्रतिनियतस्वस्वनिमित्तापेक्षवृत्तिकेनावगमाय सप्तभङ्गी पर्युपासयितव्येति । सामान्यतो ज्ञातेऽपि वस्तुनि विशेषतोऽवगमनाय शब्दान्तरप्रयोगे दृष्टान्तमाह—**यथेति**, सामान्यरूपेण सकलधर्मावगताघपि कति ते धर्मा इति न ज्ञायन्ते, किंस्वरूपाश्च ते इत्यपि न ज्ञायन्ते, एतावन्त एवं ते विधिनिषेधविवक्षातः प्राप्यन्त इत्यपि नावधार्यन्ते, सामान्यलक्षणप्रपञ्चनमपि न व्याख्यातं भवतीत्येतदर्थं सप्तभङ्गीप्रयोग आवश्यक इत्याह—**भेदाप्रतिपत्तेरित्यादिना**, स्यादित्यनेन सामान्यतोऽनेकान्तावद्योतकेन भेदाप्रतिपत्तेः, भेदस्य धर्माणामन्योन्यभेदस्याप्रतिपत्तेः । **विवक्षितभेदप्रतिपादनायेति**, कथञ्चिदस्तित्वकथञ्चिन्नास्तित्वादिसप्तविधधर्मप्रतिपादनायेत्यर्थः । **भेदपरिमाणनियमाभिधानायेति**, अस्तित्वधर्मस्यैकस्य विधिनिषेधकल्पनया सप्तैव धर्माः, एवं नित्यत्वादेरपि, नाष्टौ षडादिर्वेति यो भेदपरिमाणनियमस्तदवबोधायेत्यर्थः । एवंरीत्या स्यादस्ति स्यान्नास्तीत्यादिसप्तभङ्गीप्रयोगस्यावश्यकत्वम्, तथा स्वद्रव्यादिनाऽस्ति परद्रव्यादिना नास्तीत्यादिना विशेषरूपेण सप्तभङ्ग्याः प्रयोगोऽप्यावश्यक इत्याह—**सामान्यलक्षणेति**, सामान्यस्वरूपस्य यः प्रपञ्चः विशेषरूपस्तद्व्याख्यानाय चेत्यर्थः, सामान्यसप्तभङ्गी व्याख्येया तद्व्याख्यानरूपैव विशेषसप्तभङ्गी अवगतिसौष्ठवायेति भावः । एवं सामान्यतः विशेषतश्च सप्तभङ्गीमुपपाद्य तद्घटकाद्यभङ्गादेः प्रयोजनमुपदर्शयति—**तत्रेति**, सप्तभङ्ग्यामित्यर्थः । निवारणं च स्यात्पदप्रयोगेण निर्वहति, किमर्थं च तन्निवारणमित्यपेक्षायामाह—**एकान्तरूपस्येति**, तथा च तन्निवारणफल-

**[भाष्यम्-] अर्पितेऽनुपनीते न वाच्यं-सदित्यसदिति वा ।**

युगपदात्मन्यस्तित्वनास्तित्वधर्माभ्याम**र्पिते** विवक्षिते क्रमेण **चानुपनीते** क्रमेणाभिधातुमविवक्षिते **वाच्यं** न जातुचित् **सदा**त्मतत्त्वम**सदा**त्मतत्त्व**मिति वा ।** वाशब्दो विकल्पार्थः, अर्पितं विशेष्यते, कीदृशेऽर्पिते ? अनुपनीते, कथमनुपनीते ? सामर्थ्यात् क्रमेणाविशेषिते, क्रमेण त्वर्पणे प्राच्यविकल्पावेव स्याताम्, अतोऽवश्यंतया युगपदभिन्ने काले द्वाभ्यां गुणाभ्यामेकस्यैवार्थस्याभिन्नस्य प्रतियोगिभ्यामभेदरूपेणैकेन शब्देनावधारणात्मकाभ्यां वक्तुमिष्टत्वादवाच्यम्, तद्विधस्यार्थस्य शब्दस्य चाभावात्, अयं च विकल्पस्तत्त्वान्यत्वसत्त्वासम्भवात् किलावक्तव्यमेवेत्येवंविधैकान्तव्यावर्तनार्थः—स्यादवक्तव्य एवात्मा, अवक्तव्यशब्देनान्यैश्च षड्भिर्वचनैर्द्रव्यपर्यायविशेषैश्च वक्तव्य एव, अन्यथा सर्वप्रकारावक्तव्यतायामवक्तव्यादिशब्दैरप्यवाच्यत्वादनुपाख्यः स्यात्, अतीतविकल्पद्वयं त्वेकान्तास्तित्वैकान्तनास्तित्वप्रतिपक्षनिराकरणद्वारेण स्यादस्ति स्यान्नास्तीति स्वपरपर्यायान्यतरैकधर्मसम्बन्धार्पणात् कालभेदेनोक्तम्, अधुना युगपद् विरुद्धधर्मद्वयसम्बन्धार्पितस्य च वस्तुरूपस्याभिधानात् कीदृशः शब्दप्रयोगो भवतीति ?, उच्यते—न खलु तादृशः शब्दोऽस्ति यस्तादृशीं विवक्षां प्रतिपूरयेत्, यतोऽर्थान्तरवृत्तैः पर्यायैरवर्तमानमननुभवंस्तान् पर्यायान् द्रव्यं ब्रवीतीत्येका विवक्षा, अपरा तु विवक्षा निजैः पर्यायैः स्वात्मनि वृत्तैर्वर्तमानमनुभवन् स्वान् पर्यायान् द्रव्यमभिदधातीति, एवमे-

कस्यात्पदप्रयोगाभावे तज्जनितज्ञानमवस्तुविषयत्वाद् भ्रम एव स्यादिति । स्यादवक्तव्य इति तृतीयभङ्गप्ररूपणा क्रमप्राप्तामधिकरोति-**तृतीयेति** । **अर्पित** इत्यादि भाष्यं विवृणोति-**युगपदि**त्यादिना । **अनुपनीत** इत्यस्य प्रयोजनमाह-**क्रमेण त्वर्पण** इति । **प्राच्यविकल्पौ**, स्यादस्ति स्यान्नास्तीति भङ्गौ । कथमवाच्यमित्यपेक्षायामाह-**तद्विधस्येति** । **अर्थस्य** शब्दजन्योपस्थितिविषयस्य, तस्य तेनैव रूपेणाभावो न तु सर्वथा, तथा शशशृङ्गकल्पस्य तस्य तथाविवक्षाविषयत्वमपि न स्यात्सर्वधर्मानाक्रान्तेरिति बोध्यम् । तृतीयविकल्पप्रयोजनमाह-**अयञ्च विकल्प** इति, अनिर्वचनीयवादिना यथा बाध्यत्वात् घटादीनां सत्त्वं न सम्भवति तथा व्यवहारपथावतीर्णत्वादसत्त्वमपि न सम्भवति, अतस्सत्त्वासत्त्वोभयविकलत्वादेकान्तेनावक्तव्यत्वं घटादीनाम्, तद्व्यवच्छेदार्थकस्तृतीयभङ्गः । **तत्त्वान्यत्वे**त्यत्र सत्त्वान्यत्वेति पाठो युक्तः, सत्त्वेन रूपेण तदन्यत्वात्मकासत्त्वेन रूपेण सत्त्वासम्भवादवक्तव्यं जगदित्येवंविधो य **एकान्त** एकान्तानिर्वचनीयवादस्तद्व्यावर्त्तनार्थ इत्यर्थः, तृतीयभङ्गस्य स्यात्कारलाञ्छितस्य कथञ्चिदवक्तव्यत्वमर्थः, तथा च तेन सर्वथाऽवक्तव्यत्वेऽपाकृते युगपत्सत्त्वासत्त्वविवक्षाविषयोऽप्यर्थः केनचिच्छब्देन वक्तव्यो भवति, अन्यथाऽवक्तव्यशब्देनाप्यभिधानं न स्यादित्यर्थः । केन शब्देन वक्तव्य इत्यपेक्षायामाह-**अवक्तव्यशब्देनेति** । य एवार्थः तृतीयभङ्गविषयतया विवक्षितः स एवार्थः प्रथमादिभङ्गविषय इति कृत्वा तत्तद्भङ्गैः षड्भिर्वक्तव्य एवेत्याह-**अन्यैश्चेति**, अयं च षड्भिर्वचनैरित्यत्र **द्रव्यपर्यायविशेषैश्चे**त्यत्रान्वेति । तृतीयभङ्गविषयतया विवक्षितस्य सर्वथाऽवक्तव्यत्वमेव कुतो नाभ्युपगम्यत इत्यत आह-**अन्यथेति**, अस्यैव व्याख्यानम्-**सर्वप्रकारावक्तव्यतायामिति** । **अतीतविकल्पद्वयं** स्यादस्ति स्यान्नास्तीति भङ्गद्वयम् । **एकान्तास्तित्वैकान्तनास्तित्वप्रतिपक्षेति**, एकान्तास्तित्वं यत्कथञ्चिदस्तित्वस्य प्रतिपक्षः, यच्चैकान्तनास्तित्वं कथञ्चिन्नास्तित्वस्य प्रतिपक्षस्तन्निराकरणद्वारेणेत्यर्थः । **स्वपरेति**, स्वपर्यायसम्बन्धार्पणात्स्यादस्तीत्युक्तं परपर्यायसम्बन्धार्पणात्स्यान्नास्तीत्युक्तं कालभेदेनेत्यर्थः । युगपदस्तित्वनास्तित्वोभयविवक्षायां तृतीयभङ्ग उपतिष्ठते, तत्प्रसाधनायाह-**अधुनेति** । **कीदृश** इति, नास्ति कोऽपि तादृशः शब्दो यमुपादाय तृतीयो भङ्गः ख्याप्येत इति प्रश्नाभिप्रायः । विशेषतस्तादृशविवक्षापूरकशब्दाभावे सति तथाविवक्षायामवक्तव्य एवार्थो भवतीत्यवक्तव्यशब्दमुपादाय तृतीयभङ्ग आत्मानं लभत एवेत्याह-**उच्यत इति** । परद्रव्यादिना नास्तित्वविवक्षा, स्वद्रव्यादिनाऽस्तित्वविवक्षेति युगपदुभयविवक्षा, तत्र पूर्वविवक्षया परद्रव्यादिगतपर्यायैरवर्त्तमानं परद्रव्यादिगतपर्यायाननुभवद्द्रव्यं विवक्ष्यते, द्वितीयविवक्षया स्वगतपर्यायैर्वर्त्तमानं स्वगतपर्यायाननुभवद्द्रव्यं विवक्ष्यते, तत्र येन पदेन परपर्यायेणासन्नर्थः कथ्यते तेन पदेन सामर्थ्याभावात्स्वपर्यायेण सन्नर्थः कथं कथ्येत, येन च पदेन स्वपर्यायेण सन्नर्थः कथ्यते तेन पदेन सामर्थ्याभावात्परपर्यायेणा-

तयोर्विवक्षयोः परस्परविलक्षणत्वाद् विरुद्धत्वाच्च द्वाभ्यामपि युगपदादेशे पुरुषस्यैकस्यैकत्र द्रव्ये नास्ति सम्भवो वचनविशेषातीतत्वाच्चावक्तव्यं वाचकशब्दाभावात् । एतदुक्तं भवति—अस्तित्वनास्तित्वयोर्विरुद्धयोरेकत्राधिकरणे काले च सम्भव एव नास्तीत्यतस्तद्विधस्यार्थस्याभावात् तस्य वाचकः शब्दोऽपि नास्त्येवेति ॥ तथा कालाद्यभेदेन वर्तनं गुणानां युगपद्भावः, तच्च यौगपद्यमेकान्तवादे नास्ति, यतः कालात्मरूपार्थसम्बन्धोपकारगुणिदेशसंसर्गशब्दद्वारेण गुणानां वस्तुनि वृत्तिः स्यात्, तत्रैकान्तवादे-विरुद्धानां गुणानामेकस्मिन् काले न क्वचिदेकत्रात्मनि वृत्तिर्दृष्टा १ ॥ न जातुचित् प्रविभक्ते सदसत्त्वे स्त एकत्रात्मन्यसंसर्गरूपे येनात्मा तथोच्येत, ताभ्यां विविक्तश्च परस्परगुणानामात्मस्वभावो नान्योन्यात्मनि वर्तते, ततश्च नास्ति युगपदभेदेनाभिधानम् २ ॥ न चैकत्रार्थे विरुद्धाः सदसत्त्वादयो वर्तन्ते, यतोऽद्यभिन्नैकात्माधारत्वेनाभेदे सति सदसत्त्वे युगपदुच्येयाताम् ३ ॥ न च सम्बन्धाद् गुणानामभेदः, सम्बन्धस्य भिन्नत्वात्, छत्रदेवदत्तसम्बन्धाद्धि दण्डदेवदत्तसम्बन्धोऽन्यः, सम्बन्धिनोः कारणयोर्भिन्नत्वात्, न तावेकेन सम्बन्धेनाभिन्नावेव, सदसतोरात्मना सह सम्बन्धस्य भिन्नत्वात्, न सम्बन्धकृतं यौगपद्यमस्ति, तदभावाच्च नैकशब्दवाच्यत्वम् ४ ॥ न चोपकारकृतो गुणानामभेदः, यस्मान्नीलरक्ताद्युपकर्तृगुणाधीन उपकारः, ते च स्वरूपेण भिन्नाः सन्तो नीलनीलतररक्तरक्ततरादिना द्रव्यं रञ्जयन्ति विविक्तोपकारभाजः । एवं सदसत्त्वयोर्भेदात् सत्त्वेनोपरक्तं सत्, असत्त्वोपरक्तमसदिति दूरापेतमुपकारसारूप्यम्, यतस्तदभेदेन शब्दो वाचकः स्यादिति ५ ॥ नाप्येकदेशे गुणिन आत्मन उपकारः समस्ति, येनैकदेशोपकारेण सहभावो भवेत्, गुणगुणिनोरुपकारकोपकार्यत्वे नीलादिगुणः सकल उपकारकः समस्तश्च घटादिरुपकार्यः, न चैकदेशे गुणो गुणी वा, यतो देशसहभावात् कश्चित् शब्दो वाचकः कल्प्येत ६ ॥ न चैकान्तवादिनां सदसत्त्वयोः संसृष्टमनेकान्तात्मकं रूपमस्ति, अवधृतैकान्तरूपत्वात्, यथैव हि शबलरूपव्यतिरिक्तौ शुक्लकृष्णावसंसृष्टौ नैकस्मिन्नर्थे वर्तितुं समर्थौ, एवं

---

स्वर्थः कथं कथ्येत, तथा च तथाविवक्षायामवक्तव्यमेव द्रव्यमित्याह-**एवमेतयोरिति** । **वचनविशेषातीतत्वाद्**-त्यत्र वचनविशेषस्य तदतीतत्वादिति पाठो युक्तः । एतदेव ऋजुमतिप्रबोधनाय स्पष्टार्थकेन वचनेन विवृणोति-**एतदुक्तं भवतीति**, एतत्सर्वमेकान्तवादमधिकृत्य, सिद्धान्ते त्वपेक्षाभेदेनैकदाप्येकत्राधिकरणेऽस्तित्वनास्तित्वयोः सम्भवोऽस्त्येवेति नैतादृशार्थाभावः, किन्त्वेतादृशार्थाभिधानेऽवक्तव्यशब्दातिरिक्तः कोऽपि शब्दो न प्रगल्भतेऽवक्तव्यशब्दस्तु तादृशमर्थमभिधातुं प्रगल्भत एव, अत एव स्यादवक्तव्य इति स्याच्छब्दप्रयोग इति बोध्यम् । एकान्तवादे गुणानां यौगपद्यादिकमपि न सम्भवतीति प्रपञ्चत-उपदर्शयति-**तथेत्यादिना** । **तच्च** कालाद्यभेदेन वर्तनं च । **कालेत्यादि**, कालः १ आत्मरूपम् २ अर्थः ३ सम्बन्धः ४ उपकारः ५ गुणिदेशः ६ संसर्गः ७ शब्दः ८ इत्येवं कालाद्यष्टप्रकारेणाभेदतो गुणानां वर्तनं युगपदेकत्र द्रव्ये सम्भवत्यनेकान्तवादे, तत एव च सकलादेशोऽप्युपतिष्ठते । एकान्तवादे तु न तथासम्भव इत्याह-**तत्रैकान्तवाद इति**, कालेनाभेदवृत्तिरेकान्तवादे गुणानां न सम्भवतीति प्रथममुपदर्शयति-**विरुद्धानामित्यादिना** । आत्मा स्वभावस्तद्रूपेणाप्यभेदवृत्तिर्न गुणानां सम्भवतीत्याह-**न जातुचिदित्यादिना** । अर्थोऽधिकरणं तद्रूपेणाप्यभेदवृत्तिर्न सम्भवतीत्यावेदयति-**न चैकत्रार्थे इति** । सम्बन्धो भेदसहिष्णुरभेदस्तेनापि गुणानामभेदवृत्तिर्न सम्भवतीत्याह-**न च सम्बन्धादिति** । उपकारः स्वस्वरूपेणोपरक्तीकरणं तेनाप्यभेदो गुणानां नास्तीत्याह-**न चोपकारकृत इति** । **ते च** नीलरक्तादयश्च । सत्त्वासत्त्वयोर्नैकोपकारसम्भव इति स्पष्टयति-**एवं सदसत्त्वयोरिति** । **तदभेदेन** उपकाराभेदेन । गुणिदेशेनाप्यभेदवृत्तिर्गुणानां न सम्भवतीत्याह-**नाप्येकदेश इति** । संसर्गोऽभेदसहिष्णुर्भेदस्तेनापि गुणानामभेदो न घटत इत्याह-**न चैकान्तवादिनामिति** । शब्दरूपेणापि गुणानामभेदवृत्तिर्न घटत इत्याह-**नाप्येकशब्द**

सदसत्त्वाभ्यां संसर्गाभावान्न युगपदभिधानमस्ति ७ ॥ नाप्येकशब्दः शुद्धः समासजो वाक्यात्मको वाऽस्ति गुणद्वयस्य सहवाचकः, क्रमेण सदसच्छब्दयोः प्रयोगे यद्यसच्छब्दः सदसत्त्वे यौगपद्येन ब्रवीति, एवं तर्हि स्वार्थवत् सत्त्वमप्यसत् कुर्यात्, तथैव सच्छब्दोऽपि स्वार्थवदसदपि सत् कुर्यात्, विशेषशब्दत्वाच्च सदित्युक्ते नासदभिधीयते, न चासदित्युक्ते सदित्युक्तं भवति, अतो युगपदवाचक एकशब्दः । अथ युगपत् सदसच्छब्दौ गुणद्वयस्य वाचकाविष्येते, ततः समासवाक्यमाख्यातादिपदसमुदायवाक्यं वा भवेत्, तत्र च समासवाक्यं न वाचकम्, द्वन्द्वस्तावदुभयपदार्थप्रधानः प्लक्षन्यग्रोधवद् अस्त्यादिभिः क्रियाभिस्तुल्ययोगित्वात्, क्रियाश्रयत्वाच्च द्रव्यस्य प्राधान्यं न गुणत्वम्, यश्च गुणक्रियाशब्दानां द्वन्द्वो रूपरसादीनामुत्क्षेपणावक्षेपणादीनां च; तत्रापि गुणाः शब्दशक्तिस्वाभाव्याद् द्रव्यरूपा एवोच्यन्तेऽस्त्यादिक्रियायोगित्वात्, अन्यथा द्वन्द्वाभावात् । अत्र चात्मा विशेष्यद्रव्यं सदसतोर्गुणवचनत्वमतो गुणस्य गुण्यभेदोपचारेणाभिधानम्, सन्नात्माऽसन्नात्मेत्यतो न द्वन्द्वः । ननु च द्रव्येऽपि स्याद्वादोऽस्ति, न गुणविषय एव; यथा—स्याद् घटः स्यादघट इति, अत्रापि हि द्रव्यं गुणरूपोपपन्नमेवोच्यते, शब्दशक्तिस्वाभाव्याद् विशेषणविशेष्यभावापत्तेर्द्रव्यस्य विशेष्यत्वात्, स्याद् घट इदं वस्त्विति वाक्यं च वृत्तेरभिन्नार्थं केवलं विभक्तिश्रवणाद् रूपेण भिद्यते, अतो वाक्येनापि युगपत् प्रयोगासम्भवः । समानाधिकरणसमासवाक्यमपि न सम्भवति, तत्र हि द्रव्यगुणयोः सामान्यविशेषभावे सति द्रव्यशब्दतायां सामानाधिकरण्यं नीलोत्पलादिवत्, अत्र च सदसतोर्गुणत्वात् परस्परं भेदे

---

इति । **शुद्धः**, अखण्डः पदान्तरासमभिव्याहृतपदरूप इति यावत् । **समासजः** समासनिष्पन्नः समस्त इति यावत्, इदं च व्यासरूपस्य समासरूपस्य वा वाक्यस्य शक्तिमभ्युपेत्य, अन्यथा वाक्ये शक्तेरभावादेव गुणद्वयवाचकत्वं तत्र शङ्कितुमप्यशक्यमिति । समासस्य शक्तत्वपक्षे एकमेव समासपदमिति न तस्य वाक्यत्वमिति **वाक्यात्मक** इत्यस्य पदसमुदाय इत्यर्थः । एकशब्दस्य यौगपद्येन गुणद्वयवाचकत्वासम्भवं प्रपञ्चत उपदर्शयति—**क्रमेणेति** । **स्वार्थवत्**, असच्छब्दस्य स्वार्थोऽसत्त्वं तद्वदित्यर्थः । **स्वार्थवदिति**, सच्छब्दस्य स्वार्थः सत्त्वं तद्वदित्यर्थः । यद्येकस्य सच्छब्दस्यासच्छब्दस्य वा गुणद्वयवाचकत्वं स्यात्सामान्यशब्दत्वं तस्य स्यान्न चैवं विशेषशब्दत्वेन तयोरुररीकारादिति विशेषशब्दत्वान्न तयोः प्रत्येकं गुणद्वयवाचकत्वं यौगपद्येनेत्याह—**विशेषशब्दत्वाच्चेति** । समासरूपस्य व्यासरूपस्य वा सदसच्छब्दद्वयस्य मिलितस्य योगपद्येन गुणद्वयवाचकत्वं प्रतिक्षेप्तुमाह—**अथेति** । समासे तावदुभयपदार्थप्रधानद्वन्द्वसमासतामापन्नस्य सदसच्छब्दस्य न यौगपद्येन गुणद्वयवाचकत्वमित्युपदर्शयति—**द्वन्द्वस्तावदि**त्यादिना । द्वन्द्वसमासाभिधेयस्य क्रियायोगित्वेन द्रव्यत्वमेव न गुणत्वमिति नियम एव, तत्र द्रव्यवाचकप्लक्षन्यग्रोधरूपपदद्वन्द्वे तत्त्वमुपपादयति—**अस्त्यादिभिरिति** । गुणवाचकपदद्वन्द्वे क्रियावाचकपदद्वन्द्वे च समासाभिधेयस्य द्रव्यत्वमुपपादयति—**यश्च गुणक्रियाशब्दानां द्वन्द्व इति** । प्रकृते च द्रव्ये आत्मनि सदसत्त्वयोर्गुणतया प्राधान्येन युगपद्विवक्षितयोः प्रतिपादनपरस्य सदसच्छब्दस्य गुणवचनत्वमेव न द्रव्यवचनत्वमिति द्वन्द्वसमास एव न सम्भवतीत्याह—**अत्र चात्मेति** । ननु एकस्य प्रतिनियतद्रव्यात्मना स्वरूपविधौ स्याद्वादस्य द्रव्यद्वयाश्रयणेन सप्तभङ्गीरूपस्य प्रवृत्तौ द्रव्यवाचकपदद्वयस्य द्वन्द्वसमाससम्भवः स्यादिति शङ्कते—**ननु चेति** । यत्र चैकं वस्तु प्रतिनियतद्रव्यरूपेण विधीयते तत्र विधीयमानं द्रव्यमपि गुणरूपतयैवाश्रितमिति नैवं तत्रापि द्वन्द्वसमाससम्भव इति समाधत्ते—**अत्रापि हीति** । वाक्यरूपस्यापि शब्दस्य समाससमशीलत्वान्न यौगपद्येन गुणद्वयवाचकत्वमित्याह—**वाक्यं चेति** । **वृत्तेः** समासाद् अभिन्नार्थत्वे समासवाक्ययोः को भेद इत्यपेक्षायामाह—**केवलमिति** । कर्मधारयसमासस्यापि प्राधान्येन गुणद्वयवाचकत्वं न सम्भवतीत्याह—**समानाधिकरणेति** । **न सम्भवति**, प्रकृते गुणवाचिनोः सदसच्छब्दयोः कर्मधारयसमासो न सम्भवति तयोर्भेदेन सामानाधिकरण्याभावादित्यर्थः । **तत्र** समानाधिकरणसमासवाक्ये । **हि** यतः । **द्रव्येत्यादि**, द्रव्यस्य सामान्यत्वं गुणस्य विशेषत्वमित्येवं द्रव्यगुणयोः सामान्यविशेषभावे सति, द्रव्यवाचकशब्दस्येव गुणवाचकशब्दस्यापि द्रव्यशब्दतायां सत्याम्, **सामानाधिकरण्यं** विभिन्नप्रवृत्तिनिमित्तकत्वे सति एकार्थबोधकत्वं स्वप्रयोज्यविशेष्यतानिरूपिततादात्म्य-

सति न सामानाधिकरण्यमद्रव्यशब्दत्वात्, सामान्यविशेषरूपेणास्थितत्वान्नास्ति विशेषणविशेष्यसमानाधिकरणसमासः, कर्मधारयश्चार्थयोरिष्यते, न चान्यत् प्रतिपदविहितं समासलक्षणमस्ति, तस्मात् समासाभावाद् युगपत् प्रयोगाभावः, तद्वाक्येऽपि सामर्थ्याभावाद् वृत्त्यनुरोधिवाक्यत्वाच्चातो न कर्मधारयः । नाप्याख्यातादिपदसमुदायो वाक्यं–संश्चासंश्चात्मेति, भवत्यादिक्रियाऽसम्बन्धात्, तत्र सामान्यशब्दो युगपदनेकमर्थमभिदध्याद् न चाभिदधीत, "अभिहितानां सामान्यशब्देन विशेषाणां नियमार्थो पुनः श्रुतिः" इति न्यायात्, नवा ब्रूयादनेकमर्थमभिधानोपायासम्भवात्, "तन्मात्राकाङ्क्षणाद् भेदः स्वसामान्येन चोज्झितः" इति न्यायात्, सामान्यशब्देष्वेवं न विशेषशब्देषु धवखदिरादिषु, विशेषशब्दास्तु वाक्ये प्रयुज्यमानाः केवलाः स्वार्थमेव ब्रुवते–संश्चासंश्चेति, न त्वनेकमर्थं स्वार्थमात्राभिधानान्न सहगुणद्वयाभिधायिता । ननु च वाक्ये द्वयोरपि शब्दयोरेकतया युगपद्भावः, तन्न, पदेभ्यो

---

सम्बन्धाविच्छिन्नप्रकारताप्रयोजकत्वस्वप्रयोज्यतादात्म्यसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकत्वान्यतरत्वमिति यावत् । अत्र च आत्माऽस्त्येव आत्मा नास्त्येवेत्येवंविचारणायां पुनः । **न सामानाधिकरण्यम्** उक्तलक्षणसामानाधिकरण्याभावः । सामान्यविशेषभावाभावाद्द्रव्यशब्दत्वमप्यस्तिनास्तिशब्दयोर्नास्ति येन विशेषणविशेष्यभावावलम्बिकर्मधारयसमासोऽनयोः स्यादित्याह–**अद्रव्यशब्दत्वादिति** । **सामान्यविशेषरूपेणास्थितत्वादि**त्यनेन विशेषणविशेष्यभावोऽप्यनयोर्नास्तीत्यावेदितम् । एतेन न कोऽपि कर्मधारयप्रकारस्समस्त्यत्रेत्याह–**न चान्यदिति** । उपसंहरति–**तस्मादिति** । कर्मधारयसमाससमशीलव्यासवाक्यस्यापि न युगपदस्तित्वनास्तित्वोभयप्रतिपादकत्वं येन तत्तुल्याभिप्रायककर्मधारयसमासस्य तथापरिकल्पनं युज्येतापीत्याह–**तद्वाक्येऽपीति** । समासरूपतया सदसच्छब्दस्य युगपद्गुणद्वयाभिधायकत्वं व्युदस्य व्यासवाक्यरूपतयाऽपि न तत्त्वमित्यावेदयति–**नाप्याख्यातादीति** । एतच्चाख्यातपदसमभिव्याहृतस्यैव वाक्यत्वं "यत्रापि क्रियापदं न श्रूयते तत्राप्यस्तिर्भवन्तीपरस्समस्ति" इति मतमाश्रित्य, संश्चासंश्चात्मेति पदकदम्बकम् आख्यातादिपदसमुदायलक्षणवाक्यं न भवतीत्यर्थः । निषेधे हेतुः–**भवत्यादिक्रियाऽसम्बन्धादिति**, सर्वस्मिन्नेव काले आत्मनः सत्त्वासत्त्वयोरभिमतत्वेन प्रतिनियतकालसम्बन्धावबोधकस्य भवत्यादिपदस्य तत्राभीष्टबोधप्रतिपन्थितया निराकाङ्क्षत्वात् । अस्त्यादिशब्दस्य सामान्यशब्दत्वे युगपदनेकार्थप्रतिपादकत्वं सम्भाव्येताऽपि, न त्वेवं, वाक्यघटकतया प्रयुज्यमानस्य सर्वस्यापि विशेषणवाचकपदस्य विशेषशब्दत्वादित्याह–**तत्रेति** । युगपदनेकमर्थमभिदध्यादिति पक्षे सामान्यशब्देनैव विशेषार्थाभिधाने तदभिधानायोच्यमानो विशेषशब्दः पुनरुक्ततामेवाकलयेदित्यत आह–**अभिहितानामिति**, सामान्यशब्देनाभिहितानां विशेषाणामित्यन्वयः, एवं सत्यनाकाङ्क्षिता विशेषा मा नाम प्राप्नुयुः किन्त्वभिलषिता एवेति नियमनाय पुनः तादृशविशेषावबोधकस्य विशेषशब्दस्य श्रुतिरुच्चारणमिति न तद्वैयर्थ्यमित्याशयः । **न चाभिदधीते**ति द्वितीयपक्षसमर्थनायाह–**नवा ब्रूयादनेकमर्थमिति** । निषेधे हेतुमाह–**अभिधानोपायासम्भवादिति** । अत्रापि न्यायविशेषं प्रमाणतयोपदर्शयति–**तन्मात्राकाङ्क्षणादिति**, सामान्यमात्रमाकाङ्क्षितमतः सामान्यस्यैव सामान्यशब्दादवबोधः, विशेषस्य त्वनाकाङ्क्षितत्वादेव नावगमः, नहि यद्यत् शब्दाभिधेयं तत्सर्वमेव तत्पदेन प्रतिपाद्यम्भवति, सैन्धवशब्दाभिधेयत्वेऽपि अश्वस्य भोजनप्रकरणे सैन्धवमानयेति वाक्यघटकसैन्धवपदेनानाकाङ्क्षितस्याप्रतिपादनात्, किन्त्वाकाङ्क्षितस्य लवणस्यैव बोधः । नवा भेदो विशेषः सामान्यात्मा येन सामान्येऽभिहिते सोऽप्यभिहित एव स्यात् सामान्यविशेषयोरन्योन्यं भेदादित्याह–**भेदः सामान्येन चोज्झित** इति, चः–हीत्यस्यार्थे, यतो भेदो विशेषः, सामान्येन सामान्यात्मना, उज्झितः–त्यक्तः सामान्यानात्मकः, एकान्तनयाभिप्रायेणेदम्, इदानीं सर्वस्या अपि प्रक्रियाया एकान्तनयावलम्बित्वादिति बोध्यम् । सामान्यशब्द एकेन नयेनानेकमर्थमभिदध्याद् एकेन च नाभिदध्यात्, तथा च येन नयेनाभिदध्यात्तं नयमाश्रित्यैकसामान्यशब्दस्य युगपदनेकार्थप्रतिपादकत्वसम्भवेऽपि प्रकृते नैवमित्याह–**सामान्यशब्देष्वेवं न विशेषशब्देष्विति** । **स्वार्थमेव** विशेषमेव । तथा सति किमित्यपेक्षायामाह–**स्वार्थमात्राभिधानादिति** । ननु वाक्यभावमापन्नयोस्सदसच्छब्दयोरेकत्वमेव ततश्च तयोर्युगपद्भावात्ततो गुणद्वयाभिधानमपि युगपद्भविष्यति ततश्च युगपद्धर्मद्वयविवक्षायामपि वस्तु वक्तव्यं स्यादित्याशङ्कते–**नन्विति** । वाक्यभावे सति सदसच्छब्दयोः न सदसच्छब्दत्वे किन्तु ताभ्यामन्यत्वमेव, अर्थोऽपि तस्य प्रतिभा-

वाक्यशब्दस्य शब्दान्तरत्वात्, एक एव हि शब्द इष्यते वाक्यम्, तस्य चार्थान्तरेणैकेनैव प्रतिभारूपेण भाव्यम्, अतोऽत्रापि गुणद्वयवचनस्य युगपच्छब्दद्वयस्यासम्भव इति ८ ॥ एवमुक्तात् कालादियुगपद्भावासम्भवात् समासवाक्यलौकिकवाक्ये युगपच्छब्दयोर्द्वयोरर्थयोश्च वृत्त्यसम्भवाद् युगपद्विवक्षायामवाच्य इत्येवं सर्वैकान्तावक्तव्यप्रतिषेधद्वारेण भाष्यकृता तृतीयविकल्पप्रणयनमकारि प्रेक्षापूर्वकारिणा कथञ्चिदवक्तव्यः, कथञ्चिद् वक्तव्योऽवक्तव्यादिशब्दैरात्मेति निरूपितम् । एतदेव च विकल्पत्रयमधुना भाष्यकारः स्फुटतरं भाष्येण दर्शयति । स्याद्वादो हि धर्मसमाश्रयः, स्वसिद्धसत्ताकस्य च धर्मिणः सत्त्वासत्त्वनित्यत्वानित्यत्वाद्यनेकविरुद्धाविरुद्धधर्मकदम्बकाभ्युपगमे सति सप्तभङ्गीसम्भवः, तत्र सङ्ग्रहव्यवहाराभिप्रायात् त्रयः सकलादेशाः, चत्वारस्तु विकलादेशाः समवसेया ऋजुसूत्रशब्दसमभिरूढैवंभूतनयाभिप्रायेण । तत्रातीतविकल्पत्रयस्वरूपभावनायेदमुच्यते—

[भाष्यम्–] **पर्यायास्तिकस्य सद्भावपर्याये वा, सद्भावपर्याययोर्वा, सद्भावपर्यायेषु वा, आदिष्टं द्रव्यं वा, द्रव्ये वा, द्रव्याणि वा सत् ।**

**पर्यायास्तिकस्येत्यादि** । पर्यायास्तिकग्रहणं धर्मविषयस्याद्वादप्रतिपत्त्यर्थम्, धर्मास्तु स्वरूपित्वसत्त्वमूर्तत्वादिरूपा धर्मिणः परिणामिनो नात्यन्तव्यतिरिक्ता इत्यतस्तत्प्रणालिकया धर्मिविषयत्वमपि, द्रव्यपर्याययोः संसृष्टत्वादेवं (देवमेव), अत्र च द्रव्यास्तिकपर्यायास्तिकनयद्वयमात्रवस्तुसमाश्रयः

---

रूपोऽभ्य एव न तु सत्त्वासत्त्वे, ततश्चैतदभिप्रायतोऽपि न युगपत्सत्त्वासत्त्ववाचकत्वं सदसच्छब्दयोरिति समाधत्ते–**तत्रेति** । **तस्य** वाक्यस्य । **अत्रापि** पदद्वयस्य वाक्यभावविवक्षयैकत्वपक्षेऽपि । उक्तदिशा एकान्तवाद्यभिप्रेतं सर्वथाऽवक्तव्यत्वमुपसंहृत्य अनेकान्तवाद्यभिप्रेतं कथञ्चिदवक्तव्यत्वं तृतीयभङ्गाभिप्रेतमिति भाष्यकाराभिप्रायमायोजयति–**एवमुक्तादिति** । यदि तथा वक्तव्योऽपि भवेत्तदा कथञ्चिदित्युक्तिस्सफलेत्यत आह–**कथञ्चिद्वक्तव्य** इति । **पर्यायास्तिकस्ये**त्यादिभाष्यमवतारयति–**एतदेव चेति** । **विकल्पत्रयम्**, स्यादस्त्येव १ स्यान्नास्त्येव २ स्यादवक्तव्यमेवेति भङ्गत्रयम् । **स्याद्वादः**, अनेकान्तवादः । **हि** यतः । **धर्मसमाश्रयः**, धर्मसमाश्रयणेन भवति, अनन्तधर्मात्मकैकवस्त्वभ्युपगमस्यैव स्याद्वादत्वेन नयभेदेनैकत्र वस्तुनि नित्यत्वानित्यत्वादिधर्माभ्युपगमतस्तस्योपपत्तिरिति यावत् । एवञ्च सति सप्तभङ्गीप्रवृत्तिस्सम्भवति, तस्याः प्रतिधर्मं विधिनिषेधसमाश्रयणेनोल्लासादित्याह–**स्वसिद्धसत्ताकस्येति**, धर्मिण एवासिद्धत्वे कमुद्दिश्य विधिनिषेधद्वारेण धर्माभ्युपगमः प्रवर्तेतेति सर्वैरपि वादिभिः तस्य स्वस्वमतानुसारेण सत्ताऽभ्युपेयैवेति न तत्र प्रमाणान्तरोपदर्शनायासो न्याय्य इत्याशयः । नयभेदेनैकत्र धर्मिणि सप्तविधधर्मसम्भवेन सप्तभङ्गीप्रवृत्तिस्तत्र केन नयेन कस्य भङ्गस्योल्लास इत्यपेक्षायामाह–**तत्रेति**, सप्तभङ्ग्यामित्यर्थः, सङ्ग्रहाभिप्रायात् स्यादस्त्येवेति प्रथमो भङ्गः, अस्तित्वस्य सत्तारूपमहासामान्यस्यानुगामित्वेन द्रव्यस्य सङ्ग्रहनयविषयत्वात्, व्यवहाराभिप्रायात् स्यान्नास्त्येवेति द्वितीयो भङ्गः, नास्तित्वस्याननुगामित्वेन विशेषरूपस्य पर्यायस्य व्यवहारनयविषयत्वात्, सम्मिश्रितसङ्ग्रहव्यवहाराभिप्रायात् स्यादवक्तव्य एवेति तृतीयो भङ्गः, युगपदुभयविवक्षासमासादितस्वरूपस्यावक्तव्यत्वस्य नयद्वयविषयत्वात् । **त्रयः सकलादेशा** इति, सकलादेशत्वञ्च त्रयाणामखण्डवस्तुविषयकबोधजनकत्वेन बोध्यम् । स्यादस्ति स्यान्नास्ति १ स्यादस्ति स्यादवक्तव्यः २ स्यान्नास्ति स्यादवक्तव्यः ३ स्यादस्ति स्यान्नास्ति स्यादवक्तव्यः ४ इति चतुर्णां भङ्गाना क्रमेण ऋजुसूत्रादिनयाभिप्रायसमुत्थानमित्याह–**चत्वारस्त्विति** । **विकलादेशा** इति, सखण्डधर्मद्वारा वस्तुप्रतिपादकत्वं विकलादेशत्वम् । **अतीतेति**, प्राक्प्ररूपितेत्यर्थः । **पर्यायास्तिकस्य सद्भावपर्याये** वेत्यादिना स्यादस्त्येवेति प्रथमभङ्गनिरूपणम् । द्रव्यास्तिकसङ्ग्रहनयविषयस्य सत्त्वस्य पर्यायास्तिकविषयत्वाभावात्पर्यायास्तिकस्येति कथं सङ्गतमित्यत आह–**पर्यायास्तिकग्रहणमिति**, धर्मिणो वस्तुनो द्रव्यस्य सत्त्वादयो धर्माः पर्यायतया विवक्षिता इति तद्ग्राहिनयस्य पर्यायास्तिकत्वमिति । एवं सति धर्मविषयत्वमेव स्याद्वादस्य न धर्मिविषयत्वमित्यत आह–**धर्मास्त्विति** । **तत्प्रणालिकया** धर्मावबोधनद्वारा । धर्मविषयत्वे धर्मिविषयत्वस्यावश्यकमित्याह–**द्रव्यपर्याययोः संसृष्टत्वादिति** । द्रव्यपर्यायोभयविषयकत्वे सति स्याद्वादस्य द्रव्यपर्यायोभयनय-

सिद्ध्यति स्याद्वादः, अन्यथा पर्यायनयाश्रय एव विकल्पसप्तकेन सकलवस्तुव्यापी स्यात् स्याद्वादः । सतो भवनं भावस्तद्भावलक्षणः परिणामः, स चानेकरूपः क्रमयुगपद्भावित्वात्, सुरमनुष्यादेर्ज्ञानदर्शनादेश्चात्मनः सद्भावपर्यायत्वम्, शेषधर्मादिद्रव्यवृत्ताः पुनरसद्भावपर्यायाः; वर्तमानकालावधिकाः पर्यायाः सद्भावलक्षणाः, ततोऽन्येऽतीतानागतवर्तमानकालविशिष्टास्त्वसद्भावपर्यायाः, तावत्परिणामपर्यायकलापाश्चात्मादयः पदार्थाः, स्वपरपर्यायानन्तस्वभावमेकं द्रव्यं सत्तारूपेण विवक्षितं चेतनाचेतनाह्वम्, महासामान्यमुत्सर्गः, पर्यायाः शक्तयोऽनन्ताः, तत्र स्वपर्यायान्वयवत् परपर्यायव्यतिरेकोऽपि वस्तुस्वभावावगतेरङ्गम्, तन्निवृत्त्यग्रहणे वस्तुसद्भावाग्रहणाद्, विनिवृत्तिद्वारेणैवासद्भावपर्यायोपयोगः, न निवृत्तिरभावः, स एव हि तथा स्वभावो विनिवृत्ताशेषान्यविशेषलक्षणो निवृत्तिशब्दवाच्यः, तदेवमन्वयव्यतिरेकयोर्विधिप्रतिषेधविषययोरनियमातिप्रसङ्गपरिहारार्थं चिदुत्तरकिंवृत्तावद्योत्यविषयं स्याच्छब्दाग्रेसरमपिशब्दसहितं तथाविधान्यतमशब्दविशिष्टं वा धर्मधर्मिनिर्देशवाक्यं प्रयुज्यतेऽन्तर्भूतैवकारं गुणप्रधानभावव्यक्तिप्रकृत्यर्थं प्रयुक्तान्यतरैवकारं वा परप्रतिपन्नैकान्तधर्मविशिष्टं वस्तु कथञ्चित् नियमका-

---

विषयावलम्बनं घटत इत्याह-**अत्र चेति** । **अन्यथा** केवलधर्मविषयकत्वे । कश्चात्मादिद्रव्यस्य सद्भावपर्यायः कश्चासद्भावपर्याय इत्यपेक्षायां सद्भावपर्यायस्वरूपं विवृणोति-**सतो भवनमि**त्यादिना, सुरमनुष्यादेः क्रमभावित्वेनात्मनः सद्भावपर्यायत्वम्, ज्ञानदर्शनादेश्च युगपद्भावित्वेनात्मनस्सद्भावपर्यायत्वम्, आत्मव्यतिरिक्तधर्मास्तिकायादिगताश्च धर्मा आत्मनोऽसद्भावपर्याया इत्याह-**शेषेति** । प्रकारान्तरेण सद्भावासद्भावपर्यायौ दर्शयति-**वर्त्तमानेति** । सद्भावासद्भावपर्यायसमनुगताश्चात्मादयः पदार्थास्तत्त्वम्, अन्यथा त्वतत्त्वमेवेत्याह-**तावत्परिणामेति** । प्रथमभङ्गे सत्तारूपेण विवक्षितं तदनेकान्तात्मकमेव वस्तु, अन्यादृशस्य सत्त्वासम्भवादित्याह-**स्वपरपर्यायेति** । तत्र द्रव्यसामान्यस्यैकत्वं पर्यायाणाञ्चानन्तत्वं तयोरन्योन्यसम्मिश्रितत्वादेकानेकात्मकवस्तूपपत्तिरित्यावेदनायाह-**चेतनाचेतनाह्वमिति**, चेतनमपि द्रव्यमेव अचेतनमपि द्रव्यमेवेति द्रव्यस्य चेतनाचेतनद्वित्वं घटते, सर्वानुगामित्वात्सन्मात्रलक्षणम्, तदेव महासामान्यम्, तस्य कुत्रापि प्रतिक्षेपादुत्सर्गत्वमपि वोध्यम्, पर्यायास्त्वन्योन्यविलक्षणरूपास्तस्यैव शक्तयः सङ्ख्यातुमशक्यत्वादनन्ता इति । वस्तुस्वरूपावगमे स्वपर्यायवत्परपर्यायोऽप्युपयुज्यते, स्वनिषेधद्वारा तस्यापि वस्तुस्वरूपप्रविष्टत्वमित्याह-**तत्रेति** । परपर्यायव्यतिरेकस्य कथमङ्गत्वमित्यपेक्षायामाह-**तन्निवृत्त्यग्रहण** इति, परपर्यायनिवृत्त्यग्रहण इत्यर्थः । **वस्तुसद्भावाग्रहणादिति**, पररूपेणासत्त्वस्याग्रहणे स्वरूपेण सत्त्ववत्पररूपेण सत्त्वस्यैवाप्रतिषिद्धमनुमोदितं भवतीति न्यायेन प्राप्तौ स्वरूपसाङ्कर्यापत्त्या विविक्तवस्तुसद्भावस्याग्रहणादित्यर्थः । **विनिवृत्तिद्वारेणैव** स्वाभाववत्त्वलक्षणसम्बन्धद्वारेणैव । ननु निवृत्तिस्तुच्छरूपा कथं शशशृङ्गादिवद्वस्तुस्वभावो भवेदित्यत आह-**न निवृत्तिरभाव** इति । यदि निवृत्तिर्नात्यन्ताभावः, वाच्यस्तर्हि स किंस्वरूप इत्यपेक्षायामाह-**स एव हीति**, वस्तुसद्भाव एव यत इत्यर्थः । सद्भावासद्भावपर्याययोर्वस्तुस्वभावत्वे निर्णीते सति यथा प्रकृतार्थगतिस्तथोपदर्शयति-**तदेवमि**त्यादिना । **अन्वयव्यतिरेकयोः** सत्त्वासत्त्वाद्योः । **विधिप्रतिषेधविषययोः**, अस्त्यादिविधिनास्त्यादिप्रतिषेधविषययोः । अनियमप्रतिषेधार्थमन्तर्भूतैवकारम्, अप्रसङ्गपरिहारार्थं स्याच्छब्दाग्रेसरमिति । स्याच्छब्द. कीदृश इत्यपेक्षायामाह-**चिदुत्तरकिंवृत्तावद्योत्यविषयमिति**, अत्र चिदुत्तरकिंवृत्तावद्योत्यविषयेति पाठो युक्तः, तस्य स्याच्छब्देन समस्तस्यैव समनुगतिः, चिदुत्तरकिंवृत्तं कथञ्चिदिति तेनावद्योत्यो विषयो यस्य स तथा, एवंभूतो यः स्याच्छब्दस्तदग्रेसरमिति । **अपिशब्दसहितम्**, स्यादपि घटोऽस्त्येवेत्येवंवाक्यप्रयोगमङ्गीकृत्य, न चेत्थं प्रयोगः स्याद्वादिभिः क्रियमाणो दृश्यते, न च सम्भावनार्थकापिशब्दप्रयोगकृत्यमपि पश्यामः, तस्माच्चिन्त्यमेतत् । अपिशब्दसहितमिति पाठे **तथाविधेत्य**स्याप्यपिशब्दसमानार्थकेत्यर्थः स्यात्, तत्पाठाभावे तु **तथाविधेत्य**स्य स्याच्छब्दसमानार्थकेत्यर्थः, तादृशशब्दश्च स्वद्रव्यादिना परद्रव्यादिना वेत्येवंरूपो ग्राह्यः । **धर्मधर्मिनिर्देशवाक्यम्**, अस्ति घट इत्यादिरूपम् । **अन्तर्भूतैवकारम्** अन्यनिविष्टैवकारसमन्वितम्, अनेन स्याद् घटोऽस्त्येवेति स्याद् घटो नास्त्येवेत्यादिस्वरूपं वाक्यं प्रतिपादितं भवतीति । **गुणेत्यादि**, एकस्य धर्मस्य गुणभावोऽन्यस्य च प्रधानभावः तस्य च या व्यक्तिः अभिव्यक्तिः तत्प्रकृत्यर्थं तत्स्वभावसम्पत्तये । **प्रयुक्तान्यतरैवकारमिति**, अन्ययोगव्यवच्छेदायोगव्यवच्छेदात्यन्ता-

रिर्धर्मप्रत्यनीकपर्यायधर्मसम्बन्धीति स्यात् सत् स्यादनित्यमित्यादिधर्मात्मकम्, इत्थं धर्म्यपीति वा स्याद्वादिभिः प्रतिज्ञायते सुलभहेतुदृष्टान्तत्वात्, अतो द्रव्यास्तिकनयार्पणात् सोऽयं धर्म्यभेदेनैव व्यपदेशः प्रत्यभिज्ञाप्रधानत्वात्, पर्यायार्थिकनिर्देशादस्येदमिति भेदभाक्त्वम्, एकवचनादिप्रदर्शनं चैकस्यैव सत्त्वस्यासत्त्वस्य वा भजनाप्रभावितमनेकत्वमिति प्रतिपादनार्थम्, तत्र सद्भावपर्यायनिमित्तेनादेशेनार्पितमात्मरूपद्रव्यमित्येव सद्द्रव्यत्वमेव हि **सद्भावपर्यायः**, तद्धि द्रवति पर्यायान् द्रूयते वा तैर्द्रव्यम्, अनेनाकारेणार्पितं स्यादस्तीत्युच्यते, तस्य द्रव्यत्वादेः पर्यायस्यात्मपरिणामिकारणप्रभावितत्वात् ताद्रूप्याच्च, तच्चास्तित्वं शेषषड्विकल्पापेक्षमेव सङ्गतिमनुभवति, सद्भावपर्यायद्वयनिमित्तादेव ज्ञानदर्शनोपयोगद्वयकारणक आदेशो द्रव्यम्, वक्ष्यत्युपरि–**द्रव्याश्रया निर्गुणा गुणाः** (अ० ५, सू० ४०) इति । तथा गणतिथसद्भावपर्यायकारणो वाऽयमादेशश्चैतन्यज्ञानदर्शनोपयोगाश्रयो द्रव्यमिति, एवं द्वे द्रव्ये वहूनि वाऽप्युक्तेन प्रकारेणार्पितानि सद्भावपर्यायापेक्षया सद्व्यपदेशभाञ्जि भवन्ति, अथवैकस्मिन् सद्भावपर्यायविषयेऽर्पितमादिष्टं **द्रव्यं द्रव्ये वा वा द्रव्याणि वा सत्**, तथा द्वयोर्वहुषु विभाव्यम्, अविशिष्टस्य वा द्रव्यपदार्थस्यैकत्वद्वित्ववहुत्वपर्यायाः, तथा च तदर्प्यमाणं स्याद-

---

योगव्यवच्छेदार्थकैवकारसमन्वितम् । परं प्रति स्यादस्त्येव घट इति प्रतिज्ञायां हेतुर्दृष्टान्तश्च प्रयोक्तव्यः, स त्वसुलभ इति न प्रतिज्ञामात्रेण स्याद्वाद्यभिमतानेकान्तवस्त्ववगमः सुलभ इत्यत आह–**सुलभहेतुदृष्टान्तत्वादिति** । सत्त्वादिधर्मस्य घटादिधर्मिणश्च धर्मधर्मिभावानुरोधेन भेदे सति कथमस्ति घट इत्यभेदेन निर्देश इत्यत आह–**अत** इति । **द्रव्यास्तिकनयार्पणादिति**, द्रव्यास्तिकनयेन धर्मधर्मिणोरभेदव्यवस्थितेरित्यर्थः । **सोऽयमिति**, स्यात् सन् घटः स्यादसन् घटः स्यान्नित्यो घटः स्यादनित्यो घट इत्येवंप्रयोग इत्यर्थः । द्रव्यार्थिकनये प्रत्यभिज्ञाया अभेदगोचरायाः प्राधान्यं तस्यैव प्रमाणतयाऽऽश्रयणेन इत्थं प्रयोग समर्थितो भवतीत्याह–**प्रत्यभिज्ञाप्रधानत्वादिति** । यदि च पर्यायार्थिकनयाश्रयेण सप्तभङ्गी समाद्रियते तदा तन्मते धर्मधर्मिणो भेदात्तथैव भङ्गा उपन्यसनीया इत्याह–**पर्यायार्थिकनिर्देशादिति**, तथा च स्याद्घटेऽस्तित्वमेव स्याद्घटे नास्तित्वमेव स्याद्घटेऽवक्तव्यत्वमेवेत्येवंदिशा सप्तभङ्गी अवधार्येति । भाष्ये सद्भावपर्याये वेत्यादावुपदिष्टानामेकवचनद्विवचनवहुवचनानां प्रयोजनमुपदर्शयति–**एकवचनादिप्रदर्शनञ्चेति** । **असत्त्वस्य वेति, असद्भावपर्याये** वेत्यादिभाष्यमधिकृत्य । "सद्भावपर्याये वा सद्भावपर्याययोर्वा सद्भावपर्यायेषु वाऽऽदिष्टं द्रव्यम्" इति भाष्यस्याभिप्रायमाविष्करोति–**तत्रेत्यादिना**, आत्मरूपद्रव्यमेव सद्द्रव्यत्वं तदेवात्मनः सद्भावपर्यायस्तदाश्रयणेन सद्भावपर्याये वाऽऽदिष्टं द्रव्यमित्युक्तम् । कथञ्च तथेत्यपेक्षायामाह–**तद्धीति**, आत्मद्रव्यं हीत्यर्थः । **द्रवति** अनुगच्छति । **पर्यायान्** मनुष्यदेवादिपर्यायान् द्रव्यत्वादिधर्मात्मकपर्यायान् वा । मनुष्यादिपर्यायैर्द्रव्यत्वादिपर्यायैर्वा **द्रूयते** अनुगम्यते । **अनेनाकारेण**, आत्मद्रव्यरूपसद्द्रव्यत्वरूपाकारेण । **अर्पितं** विवक्षितम् । कथमात्मद्रव्यरूपेणैव द्रव्यत्वादिपर्यायस्यादेश इत्यपेक्षायामाह–**तस्य द्रव्यत्वादेः पर्यायस्येति**, आत्मद्रव्यगतद्रव्यत्वादिपर्यायस्येत्यर्थः । **ताद्रूप्याच्च** आत्मद्रव्याभिन्नत्वाच्च । इत्थमस्तित्वप्रतिपादनं नास्तित्वादिप्रतिपादनसापेक्षमिति सप्तभङ्गीप्रवृत्तिरावश्यकीत्याह–**तच्चास्तित्वमिति**, एतावता सद्भावपर्याये आदिष्टं द्रव्यमित्यंशो व्याख्यातः । सद्भावपर्याययोरादिष्टं द्रव्यमित्यंशव्याख्यानायाह–**सद्भावपर्यायद्वयनिमित्तादेवेति** । सद्भावपर्यायेष्वादिष्टं द्रव्यमित्यंशव्याख्यानायाह–**तथेति** । **गणतिथेति**, वहुविधेत्यर्थः । सद्भावपर्याये आदिष्टं द्रव्ये वा द्रव्याणि वा, सद्भावपर्याययोरादिष्टं द्रव्ये वा द्रव्याणि वा, सद्भावपर्यायेष्वादिष्टं द्रव्ये वा द्रव्याणि वेत्यप्युक्तदिशा व्याख्येयमित्याह–**एवं द्वे द्रव्ये वहूनि वेति**, सद्भावपर्याये आदिष्टं द्रव्यं वा द्रव्ये वा द्रव्याणि वा, सद्भावपर्याययोरादिष्टं द्रव्यं वा द्रव्ये वा द्रव्याणि वा, सद्भावपर्यायेष्वादिष्टं द्रव्यं वा द्रव्ये वा द्रव्याणि वेति योजनयाऽपि भाष्यं व्याख्येयमित्याशयेन कल्पान्तरमाह–**अथवेति** । **द्वयोः** सद्भावपर्याययोः । **वहुषु** सद्भावपर्यायेषु । **तथेत्यनेन** आदिष्टं द्रव्यं वा द्रव्ये वा द्रव्याणि वा सदित्यस्याक्षेपः । एकवचनेनैकत्वं द्विवचनेन द्वित्वं वहुवचनेन वहुत्वं वा द्रव्ये शुद्धे धर्मिणि विधीयते इति वैकवचनाद्युपन्यासेन विवक्षितमित्याह–**अवशिष्टस्य वेति** । **तथा च** एकत्वद्वित्ववहुत्वाना पर्यायत्वे च । **तदर्प्यमाणम्** एक-

स्त्येकत्वेनार्पितमेकसङ्ख्याविशेषरूपतयैवास्ति न द्वित्वबहुत्वाकारेण, अनेकधर्मिणो हि वस्तुनः कदाचित् किञ्चिद् विवक्ष्यते, युगपद्भूरिवक्तृविवक्षायामप्येकत्वादयो यौगपद्येनार्पणावशादुपलभ्यन्ते, सकलपर्यायशक्तिसङ्गतेः परिणामिनः, एकपुरुषाधारमातुलभ्रातृभागिनेयादिशक्तिवत्, एकेन वक्त्रा विवक्षिते प्रयोजनवशादेकत्वद्वित्वादि च सम्भवदप्युपेक्षितं प्रयोजनाभावात्, अतस्तस्य तेनैव विवक्षिताकारेण कार्यसिद्धेः स्यादस्त्यात्मेत्युच्यते, न सर्वपर्यायार्पणया, तदा तदस्ति तस्य वक्तुरिति प्रथमविकल्पभावना॥

[भाष्यम्–] **असद्भावपर्याये वा, असद्भावपर्याययोर्वा, असद्भावपर्यायेषु वा, आदिष्टं द्रव्यं वा, द्रव्ये वा, द्रव्याणि वाऽसत् ।**

**असद्भावपर्याये** वेत्यादिना द्वितीयविकल्पं भावयति । आत्मनो ज्ञानदर्शनादिव्यतिरिक्ता गतिस्थित्यवगाहोपकारस्पर्शादयोऽसद्भावपर्यायाः, वर्तमानजन्मनो वाऽतीतानागताः, तज्जन्मनि वाऽतिक्रान्तागामिनः सर्वेऽप्यसद्भावपर्यायाः, तदर्पणया स्यान्नास्त्येवात्मेति, न सर्वथा नास्तित्वप्रतिपत्तिः, यदाऽऽत्मा गत्युपकारकपर्यायेणार्पितस्तदाऽऽत्मद्रव्यमसत्, तत्स्वभावकत्वेन तस्याद्रवणात्, सद्भावपर्यायप्रभावितं वा द्रव्यं स्वपरिणामिप्रभाविता वा पर्यायास्तत्र चैकमपि नास्तीत्यतोऽसदित्युच्यते, परपर्यायार्पणया नास्ति तदित्यर्थः । शेषं पूर्ववद् विभाव्यम् ॥

---

त्वादिसङ्ख्यारूपेणार्प्यमाणं द्रव्यम् । तथा सति यथा भङ्गजनितावबोधस्तथा भावयति–**स्यादस्त्येकत्वेनार्पितमिति** । एकत्वसङ्ख्यात्मकपर्यायरूपेण द्रव्यार्पणस्य प्रयोजनमुपदर्शयति–**एकसङ्ख्याविशेषरूपतयैवेति** । एकस्मिन् वस्तुनि एकत्वमपि केनचिद्रूपेणास्ति द्वित्वबहुत्वे अपि स्त इति यस्यार्पणं तद्रूपेण वस्त्ववबोधनाय भङ्गप्रवृत्तिस्सम्भवतीत्यावेदयितुमाह–**अनेकधर्मिण** इति, अनेकधर्मविशिष्टस्येत्यर्थः । एकदापि एकस्य वस्तुनो वक्तृविवक्षाभेदेनैकत्वद्वित्वबहुत्वानि सम्भवन्ति, तथार्पणमपि युगपदुपलभ्यते परिणामिनो द्रव्यस्य सकलपर्यायरूपशक्तिसङ्गतेः सर्वदाभावाद्, अतस्तथाविवक्षा नासम्भवद्वस्तुविषयेत्याशयेनाह–**युगपद्भूरीत्ति** । एकस्यानेकशक्तिसमन्वितत्वे दृष्टान्तमाह–**एकपुरुषाधारेति** । बहुभिर्वक्तृभिर्युगपदपि एकत्वद्वित्वबहुत्वान्येकस्मिन्विवक्षितुं शक्यान्येव, परमेकेन वक्त्रैकदैकस्यैवैकत्वादेर्विवक्षाऽन्यस्य सम्भवतोऽपि प्रयोजनाभावादविवक्षैव, ततो यस्य विवक्षा तद्रूपेणास्तित्वं प्रथमभङ्गविषय इत्याह–**एकेन वक्त्रेति** । **विवक्षित** इत्यनन्तरमेकस्मिन्निति दृश्यम् । एकस्य विवक्षायां हेतुः–**प्रयोजनवशादिति** । अन्यस्योपेक्षणे हेतुः–**प्रयोजनाभावादिति** । **अतः**, एकस्य प्रयोजनवशाद्विवक्षणमन्यस्य प्रयोजनाभावादुपेक्षणमित्यस्माद्धेतोः । **तस्य** पुरुषविशेषस्य । **तदा** एकस्य पर्यायस्य प्रयोजनवशाद्विवक्षाकाले ॥ स्यान्नास्त्येवात्मेति द्वितीयभङ्गोपपादकं भाष्यमधिकरोति–**असद्भावपर्याये वेत्यादिनेति**, असद्भावपर्यायार्पणात्स्यान्नास्त्येवात्मेति भङ्गप्रवृत्तिः । तत्र के आत्मनोऽसद्भावपर्याया इत्यपेक्षायां तान्दर्शयति–**आत्मन** इत्यादिना । ये च कदाचिदप्यात्मनि न सन्ति तान् **गती**त्यादिनोपदर्श्य ये कदाचिद्वर्त्तन्ते कदाचिच्च न वर्त्तन्ते तेषामपि यदा न वर्त्तनं तदाऽसद्भावपर्यायत्वमित्युपदर्शयति–**वर्त्तमानजन्मनो वेति** । **तज्जन्मनि** वर्त्तमानजन्मनि । **तदर्पणया** असद्भावपर्यायार्पणया । असद्भावपर्यायार्पणप्रयोजनमाह–**न सर्वथेति** । कथं गत्युपकारकपर्यायेणार्पितस्यासत्त्वमित्यपेक्षायामाह–**तत्स्वभावकत्वेनेति**, गत्युपकारकत्वस्वभावेनेत्यर्थः । **तस्य** आत्मनः । **अद्रवणात्**, अननुगमनात्, तद्रूपेणापरिणमनादिति यावत् । एवं सति तस्य द्रव्यत्वमपि सद्भावपर्यायानुगमननिबन्धनं न सम्भवति पर्याया अपि न सम्भवन्ति द्रव्यपर्यायोभयविकलं च न सत्स्वरूपमतोऽसन्नेव तथा भवतीत्याह–**सद्भावपर्यायप्रभावितं वेत्यादि** । **तत्र** आत्मनि । निर्गलितं द्वितीयभङ्गार्थमुपदर्शयति–**परपर्यायार्पणयेति** । **शेषं पूर्ववद्विभाव्यमिति**, प्रथमभङ्गदर्शितदिशा द्वितीयभङ्गभाष्यं व्याख्येयमित्यर्थः, तद्यथा आत्मनोऽचेतनद्रव्यत्वमेवासद्भावपर्यायः, तस्मिन्नादिष्टमात्मद्रव्यमसदिति असद्भावपर्याये आदिष्टं द्रव्यमसदित्येको विकल्पः, अचेतनत्वपुद्गलत्वे अचेतनत्वगत्युपकारकत्वे इत्येवमादी आत्मनोऽसद्भावपर्यायौ तयोरादिष्टमात्मद्रव्यमसदिति द्वितीयो विकल्पः, अचेतनत्वपुद्गलत्वगत्युपकारकत्वानि अचेतनत्वपुद्गलत्वस्थित्युपकारकत्वानि इत्येवमादय आत्मनोऽसद्भावपर्यायास्तेष्वादिष्टमात्मद्रव्यमसदिति तृतीयो विकल्पः, एवं ज्ञानदर्शनोपयोगलक्षणे आत्मद्रव्ये ते असद्भावपर्याये आदि-

इदानीमवक्तव्यताविभावनायाह—

[ भाष्यम्- ] **तदुभयपर्याये वा, तदुभयपर्याययोर्वा, तदुभयपर्यायेषु वा, आदिष्टं द्रव्यं वा, द्रव्ये वा, द्रव्याणि वा, न वाच्यं–सदसदिति वा ।**

**तदुभयपर्याये** वेत्यादि । तदित्यतिक्रान्तद्वयपरामर्शः, सद्भावासद्भावपर्यायद्वयसम्परिग्रहार्थः, उभयश्चासौ पर्यायश्च उभयपर्यायोऽस्तित्वनास्तित्वलक्षणः, स चासावुभयपर्यायश्च तदुभयपर्यायस्तदुभयपर्यायनिमित्तस्तद्विषयो वाऽप्यादेशस्तेनार्पितमात्मतत्त्वमस्तिनास्तिरूपेण युगपद् विवक्षायामुक्तप्रकारभावनया न शक्यं वक्तुमित्यवाच्यम्, ताभ्यामुभयपर्यायाभ्या**मादिष्टं** युगपदात्मरूपं **द्रव्यं** वेत्यादि विकल्प्यते । **न वाच्यं सदित्यसदिति वा,** सद् द्रव्यमसद् वा द्रव्यं न वक्तव्यम्, क्रमेण त्वादेशे भवत्येतदेवम्, सहभावार्पणायां तु न सच्छब्दवाच्यं नासच्छब्दाभिधेयम्, एकस्मिन् काले तादृग्विधवाचकशब्दाभावात् ॥ ननु च तदुभयपर्याये वेत्येकवचनमनुपपन्नम्, एकपर्यायविवक्षायामवक्तव्याभावात् । अत्रोच्यते—उभयग्रहणाद् द्वयमत्र गृह्यते । तर्हि तदुभयपर्याययोर्वेत्यस्मादविशेषः, नैतदेवम्, यतस्तदुभयपर्याये विशेषविवक्षयाऽस्तित्वं हि स्वपर्यायविषयं परपर्यायविषयं चेत्युभयपर्यायः, तत् तु स्वपर्यायेणावच्छिद्यमानमिहास्तीति गृह्यते, तदेव च परपर्यायेणावच्छिद्यमानमात्मनि नास्तीति ग्राह्यम्, इदानीमुभयपर्यायो युगपदर्पणायां भवत्यवक्तव्यः, इतरत्र तु प्रधानभेदव्याख्यायां द्विवचनादिनिर्देशः समीचीनः, जातिविवक्षायां वा जातेरेकत्वादेकवचनसिद्धिरिति ॥

---

ष्टमसद्भावपर्याययोरादिष्टमसद्भावपर्यायेष्वादिष्टमसदिति विकल्पत्रयम्, तथा चेतनज्ञानदर्शनलक्षणान्यात्मद्रव्याणि, तानि असद्भावपर्याये आदिष्टमसद्भावपर्याययोरादिष्टमसद्भावपर्यायेष्वादिष्टमसदिति विकल्पत्रयम्, तथा अचेतनगतैकत्वद्वित्वबहुत्वानि असद्भावपर्यायास्तेषामन्यतमे आदिष्टमात्मद्रव्यमसदित्येवं व्याख्येय द्वितीयभङ्गभाष्यमित्यर्थ । स्यादात्माऽवक्तव्यमेवेति तृतीयभङ्गोपपादकं भाष्यमवतारयति–**इदानीमवक्तव्यताविभावनायाहेति** । **तदितीति, तदुभयपर्याये** वेत्यादिघटकतच्छब्देनेत्यर्थः । **अतिक्रान्तेति,** अतिक्रान्तद्वयं सद्भावासद्भावपर्यायद्वयं तस्य परामर्शो ग्रहणम् । अस्यैव फलितम्–**सद्भावासद्भावपर्यायद्वयसम्परिग्रहार्थ** इति । **तदुभयपर्याय** इति समासवाक्यम्, तदर्थप्रतिपत्तिर्विग्रहद्वारा समासस्वरूपोपदर्शने सत्येव स्यादिति तदुपदर्शयति–**उभयश्चासावित्यादिना** । **तदुभयपर्याये** इत्यत्र सप्तमी निमित्तार्थे विषयार्थे वेत्यभिसन्धानेनाह–**तदुभयपर्यायनिमित्तस्तद्विषयो** वेति, अस्य आदिष्टशब्दार्थादेशविषयैकदेशे आदेशोऽन्वय इत्यभिसन्धाय **आदेश** इति विशेष्यतयोपन्यास· । तथा च "तदुभयपर्याये आदिष्टम्" इत्यस्य तदुभयपर्यायरूपेणार्पितमित्यर्थ इत्याह–**तेनार्पितमिति** । **आत्मतत्त्वमित्यादि** ,स्पष्टम् । **क्रमेणेति,** सद्भावपर्यायेणादेशे सदात्मद्रव्यमित्येवं वक्तव्यं भवति, असद्भावपर्यायेणादेशे असदात्मद्रव्यमिति वक्तव्यं भवति । सद्भावासद्भावपर्यायद्वययुगपद्भावविवक्षाया तथाविधस्य तद्वाचकशब्दस्याभावादवक्तव्यमेवेत्याह–**सहभावार्पणायामिति** । पर्यायद्वयस्यैकत्वाभावादुभयपर्यायविवक्षाया·मेकवचनमनुपपन्नम्, तयोरेकस्य विवक्षायामेकवचनसम्भवेऽपि तथादिष्ट वक्तव्यमेव नावक्तव्यमिति शङ्कते–**ननु चेति** । पर्यायविशेषणतयोभयोपादानात्पर्यायद्वयस्यैव ग्रहणं न त्वेकस्य पर्यायस्य, तत्तु पर्यायद्वयमात्मन एकपर्यायत्वेन विवक्षितमिति एकवचनं नानुपपन्नमिति समाधत्ते–**अत्रोच्यत** इति । **एवं तर्हि** पर्यायद्वयग्रहणे सति । एकस्यैवास्तित्वस्य स्वपर्यायत्वं परपर्यायत्वं च, तत्र स्वपर्यायेणावच्छिद्यमानस्य तस्य प्रथमभङ्गविषयत्वं परपर्यायेणावच्छिद्यमानस्य द्वितीयभङ्गविपयत्वम्, तदुभयपर्यायो यदाऽस्तित्वात्मनैकतया गृह्यते तदैकवचनमित्यभिसन्धानेन **तदुभयपर्याये** वेत्यत्रैकवचनम्, यदा तु भिन्नतया गृह्यते तदा द्विवचनादीत्याह–**नैतदेवमिति** । **तदुभयपर्याये** अस्तित्वनास्तित्वोभयपर्याये । **विशेषविवक्षयेति,** एकस्यैवास्तित्वस्य स्वपर्यायेणावच्छिन्नस्य प्रथमभङ्गविषयत्वं परपर्यायेणावच्छिन्नस्य द्वितीयभङ्गविपयत्वमित्येवं पर्यायद्वयस्य तदात्मनैकत्वविवक्षयैकवचननिर्देशः, अस्तित्वनास्तित्वयोस्स्वपरपर्यायावच्छिन्नयोर्भेद एवेति विवक्षया तु द्विवचनवहुवचन-

एवमेते त्रयः सकलादेशा भाष्येणैव विभाविताः सङ्ग्रहव्यवहारानुसारिण आत्मद्रव्ये, सम्प्रति विकलादेशाश्चत्वारः पर्यायनयाश्रया वक्तव्याः. तत्प्रतिपादनार्थमाह भाष्यकारः—

[भाष्यम्–] **देशादेशेन विकल्पयितव्यमिति ।**

इतिकरणो विकल्पेयत्ताप्रतिपादनार्थः । पर्यायास्तिकमिति नपुंसकलिङ्गप्रक्रान्ते**र्विकल्पयितव्यमि**त्याह । किं पुनः कारणं भाष्यकृता सकलादेशत्रयवदितरेऽपि चत्वारो विकलादेशा भाष्येण नोक्ता इति ? । अयमभिप्रायो भाष्यकारस्य लक्ष्यते—सकलादेशसंयोगाच्चतुर्णां निष्पत्तिरिति सुज्ञानाः, तत्राद्यद्वितीयविकल्पसंयोगे तुर्यविकल्पनिष्पत्तिः—स्यादस्ति च नास्ति चेति । प्रथमतृतीयविकल्पसंयोगे पञ्चमविकल्पनिष्पत्तिः—स्यादस्ति चावक्तव्यश्चेति । द्वितीयतृतीयविकल्पसंयोगे षष्ठविकल्पनिष्पत्तिः—स्यान्नास्ति चाक्तव्यश्चेति । प्रथमद्वितीयतृतीयविकल्पसंयोगे सप्तमविकल्पनिष्पत्तिः—स्यादस्ति च नास्ति चावक्तव्यश्चेति । तत्राद्येषु त्रिषु विकल्पेषु सकलमेव द्रव्यमादिश्यते, चतुर्थादिषु पुनर्विकल्पीकृतं खण्डश आदिश्यते । तदाह—**देशादेशेने**त्यादि । सकलस्य वस्तुनो बुद्धिच्छेदविभक्तोऽवयवो देशस्तस्मिन् देशे आदेशो देशादेशस्तेन देशादेशेन विकल्पनीयं—व्याख्येयम्, आत्मादितत्त्वमित्येवं विकल्पचतुष्टय-

निर्देश इत्यर्थः । **इदानीम्** अस्तित्वस्यैकस्यैव अस्तित्वनास्तित्वोभयरूपतादशायाम् **इतरत्र तु** तदुभयपर्याययोर्वेत्यादिविकल्पे तु । तदुभयपर्याये वेत्यत्रैकवचनोपपत्तये कल्पान्तरमाश्रयति—**जातिविवक्षायां वेति,** उभयपर्यायगतपर्यायत्वजातेरेकत्वाद्वा तद्गतैकत्वविवक्षयैकवचनोपपत्तिरित्यर्थः । सकलादेशस्वभावस्याद्यभङ्गत्रयस्य प्रपञ्चतो निरूपणं भाष्यकारेणाकारीत्युपसंहरन्नेव विकलादेशस्वभावमन्तिमभङ्गचतुष्टयमपि भाष्यकारेण सूचितमेवेत्येवमुत्तरभाष्यमवतारयति—**एवमेत** इति । **विभाविताः,** विशेषेण भाविता भावनापथं प्रापिता निरूपिता इति यावत् । सकलादेशाः कनयमाश्रिता इत्यपेक्षायामाह—**संग्रहव्यवहारानुसारिण** इति । कुत्र विभाविता इत्याकाङ्क्षायामाह—**आत्मद्रव्य** इति । इदानीमवसरप्राप्ताश्चत्वारो विकलादेशा निरूपयितव्या इत्याह—**सम्प्रतीति । तत्प्रतिपादनार्थं** विकलादेशप्रतिपादनार्थम् । अन्त्योपबद्धस्येतिशब्दस्य प्रयोजनमाह—**इतिकरण** इति । विकल्पयितव्य इति पुंलिङ्गनिर्देशमकृत्वा **विकल्पयितव्यमिति** नपुंसकलिङ्गनिर्देशे निमित्तमाह—**पर्यायास्तिकमितीति,** तत्र सच्चतुर्विधम्, तद्यथा—द्रव्यास्तिकं मातृकापदास्तिकं उत्पन्नास्तिकं पर्यायास्तिकमित्येवमुपक्रम्यैवात्रोपसंहृतं सद्रूपं पर्यायास्तिकमित्युपक्रमे नपुंसकलिङ्गनिदेशादुपसंहारेऽपि नपुंसकलिङ्गनिर्देश एव युक्त इत्यभिप्रायः । विकलादेशा यदि भाष्यकारसम्मतास्स्युस्तदा सकलादेशा यथा विशेषतः प्ररूपितास्तथा विकलादेशा अपि प्ररूपिता भवेयुः, तथाऽप्ररूपणाच्च विज्ञायते—सकलादेशा एव भाष्यकारसम्मता न विकलादेशा इति त्रिभङ्ग्येव स्याद्वादवाक्यं न सप्तभङ्गीत्येवमभिप्रायवान् प्रश्नयिता पृच्छति—**किं पुनः कारणमिति,** न खलु विकलादेशा न सन्तीत्यभिप्रायेण नोक्ता विकलादेशाः किन्तु भङ्गत्रयनिरूपणे सति तद्विपयसंयोगजधर्मविषयाणां चतुर्णां भङ्गानां निष्पत्तेरपरिहार्यत्वात्तदुत्रासने कुण्ठितमतयो वादिनो न प्रयासान्तरापकारणीया इति सक्षेपरुचिर्भाष्यकारो न विशेषेण तेषां निरूपणमकार्षीदिति सप्तभङ्गी निराबाधैवेत्युत्तरयति—**अयमभिप्रायो भाष्यकारस्य लक्ष्यत** इति । त्रयाणां भङ्गानां मध्यात्कयोस्संयोगेन कस्य भङ्गस्य निष्पत्तिरित्यपेक्षायामाह—**तत्रेति । आद्येत्यादि ।** आद्यविकल्पः स्यादस्तीति द्वितीयविकल्पः स्यान्नास्तीति तयोस्संयोगे तुर्यविकल्पस्य—चतुर्थभङ्गस्य निष्पत्तिः—सम्भवः, तस्याकारोपदर्शनम्—**स्यादस्ति च नास्ति चेति** । पञ्चमभङ्गनिष्पत्तिं प्रकटयति—**प्रथमतृतीयविकल्पसंयोग** इति । आद्यभङ्गत्रयस्य सकलादेशत्वमन्तिमभङ्गचतुष्टयस्य विकलादेशत्वमिति विकलादेशाशेषप्रकटनपरम्—**देशादेशेन विकल्पयितव्यमिति** भाष्यमित्यावेदनायाह—**तत्राद्येष्विति** । देशादेशेन विकल्पयितव्यमित्यनेनान्तिमभङ्गचतुष्टयस्य कथं प्राप्तिरित्यपेक्षायां तदर्थोपदर्शनेन तत्प्राप्तिमुपदर्शयति—**सकलस्येति,** अखण्डस्येत्यर्थः । अखण्डस्य खण्डरूपो देशो न सम्भवतीत्यत आह—**बुद्धिच्छेदेति,** बुद्ध्या यच्छेदो भागपरिकल्पनम्, यथाऽखण्डस्य नरसिंहस्य बुद्ध्या यथा ऊर्ध्वभागे सिंहोऽधस्तान्नर इति भागपरिकल्पनं तथाऽनन्तधर्मात्मके वस्तुन्यपीति, तेन विभक्तः पृथग्भूतोऽवयवोऽंशः स एव देशः । विकल्पयितव्यविकल्पनीययोस्समानार्थतामभिसंधाय विकल्पयितव्यमिति वक्तव्ये **विकल्पनीयमि**त्याह । तस्य विवरणम्—**व्याख्येयमिति** । कि व्याख्येयमित्यपेक्षायामाह—**आत्मादितत्त्वमिति । तत्र** विकल्पचतुष्टये । **चतुर्थः**

स्यापि ग्रहणम्। तत्र चतुर्थ उभयप्रधानो विकल्पः, क्रमेणोभयस्यापि शब्देनाभिधेयत्वात्, देशादेशो हि विकलादेशस्तच्च वस्तुनो वैकल्यम्, स्वेन तत्त्वेनाप्रविभक्तस्यापि विविक्तं गुणरूपं स्वरूपेणोपरञ्जकमपेक्ष्य प्रतिकल्पितमंशभेदं कृत्वाऽनेकान्तात्मकैकत्वव्यवस्थायां नरसिंहनरसिंहत्ववत् समुदायात्मकमात्मरूपमभ्युपगम्याभिधानं विकलादेशः, न तु केवलसिंहसिंहत्ववदेकात्मकैकत्वपरिग्रहात्, यथा च प्रतिपादनोपायार्थपरिकल्पितानेकनीलपीतादिभागानिर्विभागमगनेकात्मकमेकं चित्रं सामान्यरूपमुच्यते, तथा वस्त्वप्यनेकधर्मस्वभावमेकम्, दृष्टश्चाभिन्नात्मनोऽर्थस्य भिन्नो गुणो भेदकः—परुद्भवान् पटुरासीत् पटुतर ऐषमोऽन्य एवाभिसंवृत्तः, पटुत्वातिशयो गुणः सामान्यपाटवाद् गुणादन्यः, स वस्तुनो भेदं कल्पयति, भिन्नप्रयोजनार्थिना तथाश्रितत्वात्, अनेकात्मकं चैकत्वमात्मादेः, यतोऽनेकं शुद्धाशुद्धं द्रव्यार्थमाश्रित्य पर्यायनयं चैकात्मनो वृत्तिः, तथात्मकोऽसौ तद्भावभावित्वात्, घटमृदात्मकत्ववत् पुरु-

स्यादस्ति च नास्ति चेत्येवंरूपः। **उभयप्रधानः,** अस्तित्वनास्तित्वोभयप्रधान। तत्र हेतुः—**क्रमेणे**त्यादि, **क्रमेण** समुच्चयात्मकक्रमेण, यत्र समुच्चयो भवति तत्र क्रमोऽस्त्येवैकस्याभिधानानन्तरमेकस्याभिधानमिति। **उभयस्यापि** सत्त्वासत्त्वोभयस्यापि। **शब्देन** स्वस्वप्रतिपादकशब्देन। विविक्त—परस्पर प्रविभक्तो गुण एव वस्तुनो वैकल्यं तत्प्रतिपादकत्वेन अस्य भङ्गस्य विकलादेशत्वमित्युपपादनायाह—**देशादेशो ही**ति, हि यतः, देशादेशः—देशे आदेशः स एव विकलादेश, स एव च वस्तुनः खण्डेऽवस्थापनाद्वैकल्यमित्याह—**तच्च वस्तुनो वैकल्य**मिति, **तच्चे**तिस्थाने **तस्ये**ति पाठे तु, तस्य अनन्तधर्मात्मकतया प्रसिद्धस्य। देशादेशस्य विकलादेशतामुपपादयति—**स्वेन तत्त्वेने**ति, अनन्तधर्मात्मकैकस्वरूपत्वलक्षणतत्त्वेनेत्यर्थः। **अप्रविभक्तस्यापि,** अखण्डस्यापि वस्तुन इति दृश्यम्। **विविक्तं** परस्परविभिन्नम्। **गुणरूपं** सत्त्वादिलक्षणम्। तस्य गुणत्वोपपत्तये आह—**स्वरूपेणोपरञ्जक**मिति, स्वस्वरूपेण परोपरञ्जकस्य गुणत्वप्रसिद्धेः। यदा च गुणस्वरूपोपरञ्जितं वस्तु भवति तदा गुणभेदेन वस्तुभेदोऽप्ययत्नोपनत एवेत्याह—**प्रतिकल्पितमंशभेद**मिति, अन्यकृतभेदस्य वास्तविकत्वाभावात्प्रतिकल्पितमिति, **प्रकल्पित**मिति पाठो युक्तः, गुणरूपं प्रतीत्य कल्पितमित्यर्थाभिप्रायेण युज्येतापि प्रतिकल्पितमिति, परं तस्यार्थस्यापेक्ष्येत्यनेनैव प्राप्तत्वादिति बोध्यम्, एवंभूतमंशभेदं कृत्वा योऽयं देशादेशः सोऽनेकान्तात्मैकैकतत्त्वव्यवस्थाया विकलादेशस्सन् वस्तुनो वैकल्यं भवति, एकान्ततत्त्वव्यवस्था यदि स्यात्तदा स वस्तुप्रतिपादकत्वात्सकलादेशः स्याद् अपि सा त्वनुपपन्नत्वात्प्रामाणिकैरनादरणीयैवेत्यभिसन्धिः। विकलादेशत्वे दृष्टान्तमाह—**नरसिंहनरसिंहत्ववदि**ति, नरसिंहेऽखण्डव्यक्तिस्वरूपे भागकल्पनमपेक्ष्य नरत्वसिंहत्वविकल्पवदित्यर्थः। केनाभिसधिना विकलादेशः प्रवर्त्तत इत्यपेक्षायामाह—**समुदायात्मके**ति, सत्त्वासत्त्वादिगुणसमुदायात्मकमित्यर्थः। अखण्डैकरूपात्मकवस्त्वभ्युपगमनेनाभिधानन्तु सकलादेश एव न विकलादेश इत्याह—**न त्वि**ति। सिंहे सिंहत्ववचनं यथा न विकलादेशस्तथैवैकात्मस्वरूपवस्तुगतैकत्वाभ्युपगमेनैकत्ववचनं न विकलादेश इत्येतत्प्रतिपादयति—**केवले**त्यादिना। नन्वनेकधर्मस्वभावस्य वस्तुन एकत्वमेवानुपपन्नमित्यसम्भवदर्थैकवचनस्य सकलादेशत्वमपि न युज्यत इत्यत आह—**यथा चे**ति, प्रतिपादनोपायार्थं परिकल्पितोऽनेकनीलपीतादिभागो यस्य तत्प्रतिपादनोपायार्थपरिकल्पितानेकनीलपीतादिभागम् एवंभूतं सद् अनिर्विभागमखण्डमत एव चानेकात्मकम् एकम् एतादृशं चित्रं सामान्यरूपं यथोच्यते इति दृष्टान्तप्रकटनम्। तथा चानेकात्मकैकस्वभावस्य चित्रस्य यथैकत्ववचनं नासम्भवदर्थकं तथा वस्तुन्यप्येकत्ववचनमित्याह—**तथे**ति। ननु गुणानामनेकत्वेऽपि ततो गुणिन एकस्यानेकत्वं कुतः? नहि अन्यस्य भेदेऽन्यस्य भेदो युक्त इत्यनेकात्मकत्वमेव वस्तुनोऽनुपपन्नमिति तदाश्रयणेन विकलादेशोऽपि कथं सङ्गतिमङ्गतीत्यत आह—**दृष्टश्चे**ति। **परुत्** गतसवत्सरे। **ऐषमः,** वर्त्तमानसवत्सरे। **तथाश्रितत्वात्** वस्तुनो भेदकत्वेन गुणभेदस्याश्रितत्वात्। आत्मनोऽनेकात्मकत्वे सत्येकत्वं भावयति—**यत** इत्यादिना। शुद्धद्रव्यार्थाश्रयणे एकमेव नानेकमिति द्रव्यार्थस्य विशेषणं **शुद्धाशुद्ध**मिति। **पर्यायनयं च,** अयमनेकत्वमभ्युपगच्छत्येव न तत्र विशेषणकृत्यं समस्तीत्यविशेषितस्यैव तस्योपादानम्। **एकात्मनः** परिणामिनो **वृत्तिः** परिणामोऽनेकमिति। ननु परिणामस्य परिणामिनोऽन्यत्वमेव, तथा च परिणामस्यानेकत्वेऽपि कथं परिणामिन एकस्यात्मनोऽनेकत्वमित्यत आह—**तथात्मकोऽसा**विति, असौ वृत्तिः परिणामः। **तथात्मकः** परिणम्यमानात्मस्वरूपः। **तद्भावभावित्वात्** परिणम्यमानात्मभावे सति भावात्, तदभावे चाभावादित्य-

पपाण्यद्यात्मकत्ववद् वा, अतस्ते तस्यारम्भकत्वाद् भागाः पुरुषस्येव पाण्याद्यो वस्त्वंशमनुभवन्ति क्रमेण क्रमयौगपद्याभ्यां वृत्ता वा, चतुर्थे तावत् समुच्चयात्मकेन क्रमेण वृत्ताः, पञ्चमषष्ठयोरपचित-क्रमयुगपद्वृत्ताः, सप्तमे प्रचितक्रमयौगपद्याभ्यां वृत्ताः—संश्चासंश्चावक्तव्यश्चेत्यनेकबुद्धिबुद्धित्वाद्, अनेक-बुद्धिर्हि बुद्धिर्भवति द्रव्यपर्यायेषु सत्सु त्र्यात्मिका, यतोऽनेकां सद्रूपामसद्रूपामवक्तव्यरूपां च बुद्धिं भिन्नामिव क्रमवतीमिवाश्रित्याभिन्नैकाक्रमा वस्तुरूपा वाक्यार्थबुद्धिर्भवति, तस्माद् भेदक्रमप्रतिभास-विज्ञानहेतुत्वाद् भागास्ते भवन्त्यत्राविभक्तस्यैकस्यापि वस्तुनः । एवं चानेकस्वभावेऽर्थे सति वक्तुरि-च्छावशात् कदाचित् केनचिद् रूपेण वक्तुमिष्यते, विवक्षायत्ता च वचसः सकलादेशता विकलादेशता च द्रष्टव्या, द्रव्यार्थजात्यभेदात् तु सर्वद्रव्यार्थभेदानेवैकं द्रव्यार्थं मन्यते, यदा पर्यायजात्यभेदाच्चैकं

---

पिवोध्यम् । एतद्दार्ष्टान्तिकाय दृष्टान्तमुपदर्शयति—**घटेति** । अतः परिणामस्य परिणाम्यात्मकत्वात् । ते परिणामभूता गुणाः । **तस्यैक**गुणिन आत्मनः । यद्यपि आत्मा परिणामी आरम्भकः कारणत्वात्, न तु परिणामा आरम्भकाः कार्यत्वात्, तथापि परिणामपरिणामिनोरभेदात्परिणामभवने परिणामिन आत्मनोऽपि भवनम्, तच्च भवनं परिणामभवननिबन्धनं परि-णामनिबन्धनतयोपचर्यत इत्याशयः । **वस्त्वंशमनुभवन्ति** वस्त्वंशत्वं प्राप्नुवन्ति । कुत्र भङ्गे क्रमेण वृत्ताः कुत्र च क्रमयौगपद्याभ्यां वृत्ता इत्याकाङ्क्षायामाह—**चतुर्थ** इति, स्यादस्ति च स्यान्नास्ति चेति चतुर्थभङ्ग इत्यर्थः । ननु चतुर्थभङ्गे अस्तित्वस्य नास्तित्वस्य च समुच्चय एव न तु क्रम इति कथं तत्र क्रमवृत्तत्वमित्यत आह—**समुच्चयात्मकेनेति**, योऽसौ तयोः समुच्चय. स एव क्रमः, नहि एकाभिधानान्तरमेकाभिधानलक्षणं क्रममन्तरेण समुच्चयः सम्भवतीति । स्यादस्ति स्यादवक्तव्य इति पञ्चमे भङ्गे एकस्यास्तित्वस्य गुणस्यापेक्षया क्रमस्य सद्भावेऽपि अन्यस्य नास्तित्वगुणस्यापेक्षया न क्रमः, एवं स्यान्नास्ति स्यादवक्तव्य इति षष्ठे भङ्गे एकस्य नास्तित्वगुणस्यापेक्षया क्रमभावेऽपि अन्यस्यास्तित्वगुणस्यापेक्षया न क्रम इत्युभयत्रापचितोऽपुष्टः क्रमः, यौगपद्यन्तूभयत्रास्तित्वनास्तित्वयोर्युगपद्विवक्षया समस्तीत्याशयेनाह—**पञ्चमषष्ठयोरिति** । स्यादस्ति स्यान्नास्ति स्यादवक्तव्य इति सप्तमभङ्गे तु अस्तित्वनास्तित्वयोरुभयोरपि क्रमो विद्यत इति प्रचितः—पुष्टः क्रमो यौगपद्यमपीत्याह—**सप्तम** इति । क्रमयुगपद्वृत्तानां गुणाना बुद्धेरनेकबुद्धित्वेनानेकत्वं वाक्यार्थबुद्धित्वेनैकत्वमिति ग्राहकस्यैका-नेकत्वेन ग्राह्यस्य वस्तुनोऽप्येकानेकात्मकत्वमिति भावयितुं सप्तस्य तावदाकारमुल्लिखति—**संश्चासंश्चावक्तव्यश्चेतीति**, ग्राहकबुद्धेरप्ययमेवाकारः—सश्चासंश्चावक्तव्यश्चेति, तथा च भङ्गक्रमेणैवं प्रयोगः—सत्त्वासत्त्वे क्रमेण वृत्ते सश्चासश्चेत्यनेक-बुद्धिबुद्धित्वात्, सत्त्वावक्तव्यत्वे क्रमयुगपद्वृत्ते संश्चावक्तव्यश्चेत्यनेकबुद्धिबुद्धित्वात्, असत्त्वावक्तव्यत्वे क्रमयुगपद्वृत्ते असंश्चा-वक्तव्यश्चेत्यनेकबुद्धिबुद्धित्वात्, सत्त्वासत्त्वावक्तव्यत्वानि क्रमयुगपद्वृत्तानि सँश्चासंश्चावक्तव्यश्चेत्यनेकबुद्धिबुद्धित्वात्; बुद्धेर-नेकत्वञ्चानेकाकारत्वात्, अनेकबुद्धिर्बुद्धिर्यस्येति व्युत्पत्तितोऽनेकबुद्धिबुद्धित्वस्य पक्षधर्मताऽवसेया, सप्तमभङ्गदर्शितप्रकारश्च-तुर्थपञ्चमषष्ठभङ्गेष्वपि सुलभ इति लाघवैषिणाऽऽचार्येण सप्तमभङ्गमुल्लिख्यैवानेकबुद्धिबुद्धित्वं हेतुत्वेनोपन्यस्य तदनुगमनमेव विभावितमिति बोध्यम् । सप्तमभङ्गोल्लिख्यमानवाक्यार्थबुद्धेरनेकत्वमेकत्वञ्च भावयति—**अनेकबुद्धिर्हीति**, हि यतः, सत्सु द्रव्यपर्यायेषु बुद्धिरनेकबुद्धिर्भवति यतः त्र्यात्मिका । त्र्यात्मकत्वे सत्यप्येकात्मकत्वं बुद्धेः प्रपञ्चयति—**यत** इत्यादिना । **अनेकामिति**, बुद्धिमित्यनेनान्वेति । कथमनेकामित्याकाङ्क्षायामाह—**सद्रूपामित्यादि** । सा बुद्धिर्यद्यपि व्यक्त्यात्मनैकैव तथापि विषयोपाधिभेदाद्भिन्नेव प्रतिभातीत्यभिप्रेत्याह—**भिन्नामिवेति** । आकारक्रम आकारिण्यपचर्यत इत्याशयेनाह—**क्रमवती-मिवेति**, एवंविधां बुद्धिमाश्रित्य एतादृशबुद्धिस्वरूपमात्माभेदेनावलम्ब्य भवन्ती सप्तमभङ्गजनिता वाक्यार्थबुद्धिस्स्वतः कीदृशी भवति ? इत्याकाङ्क्षायामाह—**अभिन्नेति** । अनेकरूपत्वे अप्यनेकाभेदमवलम्ब्याभिन्ना नात्राभिप्रेतेत्यावेदनायाह—**एकेति** । एकस्य क्रमो न सम्भवत्येवेत्यावेदनायाह—**अक्रमेति** । अक्रमस्य सखण्डस्वरूपवैकल्याभावेन भागत्वासम्भवाद्वस्तु-रूपतैवेत्यावेदनायाह—**वस्तुरूपेति** । तथा चैकापि वाक्यार्थबुद्धिर्यद्वशादनेकरूपतया सम्पद्यते ते बुद्धिगतानेकबुद्धित्वप्रयो-जकत्वाद्भागा अवसेयाः, तेषाञ्चावबोधकत्वाच्चतुर्थादिभङ्गा विकलादेशा इति निगमयति—**तस्मादिति** । नन्वस्तु गुणाना भागत्वम्, यथा चानेकगुणस्य भागत्वं तथैकस्यापि भागत्वमेव नहि तदेकपरिसमाप्तं वस्त्विति सकलादेशता विकलादेशता कथमवधार्येत्यपेक्षायामाह—**एवं चेति**, वस्तुन एकानेकस्वभावत्वे सिद्धे गुणानां भागत्वे सिद्धे चेत्यर्थः । आद्यभङ्गत्रिकस्य

पर्यायार्थं सर्वपर्यायभेदान् प्रतिपद्यते तदा त्वविवक्षितस्वजातिभेदत्वात् सकलं वस्त्वेकद्रव्यार्थाभिन्नमेकपर्यायार्थाभेदोपचरितं तद्विशेषैकाभेदोपचरितं वा तन्मात्रमेकमद्वितीयांशं ब्रुवन् सकलादेशः स्यान्नित्य इत्यादिस्त्रिविधोऽपि नित्यत्वानित्यत्वयुगपद्भावैकत्वरूपैकार्थाभिधायी, यदा तु द्रव्यपर्यायसामान्याभ्यां तद्विशेषाभ्यां वा तद्यौगपद्येन वा वस्तुन एकत्वं तदतदात्मकं समुच्चयाश्रयं चतुर्थविकल्पे स्वांशयुगपद्वृत्तं क्रमवृत्तं च पञ्चमषष्ठसप्तमेषूच्यते तथाविवक्षावशात् तदा तु तथा प्रतिपादयन् विकलादेशः, ते हि द्रव्यपर्यायास्तस्य देशाः तदादेशेनादेश एको ह्यनेकदेश आत्माऽभिधीयते, तत्र द्रव्यार्थसामान्येन तावद् वस्तुत्वेन सन्नात्मा, पर्यायसामान्येनावस्तुत्वेनासन्निति, विशेषस्त्वात्मनि स्वद्रव्यत्वात्मत्वचेतनत्वद्रष्टृत्वज्ञातृत्वमनुष्यत्वादिरनेको द्रव्यार्थभेदः, तथा श्रुतप्रतियोगिनः पर्याया अस्वद्रव्यत्वानात्मत्वाचेतनत्वादयः, तद्द्रव्यक्षेत्रकालभावसम्बन्धजनिताश्च द्रव्यपर्यायवृत्तिभेदाः, तत्र द्रव्यार्थादेशात् स्वद्रव्यतया द्रव्यत्वम्, पृथिव्यादित्वेनाद्रव्यत्वं तद्विशेषैश्च घटादिभिः, क्षेत्रतोऽसङ्ख्याताकाशदेशव्यापितया, न सर्वव्यापितया, कालतः स्वजात्यनुच्छेदादभिन्नकालता, पर्यायादेशाद् घटादिविज्ञानदर्शनभेदाः क्रोधाद्युत्कर्षापकर्षभेदाश्च, तथाऽनन्तकालवृत्तस्ववर्तनाभेदात् कालभेदः, भावतो ज्ञत्वं

---

सकलादेशत्वं विवक्षाधीनमुपपादयितु प्रथमभङ्गमधिकृत्याह–**द्रव्यार्थजात्यभेदात्त्विति**, द्रव्यार्थाना द्रव्यार्थनयविषयाणां सत्त्वनित्यत्वाभेदादीना द्रव्यार्थत्वरूपैकजात्याऽभेदात्पुनः। **सर्वद्रव्यार्थभेदान्** सकलद्रव्यार्थविशेषान्। **एव**कारेण पर्यायार्थविशेषव्यवच्छेदः, पर्यायार्थविशेषाणा द्वितीयभङ्गविषयत्वेन तेषा प्रथमभङ्गेन प्रतिपादयितुमनभिप्रेतत्वात्, सकलद्रव्यार्थविषयकत्वादेव प्रथमभङ्गे सकलादेशत्वस्य सकलपर्यायार्थविषयकत्वादेव च द्वितीयभङ्गे सकलादेशत्वस्याभिप्रेतत्वादिति बोध्यम्। द्वितीयभङ्गमधिकृत्याह–**यदा पर्यायजात्यभेदाच्चेति**, पर्यायजातिः पर्यायत्वं तया सर्वपर्यायाणामभेदात्पुनरित्यर्थः। सर्वद्रव्यार्थाभेदसर्वपर्यायार्थाभेदयुगपद्विवक्षाधीनावक्तव्यत्वस्य सर्वद्रव्यार्थाभेदसर्वपर्यायार्थाभेदाकलितस्यैकात्मतयैव विवक्षितत्वात्तृतीयभङ्गस्यापि सकलादेशत्वमित्यभिसन्धिः। प्रथमद्वितीयभङ्गावधिकृत्य तृतीयभङ्गमधिकृत्य चोक्तम्–**तद्विशेषैकाभेदोपचरितं वेति**, तत्र तृतीयभङ्गाधिकारे तत्पदेन द्रव्यार्थपर्यायार्थोभयपरामर्ष, तस्य विशेष –अवक्तव्यत्वं तद्रूप यदेकं तेन सहाभेदोपचरितमित्यर्थं। **स्यान्नित्य इत्यादिरिति**, आदिपदात्स्यादनित्य. स्यादवक्तव्य इत्येतयोः परामर्षः। तुर्यादिभङ्गचतुष्टस्य विकलादेशत्वमुपपादयति–**यदा** त्वित्यादिना। **तद्विशेषाभ्यां** द्रव्यविशेषपर्यायविशेषाभ्याम्। **तद्यौगपद्येन** द्रव्यपर्यायसामान्ययौगपद्येन, द्रव्यविशेषपर्यायविशेषयौगपद्येन। **तदतदात्मकं**, नित्यानित्यात्मकम्, **वस्तुनः समुच्चाश्रयं तदतदात्मकमेकत्वं चतुर्थविकल्पे**–स्यान्नित्यं स्यादनित्यमिति तुर्यभङ्गे **उच्यते** इत्यन्वयः। **ते** समुच्चाश्रयनित्यत्वानित्यत्वादयः। **तस्य** वस्तुनः। **द्रव्यपर्यायसामान्याभ्यां तद्विशेषाभ्यामि**त्यादि यदुक्तं तदेव प्रपञ्चत उपदर्शयन् चतुर्थभङ्गमुपपादयति–**तत्रे**त्यादिना। सत्त्वासत्त्वादिगोचरसप्तभङ्ग्याश्रयणेनोपपादनप्रकारोऽन्यत्राप्यनुसन्धेयः, द्रव्यार्थविशेषाणा बहुविधत्वेऽपि कतिपयविशेषात्प्रतिपाद्यजनप्रतिपत्तिसौलभ्यायोपदर्शयति–**विशेषस्त्वि**ति। पर्यायविशेषानुपदर्शयति–**तथे**ति। **श्रुतप्रतियोगिन** इति, श्रुता ये स्वद्रव्यत्वादयस्तत्प्रतियोगिनस्तत्प्रतिपक्षभूता इत्यर्थः। **अस्वद्रव्यत्वे**त्यादि, स्वद्रव्यत्वस्य प्रतिपक्षमस्वद्रव्यत्वम्, आत्मत्वस्य प्रतिपक्षमनात्मत्वम्, चेतनत्वस्य प्रतिपक्षमचेतनत्वम्, आदिपदादद्रष्टृत्वाज्ञातृत्वामनुष्यत्वादेर्ग्रहणम्, अद्रष्टृत्वादयश्च द्रष्टृत्वादीना प्रतिपक्षाः, असत्त्वाद्रव्यत्वेत्यादिपाठस्तु न सम्यग्, असत्त्वस्य श्रुतप्रतियोगित्वाभावादिति बोध्यम्। उक्तादन्येऽपि द्रव्यपर्यायविशेषा द्रव्यादिसम्बन्धात् सम्भवन्ति, तानुपदर्शयति–**तद्द्रव्येति**। **तद्विशेषैश्च** पृथिव्यादिविशेषैश्च। **घटादिभिरि**त्यनन्तरम् **अद्रव्यत्वमि**त्यस्यानुकर्षः। द्रव्यत आत्मनः द्रव्यत्वमद्रव्यत्वञ्च वृत्तिभेदमुपदर्श्य क्षेत्रतो द्रव्यत्वमद्रव्यत्व च वृत्तिभेदमुपदर्शयति–**क्षेत्रत** इति। कालत द्रव्यपर्यायवृत्तिभेदमुपदर्शयति–**कालत** इति। **पर्यायादेशादि**त्यग्रिमग्रन्थस्वारस्यात् **स्वजात्यनुच्छेदादिति द्रव्यार्थादेशादि**त्यस्यैव शब्दान्तरेण कथन बोध्यम्। **अभिन्नकालता** द्रव्यवृत्तिविशेष इति। **पर्यायादेशादि**ति, पर्यायनये आत्मा ज्ञानदर्शनरूप इति तदादेशात्। **घटादिविज्ञानदर्शनविशेषाः** पर्यायवृत्तिविशेषा इत्यर्थः, एकस्यात्मन एव कदाचित्क्रोधाद्युत्कर्षो भवति कदाचित्क्रोधाद्यपकर्षो

क्रोधादिमत्त्वं च, एवं बहवो द्रव्यार्थपर्यायार्थयोर्वृत्तिभेदाः सर्वेऽपि तस्यांशाः, तैर्द्रव्यपर्यायरूपैर्वक्तुमिष्यमाणो नानारूप आत्मोच्यते। भावना तु स्यादस्ति च नास्ति च, द्रव्यार्थभेदेन चैतन्यसामान्येनास्ति, चैतन्यविशेषविवक्षायां वाऽस्त्येकोपयोगत्वात्, पर्यायतस्तु अचैतन्येन नास्ति, घटोपयोगकाले वा पटाद्युपयोगेनासन्, चैतन्येन तद्विशेषेण वा वर्तमान एव तदभावेन तद्विशेषाभावेन वर्तते इत्युभयाधीनस्तस्यात्मा, अन्यथाऽऽत्माभाव एव स्यात्। एवं सर्वसिद्धान्तेषु पदार्थाः परस्परविरुद्धार्थत्वात् तदतद्रूपसमुच्चयात्मकाश्चतुर्थविकल्पोदाहरणीयाः ॥

पञ्चमविकल्पस्तु—स्यादस्ति चावक्तव्यश्चात्मेति, तत्रानेकद्रव्यपर्यायात्मकस्य सतः कञ्चिद् द्रव्यार्थविशेषमाश्रित्यास्तीत्यात्मनो व्यपदेशः, तस्यैवान्यात्मद्रव्यसामान्यं तद्विशेषं द्वयं वाऽङ्गीकृत्य युगपद्विवक्षायामवक्तव्यता, स्फुटतरमेतद् विभाव्यते—स्यादस्त्यात्मा द्रव्यत्वेन द्रव्यविशेषेण वा जीवत्वेन मनुष्यत्वादिना वा, द्रव्यपर्यायसामान्यमुरीकृत्य वस्तुत्वावस्तुत्वसत्त्वासत्त्वादिना विशेषेण वा मनुष्य-

---

भवति क्रोधादिपरिणतस्येति पर्यायदेशात्क्रोधाद्युत्कर्षापकर्षभेदा अपि कालतः पर्यायवृत्तिविशेषा एव। एवं कालतोऽन्योपि पर्यायवृत्तिविशेष इत्याह—**तथेति**। भावतो द्रव्यपर्यायवृत्तिविशेषानात्मनो दर्शयति—**भावत** इति। **ज्ञत्वं** द्रव्यवृत्तिविशेषः, **क्रोधादिमत्त्वं** च पर्यायवृत्तिविशेषः। **एवम्**उक्तप्रकारेण। **तस्य** वस्तुभूतस्यात्मनः। **तैर्द्रव्यार्थपर्यायार्थ**वृत्तिविशेषैः। इदानीं तुरीयभङ्गोपपत्तिमधिकरोति—**भावना त्विति**। **स्यादस्ति च नास्ति चेति** सामान्यतस्तुरीयभङ्गस्वरूपमुद्घाटितम्। तद्द्रव्यार्थपर्यायार्थविशेषैरुपपत्तिपद्धतिमानयति—**द्रव्यार्थभेदेनेति**। चैतन्यविशेषेणास्तित्वमाश्रित्यापि स्यादस्तीत्यंशो घटत इत्याह—**चैतन्यविशेषविवक्षायामिति**। स्यादस्तीति विभाव्य स्यान्नास्तीति विभावयति—**पर्यायतस्त्विति**, पर्यायनयेनेत्यर्थः। **अचैतन्येन** चैतन्यसामान्यप्रतिपक्षेण। चैतन्यविशेषस्य कस्यचिदन्योपि चैतन्यविशेषो विपक्षो भवति तेनापि नास्तीत्यंश उपपद्यत इत्याशयेनाह—**घटोपयोगकाले चेति**। **चैतन्येन** चैतन्यसामान्येन। **तद्विशेषेण** घटाद्युपयोगलक्षणचैतन्यविशेषेण। **तदभावेन,** चैतन्यसामान्याभावेन, अचैतन्येनेति यावत्। **तद्विशेषाभावेन** घटाद्युपयोगलक्षणचैतन्यविशेषाभावेन। **उभयाधीनः** सत्त्वासत्त्वोभयाधीनः। **तस्य** वस्तुभूतस्यात्मनः। **आत्मा** स्वरूपम्। **अन्यथा** एकस्यात्मनः सत्त्वासत्त्वोभयानङ्गीकारे। अत्र च न पक्षपातो विधेयः सर्वदर्शन एव चतुर्थभङ्गाभिमतप्रकारो घटत एवेति सर्वदर्शनगोचराः पदार्था एतद्भङ्गदृष्टान्तीभवन्तीत्याह—**एवमिति**। **सर्वसिद्धान्तेष्विति**, यथाऽनेकाकारमेकं चित्रज्ञानम्, तन्मते आकाराकारिणोरभेद इति एकस्यैव चित्रज्ञानस्यानेकत्वमेकत्वञ्च तच्च परस्परविरुद्धमेवेति स्यादेकं स्यादनेकमिति तुर्यभङ्गप्रवृत्तिः, साङ्ख्यनये सत्त्वरजस्तमसां साम्यावस्थाप्रकृतिरित्यस्यैव प्रधानस्य परस्परविरुद्धसत्त्वरजस्तमोगुणात्मकत्वमित्यपेक्षया द्वितीयभङ्गस्तत्राप्यवतरत्येव, न्यायकणादमतयोः पृथिव्यां चित्ररूपमेकानेकात्मकमेवाभ्युपगन्तुमनुभवानुरोधाद्युक्तमित्यत्रापि चतुर्थभङ्गप्रवृत्तिरयत्नोपनतैव, गुणगुणिनोर्भेदाभेदावभ्युपगच्छन्तौ मीमांसकवेदान्तिनावपि तुर्यभङ्गप्रवृत्तिं न वारयितुमीशाविति ध्येयम्। पञ्चमभङ्गं भावयति—**पञ्चमविकल्पस्त्विति**। तस्याकारमुल्लिखति—**स्यादस्ति चावक्तव्यश्चात्मेतीति**। अमुमेवोपपत्तिकोटिमानयति—**तत्रेति**। अस्तीति व्यपदेशमुपपाद्य अवक्तव्यव्यपदेशमुपपादयति—**तस्यैवेति**, आत्मन एवेत्यर्थः। **अन्येति,** यं द्रव्यार्थविशेषमाश्रित्यास्तीति व्यपदेशस्तद्भिन्नेत्यर्थः। **वान्यात्मे**त्यत्र वान्यमात्मेति पाठो युक्तस्तथा सत्येवास्तिव्यपदेशनिमित्तद्रव्यार्थविशेषभिन्नत्वस्यात्मद्रव्यसामान्ये तद्विशेषे चान्वय उपपद्यते। **तद्विशेषम्** आत्मद्रव्यविशेषम्। **द्वयम्** आत्मद्रव्यसामान्यतद्विशेषोभयम्। अस्तिव्यपदेशनिमित्तस्य द्रव्यविशेषस्य क्रमविवक्षायां सत्यामेवोल्लासात्तदानीमेव तस्यासत्त्वेन पर्यायसामान्येन पर्यायविशेषेण वा सह युगपद्विवक्षा न सम्भवतीति तदन्यत्वमात्मद्रव्यसामान्ये तद्विशेषे च विशेषणतयोपात्तम्। **युगपद्विवक्षायामिति,** असत्त्वादिना सह युगपद्विवक्षायामित्यर्थः। सामान्येनोक्तमेव स्पष्टप्रतिपत्त्यर्थमाह—**स्फुटतरेति**। **स्यादस्त्यात्मेति,** द्रव्यत्वेन द्रव्यविशेषेण वा जीवत्वेन मनुष्यत्वादिना वा स्यादस्त्यात्मेति योगः, अनेन च स्यादस्तीत्यंशः स्पष्टीकृतः। अवक्तव्यश्चेत्यंशं स्पष्टीकरोति—**द्रव्यपर्यायसामान्यमुरीकृत्येति**। तत्र द्रव्यसामान्यं वस्तुत्वं सत्त्वं च, पर्यायसामान्यम् अवस्तुत्वम् असत्त्वञ्चेति, एतदभिसन्धायाह—**वस्तुत्वावस्तुत्वसत्त्वासत्त्वादिनेति,** अस्य **युगपदभेदविव-**

त्वामनुष्यत्वादिना युगपदभेदविवक्षायामवाच्यः, यतः सर्वेऽपि तस्यैकस्यात्मनस्तदैव विकल्पाः सम्भवन्तीति ॥

षष्ठविकल्पोऽपि त्रिभिरात्मभिर्व्यंशः—स्यान्नास्ति चावक्तव्यश्चात्मेति, नान्तरेणात्मभेदं वस्तुगतं नास्तित्वमवक्तव्यरूपानुविद्धं शक्यं कल्पयितुं वस्तुनः, तथापि सद्भावात् तत्र नास्तित्वं पर्यायाश्रयम्, स च पर्यायो युगपद्वृत्तः क्रमप्रवृत्तो वा, सहावस्थाय्यविरोधादात्मनो धर्म एककाल एव, यथा—चेतनोपयोगवेदनाहर्षसम्यक्त्वहास्यरतिपुरुषवेदायुर्गतिजात्यादिसत्त्वद्रव्यत्वामूर्तत्वकर्तृत्वभोक्तृत्वान्यत्वानादित्वासङ्ख्यातप्रदेशत्वनित्यत्वादिः, क्रमवर्ती तु क्रोधादिदेवत्वादिबालत्वादिज्ञानितादिः स्वस्थानेऽनेकभेदवृत्तः, तत्रैकोऽवस्थितो द्रव्यार्थो जीवनामा नैवास्ति कश्चिच्चेतनाव्यतिरिक्तः क्रोधादिक्रमवृत्तधर्मरूपैरन्तर्यमात्रव्यतिरिक्तो वा, अत एव तु धर्मास्तथासन्निविष्टाः सत्त्वव्यपदेशव्यवहारभाजो भवन्तीति, अतो नास्ति—पर्यायार्थादेवंविधो द्रव्यार्थस्य कश्चिदंशो नास्तीति, तेन रूपेणाभावात्, न पुनः सर्वथैव नास्तित्वम्, विशिष्टस्याभावस्य विवक्षितत्वात्, पर्यायांशः । सर्वार्थज्ञातृत्वात्सर्वव्यापारविनियोगात् सर्ववस्तुत्वेन सन्निति द्रव्यार्थांशः, आभ्यां सह विवक्षायामवाच्य इति द्वितीयोंऽशः ॥

---

क्षायामित्यनेनान्वयः । **विशेषेण वेति,** द्रव्यपर्यायविशेषेण वेत्यर्थः, तत्र द्रव्यविशेषो मनुष्यत्वादिः पर्यायविशेषोऽमनुष्यत्वादिः । एतदभिसन्धानेनाह—**मनुष्यत्वामनुष्यत्वादिनेति** । **युगपदभेदविवक्षायामिति,** सदसतोर्युगपदभेदविवक्षायामित्यर्थः, अत्रैकस्य क्रमिकविवक्षा तदन्यस्य च युगपद्विवक्षा सम्भवत्येव । ते अंशा वस्तुनः सन्त्येवेति नासम्भवकदर्थितोऽयं विकल्प इत्याह—**यत इति** ॥ षष्ठभङ्गं भावयति—**षष्ठविकल्पोऽपीति** । **त्रिभिरात्मभिरिति,** कश्चित्पर्यायविशेषमाश्रित्य नास्तित्वं तदन्यस्य नास्तित्वसामान्यस्य तद्विशेषस्य वाश्रयणेन च नास्तित्वमिति नास्तित्वद्वयम्, एकश्चास्तित्वं द्वितीयेन नास्तित्वेन सह युगपद्विवक्षितमित्येवं त्रिभिः स्वरूपैरित्यर्थः । **द्व्यंशः** स्यान्नास्तीत्येकोंशः स्यादवक्तव्य इति द्वितीय आभ्यां द्व्यंशः । तत्स्वरूपमुद्घाटयति—**स्यान्नास्ति चावक्तव्यश्चात्मेतीति** । एतच्च वस्तुनः स्वरूपभेदमुररीकृत्यैव सम्भवति न त्वेकत्वैकान्ते इत्याह—**नान्तरेणेति,** वस्तुगतमात्मभेदमन्तरेण वस्तुनोऽवक्तव्यरूपानुविद्धं नास्तित्वं कल्पयितुं न शक्यमित्यन्वय । **आत्मभेदं** स्वरूपभेदम् । अवक्तव्यशरीरे सहभावविवक्षातोऽस्तित्वमप्याकृष्टमेव, अस्तित्वमन्तरेण केन सह नास्तित्वस्य युगपद्विवक्षा स्यात्? यथाऽवक्तव्यमित्युच्येत, तथा च नास्ति चावक्तव्यश्चेत्युक्तौ वस्तुनः सद्भावोऽपि गम्यत एवेत्याह—**तथापीति,** नास्तित्वे सत्यवक्तव्यत्वेऽपीत्यर्थः । **सद्भावात्** सत्त्वात् । **तत्र** षष्ठभङ्गे । **पर्यायाश्रयम्** आत्मनः परगताचैतन्यादिपर्यायनिबन्धनम् । **स च** अचैतन्यादिरूपपर्यायश्च । **युगपद्वृत्तः,** अवक्तव्यस्वरूपे सत्त्वेन सह युगपद्विवक्षया वृत्तः । **क्रमप्रवृत्तः** स्यान्नास्तीत्यंशे क्रमप्रवृत्तः । **वाकारो** यस्य नास्तित्वपर्यायस्य युगपद्वृत्तत्वं तदन्यस्यैव नास्तित्वपर्यायस्य क्रमप्रवृत्तत्वमित्यर्थस्यावगतये एकस्यैवैकदा क्रमयुगपद्विवक्षयोरघटनादिति बोध्यम् । यत्क्रमवृत्तं नास्तित्वं तद्युगपद्वृत्तनास्तित्वेन सह वर्त्तते तयोर्विरोधे मानाभावात् इत्येककाले नास्ति चावक्तव्यश्चेति सम्भवतीत्याह—**सहावस्थायीति** । अत्र पर्यायार्थिकनयापेक्षयाऽऽत्मनो नास्तित्वं न तु सर्वथा । द्रव्यास्तिकापेक्षयाऽस्तित्वमपीत्येतत्प्रकटनाय आत्मनः सहवर्त्तिन पर्यायान् क्रमवर्त्तिनः पर्यायाश्चोपदर्शयति—**यथेत्यादिना** । तदुपदर्शनेन पर्याया एव विभाव्यन्ते न तु द्रव्यमेकमनुभूयत इत्येवं परपर्यायानाश्रयणेऽपि स्वपर्यायाश्रयणत एवात्मनो नास्तित्वं घटते द्रव्यरूपस्यात्मन इत्याविष्कृतम्भवति । चेतनोपयोगादीना युगपदवस्थानं सम्भवतीति युगपदवस्थितास्ते पर्यायाः क्रोधादयश्च क्रमवर्त्तिनः पर्याया. नोक्तपर्यायेभ्योऽन्यदात्मद्रव्यमेकमनुभूयत इति नास्तीत्याह—**तत्रेति,** तेषु पर्यायेष्वित्यर्थ. । **चेतनाव्यतिरिक्त** इत्यनेन युगपदवस्थायिपर्यायमात्रव्यतिरिक्तो गृह्यते । क्रमवृत्तपर्यायव्यतिरिक्तोऽप्यात्मा नास्तीत्याह—**क्रोधादीति** । यद्यात्मद्रव्यं नास्त्येव पर्यायनये तदाऽऽत्मा जीवः प्राणी सत्त्वमित्यादिव्यपदेशो निर्निबन्धनस्तत्र प्रसज्यत इत्यत आह—**अत एव त्विति,** पर्यायव्यतिरिक्तस्यात्मानोऽभावादेव पुनः पर्यायादेशेनात्मनो नास्तित्वमुपसंहरति—**अत इति** । **नास्तीति** व्याख्येयस्वरूपं तद्व्याख्यानमाह—**पर्यायार्थादेवंविधो द्रव्यार्थस्य कश्चिदंशो नास्तीति** । **तेन रूपेण** द्रव्यार्थरूपेण । **विशिष्टस्य** द्रव्यार्थरूपावच्छिन्नस्य । **अभावस्य** सत्त्वाभावरूपनास्तित्वस्य । **पर्यायांश** इत्यत्र छेदः, उक्तदिशा-

अधुना सप्तमविकल्पश्चतुर्भिरंशैस्त्र्यंशः। कञ्चिद् द्रव्यार्थविशेषमाश्रित्यास्तित्वं पर्यायविशेषं च कञ्चिदङ्गीकृत्य नास्तित्वं समुच्चितरूपं भवति, द्वयोरपि प्राधान्येन विवक्षितत्वात्, तथा द्रव्यसामान्येन पर्यायसामान्येन च युगपदवक्तव्यः, स्यादस्ति च नास्ति चावक्तव्यश्चात्मेति। भावना तु द्रव्यार्थात् सति द्रव्यत्वे देहेन्द्रियादिव्यतिरिक्तात्मत्वेन विशेषेण नास्तित्वमतोऽस्ति च नास्ति च स एवात्मा, द्रव्यपर्यायसामान्यसदसत्त्वाभ्यां युगपदवाच्य इति। एवमर्थानुरोधाद् विवक्षावशाच्च सप्तधैव वचनप्रवृत्तिः, नान्यथाऽपि प्रवृत्तिनिमित्ताभावात्, एष च मार्गो द्रव्यार्थपर्यायार्थाश्रयः, तौ च सङ्ग्रहाद्यात्मकौ, सङ्ग्रहादयश्चार्थशब्दनयरूपेण प्रधाविताः, तत्र सङ्ग्रहव्यवहारर्जुसूत्रैरर्थनयैर्यौ द्रव्यार्थपर्यायार्थौ तदाश्रयैषा सप्तभङ्गी। तत्र अनपेक्षितोपदेशकशब्दव्यापारमिन्द्रियानिन्द्रियनिमित्तमर्थरूपोत्पादितं मतिज्ञानम्, अर्थनया वक्तृपरिच्छेदविषयाः, ते त्वर्थपृष्ठेनैवार्थं गमयन्ति। शब्दनयास्तु साम्प्र-

निरूपितस्वरूपं नास्तित्वं पर्यायांश इत्यर्थः। द्रव्यार्थांशमाह-**सर्वार्थज्ञातृत्वादिति,** आत्मा सर्वपदार्थाञ्जानातीति सर्वरूपः सर्वव्यापारे प्रधानत्वादात्मन एव विनियोग इत्यतोऽपि सर्वरूप इत्येवं सर्ववस्तुत्वमात्मनो रूपमिति सर्ववस्तुत्वेन सन्नात्मेति द्रव्यांशः। **आभ्यां** पर्यायांशद्रव्यांशाभ्याम्, अस्मिन् भङ्गे एकं नास्तित्वं परगताचैतन्यादिधर्मेणात्मनोऽभावात्परपर्यायापेक्षया द्वितीयञ्च पर्याया एव सन्ति न तद्व्यतिरिक्तमात्मद्रव्यमिति पर्यायार्थिकनयाश्रयेण द्रव्यांशरूपेणात्मनोऽभाव इत्येवंरूपं स्वपर्यायाश्रयेण, तच्चावक्तव्यस्वरूपप्रविष्टम्, एकञ्च द्रव्यार्थांशोऽस्तित्वमिति त्रिभिरात्मभिः-स्यान्नास्ति स्यादवक्तव्यश्चेति॥ सप्तमभङ्गम्भावयति-**अधुनेति**। **चतुर्भिरंशैरिति** यदुक्तं तदेवोपपत्तिकोटिमानयति-**कञ्चिदि**त्यादिना। **समुच्चितरूपमिति,** स्यादस्ति स्यान्नास्तीत्येवं क्रमविवक्षयोपनीतोभयरूपमित्यर्थः, अनेनांशद्वयं प्रतिपादितम्। **द्वयोरपि** अस्तित्वनास्तित्वोभयोरपि। **विवक्षितत्वात्,** क्रमेण विवक्षितत्वात्। यच्च द्रव्यार्थविशेषमाश्रित्यास्तित्वं पर्यायविशेषं च नास्तित्वं क्रमविवक्षयोपनीतं तदेव तदानीमेव युगपद्विवक्षयितुं न शक्यते एकस्यैकदा क्रमयुगपद्विवक्षयोरसम्भवादतो द्रव्यसामान्यमस्तित्वं पर्यायसामान्यं च नास्तित्वं युगपद्विवक्षयाऽवक्तव्यरूपतामनुभवतीत्याह-**तथेति**। एवं चावक्तव्यांशेऽशद्वयं प्रविष्टमिति भवत्यस्य चतुर्भिरंशैर्निष्पत्तिः। त्र्यंशतां चास्य स्वरूपोपदर्शनेन प्रकटयति-**स्यादस्ति च नास्ति चावक्तव्यश्चात्मेती**ति। अस्तित्वनास्तित्वावक्तव्यत्वानामेकत्र सद्भावोपपत्तिम्भावयति-**भावना त्विति**। **द्रव्यार्थाद्** द्रव्यार्थिकनयाश्रयणात्। **सति द्रव्यत्वे** द्रव्यत्वे सति, तेन रूपेणात्मनोऽस्तित्वमिति। एवं सामान्यतो द्रव्यत्वेनास्तित्वे सत्येव, **विशेषेणा**त्मगतेनैव द्रव्यार्थदेशान्नास्तित्वं यतो द्रव्यार्थो विशेषेणात्मनः सत्तां नाभ्युपगच्छतीत्याशयेनाह-**देहेन्द्रियादी**ति। एवं सत्यंशद्वयं सिद्धमित्याह-**अतोऽस्ति च नास्ति च स एवात्मेति**। अवक्तव्यमंशम्भावयति-**द्रव्येति,** द्रव्यसामान्यं सत्त्वं पर्यायसामान्यमसत्त्वं ताभ्यामित्यर्थः। यत उक्तन्यायेन सप्तैव धर्मा एकस्य विधिनिषेधाभ्यां विवक्षया सम्भवन्ति, ततः सप्तधैव वचनप्रवृत्तिरिति सप्तभङ्ग्येव नाष्टभङ्ग्यादीत्याह-**नान्यथाऽपीति,** नाष्टधा नवधेत्याद्यपि क्वापि वचनप्रवृत्तिरित्यर्थः। तत्र हेतुः-**प्रवृत्तिनिमित्ताभावादिति,** वचनप्रवृत्तिनिमित्तानां सप्तानामेव धर्माणां भावेन ततोऽधिकानामभावादित्यर्थः। इयं दर्शिता सप्तभङ्गी द्रव्यपर्यायनयसमाश्रिता, द्रव्यपर्यायनयौ चात्रार्थविषयकौ ज्ञेयौ, ततश्च सङ्ग्रहव्यवहारर्जुसूत्रनयाश्रिता प्रकृता सप्तभङ्गीति दर्शयति-**एष चेति,** उपदर्शितप्रकारसमाश्रयश्चेत्यर्थः। **तौ च** द्रव्यार्थपर्यायार्थौ च। **प्रधाविता** विकल्पिताः, अर्थनयरूपाः शब्दनयरूपाश्चेति यावत्। प्रकृतेयं सप्तभङ्गी अर्थनयसमाश्रितेत्याह-**तत्रेति**। अर्थनया अर्थप्रधाना अर्थमभिमुखीकृत्य तज्ज्ञानं जनयन्तीत्यर्थपृष्ठभावेनार्थगमका उच्यन्ते, तज्जनितज्ञानञ्च मतिज्ञानम्, शब्दाज्जायमानमपि तच्छब्दव्यापारगौणभावान्न श्रुतज्ञानम्। वक्तुर्यद्वाक्यरचनानुकूलं वाक्यार्थयथार्थज्ञानम्प्रमाणान्तरोपजनितं तद्विषयविषयकत्वमेवार्थनयानामित्युपदर्शयति-**अनपेक्षितोपदेशकशब्दव्यापारमिति**। प्रकृते च सप्तभङ्गीजन्यज्ञानस्य नेन्द्रियनिमित्तत्वं किन्त्वनिन्द्रियमनोनिमित्तत्वम्। **अर्थरूपोत्पादितं** यथाऽर्थस्वरूपं तथैव तज्जनितं तज्ज्ञानम्, अर्थनयोत्थत्वादर्थरूपोत्पादितमित्यभिमतमतोऽर्थनयस्यार्थाभिमुख्येनैवार्थगमकत्वमुपपादनीयमित्याशयेन तदुपपादयति-**अर्थनया वक्तृपरिच्छेदविषया** इति, वक्तृज्ञानविषयविषया अर्थनया इत्यर्थः; वक्त्रा परिच्छेदो निर्णयो यस्यार्थस्य स वक्तृपरिच्छेदः स विषयो येषां ते तथेत्येवं समासाश्रयणेन तथालाभादिति बोध्यम्। **ते तु** अर्थनयाः पुनः। तथा चार्थनयेनैवार्थावबोधिका सप्तभङ्गी अर्थशुद्धिप्रवणा विभा-

तिकसमभिरूढैवंभूतनयाः श्रोतृविषयाः श्रुतज्ञानात्मकाः शब्दरूपरूपितविज्ञानत्वाच्छब्दप्रमाणकाः, यच्छब्द आह यथा च तथैवार्थ इति शब्दपृष्ठेनार्थपरिच्छेदं कुर्वन्ति, अत एवैतेष्वभिधानस्वरूपशुद्धिपरा चिन्ता, चक्षुर्विमलीकरणाञ्जनवत्। तत्रार्थनयाः सत्त्वासत्त्ववर्तमानसत्त्वमात्रैरूपिणः प्रत्येकात्मकाः संयुक्ताश्च सप्तविधवचननिर्वचनप्रत्यलाः। विविक्तसत्त्वमात्रपरिग्रहात् सत्त्वसङ्ग्रहः, अन्यासत्त्वमेव सत्त्वमिति व्यवहारः, वर्तमानप्रधानत्वाद् वर्तमानमेव सत्त्वमृजुसूत्रः। तत्र स्यादस्तीति सङ्ग्रहः १ स्यान्नास्तीति व्यवहारः २ सङ्ग्रहव्यवहारयोगात् स्यादवक्तव्यः ३ सङ्ग्रहव्यवहारविभागसंयोगादेव स्यादस्ति च नास्ति च ४ स्यादस्त्यवक्तव्यश्चेत्यत्र सङ्ग्रहः सङ्ग्रहव्यवहारौ चाविभक्तौ ५ स्यान्नास्त्यवक्तव्यश्चेत्यत्र व्यवहारः सङ्ग्रहव्यवहारौ चाविभक्तौ ६ स्यादस्ति नास्त्यवक्तव्यश्चेत्यत्र विभक्तौ सङ्ग्रहव्यवहारावविभक्तौ वा ७ इत्येवमर्थपर्यायैः सप्तधा वचनव्यवहारः। व्यञ्जनपर्यायाः शब्दनयाः, ते ऽभेदभेदद्वारेण वचनमिच्छन्ति, शब्दनयस्तावत् समानलिङ्गानां समानवचनानां च शब्दानामिन्द्रशक्रपुरन्दरादीनां वाच्यं भावार्थमेवाभिन्नमभ्युपैति, न जातुचिद् भिन्नलिङ्गं भिन्नवचनं वा शब्दं स्त्री दारास्तथाऽऽपो जलमिति, समभिरूढस्तु प्रत्यर्थं शब्दनिवेशादिन्द्रशक्रादीनां पर्यायशब्दत्वं न प्रतिजा-

---

नीयेत्यभिसन्धि। प्रसङ्गागतशब्दनयस्वरूपमुपदर्शयति–**शब्दनयास्त्विति**। अथवाऽर्थशुद्धिप्रवणाया सप्तभङ्ग्या शब्दनयानामनुपयोगस्तत्स्वरूपावबोधमन्तरेण ज्ञातुं न शक्य इत्यतस्तत्स्वरूपमुपदर्शयति–**शब्दनयास्त्विति**। **श्रोतृविषया** इति, श्रोत्रा यथा शब्दपृष्ठभावेनार्थोऽवबुध्यते तथैव साम्प्रतिकादीनामवबोधकत्वेन श्रोतृपदेन श्रोतृज्ञानविषयो लक्ष्यते, एवं च श्रोतृज्ञानविषयविषया इत्यर्थः। कथमेतेषा श्रुतज्ञानात्मकत्वमित्यपेक्षायामाह–**शब्दरूपेति**। एतदेव प्रपञ्चयति–**यच्छब्द आहेति**। **अत एवेति**, यतश्चैषा शब्दनयत्वमत एवेत्यर्थः। **एतेषु** साम्प्रतिकसमभिरूढैवम्भूतेषु। **चक्षुरिति**, चक्षुर्हि न ज्ञानं किन्तु ज्ञानकरणं तथापि चक्षुषो विमलीकरणेन तज्ज्ञानमेव विमलीकृतं भवति, तथाऽभिधानस्य न ज्ञानत्वं किन्तु ज्ञानकरणत्वं तथापि तद्विमलीकरणे तज्जनितज्ञानमेव विमलं सम्पद्यत इति तत्स्वरूपशुद्धिपरा चिन्ता फलवती भवत्येव। अर्थनयशब्दनयावुपदर्श्यार्थनयाना सप्तभङ्गीप्रत्यलत्वमाविष्करोति–**तत्रेति**। **सत्त्वासत्त्वे**त्यादि, मात्रपदेन सत्त्वादीना प्रत्येकमन्वयात् सत्त्वमात्रासत्त्वमात्रवर्तमानसत्त्वमात्राभ्युपगमपरा इत्यर्थः। प्रत्येकात्मका इति, सत्त्वमात्राभ्युपगमपर केवल सग्रहनयो वर्त्तमानसत्त्वमात्राभ्युपगमपरः केवल ऋजुसूत्रनयश्च प्रथमभङ्गप्रवर्तकः, असत्त्वमात्राभ्युपगमपर. केवलो व्यवहारनयश्च द्वितीयभङ्गनिर्वर्तक। **संयुक्ताश्चेति**, सयुक्तौ सग्रहव्यवहारौ ऋजुसूत्रव्यवहारौ च तृतीयादिसप्तमभङ्गान्तपञ्चभङ्गप्रवर्त्तका.। सङ्ग्रहादीना विविक्तं विषयमुल्लिखति–**विविक्तेति**। सप्तभङ्ग्या यस्य भङ्गस्य यथा यन्नयमूलकत्वं तथा तदुपदर्शयति–**तत्रेति**। **सङ्ग्रहव्यवहारयोगाद्** अविभक्तसग्रहव्यवहारसयोगात्। **विभागसंयोगात्** विभक्तसंयोगात्। **सङ्ग्रहः** स्यादस्तीत्यंश सङ्ग्रह', अवक्तव्य इत्यंशश्च अविभक्तौ सङ्ग्रहव्यवहारौ, **व्यवहारः** स्यान्नास्तीत्यंशो व्यवहार, अवक्तव्य इत्यशश्च अविभक्तौ सग्रहव्यवहारौ, स्यादस्ति इति सङ्ग्रह स्यान्नास्ति इति व्यवहार इत्येवं द्वावशौ विभक्तौ सग्रहव्यवहारौ, अवक्तव्यश्चेत्यंश, अविभक्तौ सङ्ग्रहव्यवहारौ। **इत्येवम**मुना प्रकारेण। **अर्थपर्यायैः**, अर्थनयाभ्युपगतार्थपर्यायै सत्त्वासत्त्वादिधर्मैः। शब्दनयैर्वचनव्यवहारमुपदर्शयितुमाह–**व्यञ्जनपर्यायाः शब्दनया** इति, व्यज्यतेऽर्थोऽनेनेति व्यञ्जनं शब्दः तत्सम्बन्धिन पर्याया विषयतया येषा ते तथा, व्यञ्जनपर्यायविषया इत्यर्थः, **ते** शब्दनया.। **अभेदभेदद्वारेणेति**, कश्चिदभेदद्वारेण, कश्चित्पुनर्भेदद्वारेण, **वचनं** शब्दमिच्छन्ति, अभिन्नार्थकत्वं शब्दानामभ्युपैति कश्चित्, अर्थादभिन्नलिङ्गवचनादीनामभिन्नार्थकत्वमिच्छति, भिन्नलिङ्गवचनादीनाञ्च तत्त्व नेच्छति, इत्यभेदद्वारेण वचनमिच्छतीत्यस्य फलितोऽर्थ. कश्चित्तु पर्यायतया प्रसिद्धानामपि भिन्नार्थकत्वमेवाभ्युपैति शब्दाना पर्यायता नेच्छति, इति भेदद्वारेण वचनमिच्छतीत्यस्यार्थ.। तत्राभेदद्वारेण वचनाभ्युपगमपरः शब्दनय इत्याह–**शब्दनयस्तावदिति**। **भावार्थमेवेति**, नामस्थापनाद्रव्यभावेष्वर्थेषु सत्सु तत्र भावार्थमेवाभिन्नमेकमभ्युपगच्छति, एवकारेण नामस्थापनाद्रव्याणा व्यवच्छेद.। **समानलिङ्गानां समानवचनाना**मित्यनयोर्व्यवच्छेद्यमाह–**न जातुचिदिति**, स्त्रीदारशब्दयोर्भिन्नलिङ्गत्वमप्यस्ति, भिन्नवचनत्वमप्यस्ति एवमप्जलशब्दयोरपि, तयोर्नाभिन्नार्थत्वमभ्युपगच्छति शब्दनय। भेदद्वारेण वचनाभ्युपगमपर. समभिरूढ इत्युपदर्शयति–**समभिरूढस्त्विति**। एतन्मते व्युत्पत्तिनिमित्तमेव

नीते, अत्यन्तभिन्नप्रवृत्तिनिमित्तत्वाद् भिन्नार्थत्वमेवानुमन्यते घटशक्रादिशब्दानामिवेति; एवंभूतः पुनर्यथासद्भावं वस्तु वचसो गोचरमापृच्छति, इच्छति—चेष्टाविष्ट एवार्थो घटशब्दवाच्यश्चित्रालेखनोपयोगपरिणतश्च चित्रकारः, चेष्टारहितस्तिष्ठन् घटो न घटशब्दवाच्यः, तच्छब्दार्थरहितत्वात् कुटशब्दवाच्यार्थवत्, नापि भुञ्जानः शयानो वा चित्रकाराभिधानाभिधेयश्चित्रज्ञानोपयोगपरिणतिशून्यत्वाद् गोपालादिवत्, एवमभेदभेदार्थवाचिनोऽनेकैकशब्दवाच्यार्थावलम्बिनश्च शब्दप्रधाना अर्थोपसर्जनाः शब्दनयाः प्रदीपवदर्थस्य प्रतिभासका व्यञ्जनपर्यायसंज्ञकाः । तदेवमर्थव्यञ्जनपर्यायार्पणानर्पणद्वारैकानेकात्मकैकार्थनिरूपणवदभिधानप्रत्ययविषयाऽपि भावनाऽभिधेया । तत्र पुद्गलद्रव्यपरिणतिविशेषः शब्दोऽभिधानः, पुद्गलद्रव्यं चातीतवर्तमानागामिभूरिपर्यायपरिणाम्यर्पितानर्पितभजनापेक्षया सदसन्नित्यानित्याद्यनेकधर्मात्मकम्, प्रत्ययोऽपि हि ग्रहणलक्षणात्मद्रव्यांशापेक्षया सङ्ख्यापरिमाणाकाराद्यनेकरूपपर्यायापेक्षया च सदसन्नित्यानित्यादिस्वभाव इत्येवं सदसन्नित्यानित्यादिस्वभावं जगत् पञ्चास्तिकायात्मकमर्पितानर्पितलक्षणसकलशास्त्रगर्भत्रिसूत्रीविन्यासस्याद्वादप्रक्रियासङ्गतेः सिद्धम् ॥ ३१ ॥

---

प्रवृत्तिनिमित्तं, तच्चेन्द्रशक्रादीनां भिन्नमेवेति भिन्नार्थत्वमेवैषामित्याह—**अत्यन्तभिन्नप्रवृत्तिनिमित्तत्वादिति**। येषां प्रवृत्तिनिमित्तभेदस्तेषां भिन्नार्थत्वमित्यत्रोभयप्रसिद्धं दृष्टान्तमाह—**घटशक्रादीनामिवेति**। व्युत्पत्तिनिमित्ताविष्ट एव शब्दस्यार्थो न तु तच्छून्यकालीनस्तदुपलक्षित इत्यभ्युपगमपर एवम्भूतोऽपि भेदद्वारेण वचनाभ्युपगन्तेत्याह—**एवम्भूत** इति। व्युत्पत्तिनिमित्तानारूषितं नेच्छतीति स्पष्टयति—**चेष्टारहित** इति, अनेन च परार्थानुमानरूपं प्रमाणमत्रार्थे उपनिबद्धं श्रोतॄणां सन्तोषाय। एषां शब्दप्राधान्यार्थोपसर्जनत्वाभ्यां व्यञ्जनपर्यायसंज्ञकत्वमित्युपसंहारद्वारा स्पष्टयति—**एवमि**त्यादिना, अभेदार्थवाच्यनेकशब्दवाच्यार्थावलम्बी शब्दनयः, भेदार्थवाच्येकशब्दवाच्यार्थावलम्बिनौ समभिरूढैवम्भूतौ, ते च शब्दप्रधाना नियतलिङ्गत्वनियतवचनत्वादीनां शब्दगतत्वात्तदाश्रयणेन शब्दनयप्रवृत्तिः। एवं व्युत्पत्तिनिमित्तमपि शब्दनिर्वचनमपेक्ष्यैव भवति, तदाश्रयेण च समभिरूढैवम्भूतयोः प्रवृत्तिरिति शब्दप्रधानत्वं स्पष्टमेव। शब्दपृष्ठभावेनार्थप्ररूपकत्वादर्थोपसर्जनाः, यथा—दीपो घटादीनभिव्यञ्जयति एवमेतेऽर्थानभिव्यञ्जयन्तीत्याह—**प्रदीपवदिति**। एवं चार्थपर्यायार्पणव्यञ्जनपर्यायानर्पणाभ्यां व्यञ्जनपर्यायार्पणार्थपर्यायानर्पणाभ्याञ्चैकानेकात्मकैकार्थनिरूपणवत्तथाविधशब्दनिरूपणं तथाविधावबोधनिरूपणमपीति शब्दपर्यायाश्रयणेन तदवबोधपर्यायाश्रयणेन च सप्तभङ्गप्रवृत्तिरुपपत्तिपद्धतिमासादयतीत्याह—**तदेवमिति**। तत्र शब्दं धर्मीकृत्य सप्तभङ्ग्युपपत्तये शब्दस्यानेकधर्मात्मकत्वमुपपादयति—**तत्रेति**। अवबोधं धर्मीकृत्य सप्तभङ्ग्युपपत्तये अवबोधस्यानेकधर्मात्मकत्वमुपपादयति—**प्रत्ययोऽपीति**। त्रिसूत्रीव्याख्यानपरिसमाप्तिमुपसहरति—**एवमिति** ॥ ३१ ॥ शुभं भवतु ॥

इति श्रीतपोगच्छाधिपतिशासनसम्राड्जगद्गुरुश्रीविजयनेमिसूरीश्वरपट्टालङ्कारव्याकरणवाचस्पतिशास्त्रविशारदकविरत्नविजयलावण्यसूरिविरचिता तत्त्वार्थत्रिसूत्रीप्रकाशिका समाप्ता ॥

छद्मस्थेषु सदा स्खलद्गतितया दोषप्रबन्धान्वये, नो हास्यास्पदमत्र दोषघटनायां स्यामहं धीमताम् ।
नो प्रार्थ्याः कृतिनो निसर्गगरिमात्रासा मया शोधने, येषां दोषगणप्रमार्जनविधिः स्वाभाविकोऽयं यतः ॥ १ ॥





# ❋प्र❋श❋स्तिः❋

[ उपजातिवृत्तम् ]

श्रीनाभिजातं शुभशान्तिनाथं, सुभव्यराजीनयनामृतं च ।
प्रकाशिपं श्रीशुभवर्द्धमानं, नमामि नित्यं जिनराजराजम् ॥ १ ॥

[ शार्दूलविक्रीडित-वृत्तानि ]

लोकालोकविलोकिनो जिनपतेः, दूरीकृतांहस्ततेः ।
सोल्लासैरमराधिपैः कृतनतेः, सूर्यातिगाङ्गद्युतेः ॥
गीरीशस्य च नश्र शासनपतेः, सिद्धार्थसत्सन्ततेः ।
पट्टं धर्मधुरन्धरं विजयते, वीरप्रभोः सन्मतेः ॥ २ ॥
तत्र श्रीश्रुतकेवली गणिमणि-श्चारित्रचूलामणिः ।
निर्ग्रन्थाभिधमच्छगच्छमतनोत्, स्वामी सुधर्माभिधः ॥
कोटीशः किल सूरिमन्त्रकलनात्, कोटीति नाम्नोज्वलं ।
गच्छञ्चाच्छमतिश्च सुस्थित इति, श्रीसूरिपोऽनु व्यधात् ॥ ३ ॥
चन्द्रं चन्द्रकलाकलापधवलं, भूयोयशोमालिनं ।
गच्छञ्चानुचकार चारुचरणः, श्रीचन्द्रसूरीश्वरः ॥
तत्रैवानु च सूरिराट् शमनिधिः सामन्तभद्राभिधः ।
व्यातेने वनवासिगच्छममलं, लीनं गुणानां गणे ॥ ४ ॥
संतापापहरं समाश्रितनृणां, शाखावलीलालितं ।
दीक्षादानशुभास्पदं सुचरणा-बद्धं विशालोन्नतम् ॥
श्रेयांसं वटगच्छमच्छमतुलं, सत्पुण्यपण्यापणम् ।
आचार्याधिप आततान तदनु, श्रीसर्वदेवाभिधः ॥ ५ ॥
भूपालेन च मेदपाटपतिना दृष्ट्वा तपो दुष्करं ।
सान्वर्थं च महातपा इति पदं यस्मै ददे सम्मदात् ॥
पुण्यात्मा विदधे ततः स च जग-च्चन्द्राभिधः सूरिराट् ।
पथं प्रष्ठगुणालयं किल तपा-गच्छं सदच्छाशयम् ॥ ६ ॥
गच्छेऽस्मिंश्च परम्परागतमहो-वैशद्यलीलालये ।
श्रद्धाचारचितां कुलालयमये, राद्धान्तमार्गाध्वगे ॥
श्रीहीरेण जिनेन्द्रशासनशिरो-हीरेण धीरेण च ।
भूपालाकबरप्रबोधनकृता, पुण्यात्मना सूरिणा ॥ ७ ॥
मोहेलापतिपाटने पटुतमे, सद्धर्मसेनाकरे ।
श्रीसेनेन च सैनिकेन गुणिना, श्रेयोऽर्थिना सूरिणा ॥
श्रीदेवेन च सूरिणा विबुधता-स्फातिं परां बिभ्रता ।
श्रीसिंहेन च पापनागहरिणा, श्रीसूरिणोल्लासिते ॥ ८ ॥

पृथ्वीं पादप्रचारतो विदधतो, ध्वस्तान्धकारां वरां ।
निर्मातुः शमसागरोदयरमां, सद्वृत्तताशालिनः ॥
सत्सौम्याकृतिमालिनः कुवलया-ऽऽनन्दं ददानस्य च ।
साधोस्तारकपस्य वृद्धिविजया-भिख्यस्य वै सद्गुरोः ॥ ९ ॥
पादाम्भोजरजोमरन्दमधुपो, विद्याविलासालयो ।
भूपालावलिमौलिलालितपदा-म्भोजो जनानन्ददः ॥
उच्चाचारप्रचारप्रोद्यतमना, नानामुनीनां गुरुः ।
उद्वोढाऽऽगमयोगमुख्यविधिना, प्रस्थानपञ्चत्परः ॥ १० ॥
स्वं चान्यं समयं सदा सहृदयं विद्वांश्च दिव्याकृतिः ।
नित्यं धर्मकथाविधौ विलसता, माधुर्यमाविभ्रता ॥
गम्भीरध्वनिना घनाघनरवं, हास्यास्पदं कुर्वता ।
तारेणाखिलभव्यकेकिनिकरा-ऽऽनन्दं ददानः सना ॥ ११ ॥
तीर्थानामवने समुद्धृतिकृतौ, लीनान्तरालः सदा ।
शीलं शैशवतोऽमलं च कलय-न्नाचार्यचूलामणिः ॥
सम्राट् श्रीजिनशासनस्य वसतिः, प्रौढप्रतापश्रियो ।
राराजीतितरां जगद्गुरुरयं श्रीनेमिसूरीश्वरः ॥ १२ ॥

[ वसन्ततिलकावृत्ते ]

ईडे सुदर्शनधरं पुरुषोत्तमं तं, मैत्रीयुत समुदयश्रियमादधानम् ।
सच्चन्दनं सुमनसामनुरागचङ्गं, विज्ञानतामरसतामरसाकरं च ॥ १३ ॥
भव्यालिपङ्कविकलं जडतातिगं च, नित्यं पुनानमखिलं किल साधुपद्मम् ।
सन्दर्शितामृतपथं वरदेशनातो, लावण्यमन्दिरमुदारमनोऽभिरामम् ॥ १४ ॥

[ उपजातिवृत्ते ]

नम्यं नरेन्द्रैः सुजयन्तमार्य-दक्षं सुशीलोच्चविशुद्धचित्तम् ।
कल्याणभृत्केवलनामधेय-जिनप्रभोल्लासितभावविज्ञम् ॥ १५ ॥
सच्चन्दनं सज्जनतापहारं, प्रौढप्रभावं विबुधार्चितं च ।
सन्मङ्गलं सच्चरणादिकान्तं, मतीशमान्यं गुणराजिरम्यम् ॥ १६ ॥

[ शार्दूलविक्रीडितवृत्तम् ]

तस्यानल्पगुणस्य नेमिसुगुरोः, सत्पट्टपद्माकरे ।
लावण्येन कजेन राजनगरे, वर्षास्थितिं कुर्वता ॥
अङ्काङ्काङ्ककुकान्तविक्रमयुगे जैनागमोल्लासभृत्- ।
तत्त्वार्थस्य प्रकाशिका किल कृता, टीका त्रिसूत्र्या वरा ॥ १७ ॥

[ स्रग्धरावृत्तम् ]

उत्पादध्रौव्यनाशा युगपदनुगता नीतिभेदव्यपेक्षाः ।
सत्ता स्याद्वादकान्ताऽखिलविषयगताऽबाधितैकान्ततन्त्रैः ॥
संक्षेपेण त्रिसूत्र्या प्रमितिनयमिलद्व्याप्यवृत्त्युक्तयुक्त्या ।
वीरोक्त्या च त्रिपद्या गणधरधृतया भान्त्यतो भातु भूत्यै ॥ १८ ॥

